माणिकचन्द्र-दि०-जैनग्रन्थमालायास्त्रिंशतितमो ग्रन्थः ।

# श्रीमद्रविषेणाचार्यकृतं पद्मचरितम् ।

(द्वितीयखण्डं ।)

न्यायतीर्थपण्डितदरबारीलालेन साहित्यरत्नेन संशोधितम् ।

प्रकाशिका—माणिकचन्द्र-दिगम्बर-जैनग्रन्थमाला-समितिः ।

चैत्र, वीर नि० सं० २४५५, वि० सं० १९८५

मूल्यं रूप्यकद्वयम् ।

# द्वितीयखंडस्य पर्वसूची ।



# षड्विंशातितमं पर्व ।

अतो जनकसंबंधं शृणु श्रेणिक ते परं । निवेदयामि यद्वृत्तं भवावहितमानस ॥ १ ॥
भामिनी जनकस्यासीद्विदेहा नाम सुंदरी । गर्भनिर्वेदनं तस्याः प्रत्यैक्षित चिरं सुरः ॥ २ ॥
जगाद श्रेणिको नाथ तं गर्भं केन हेतुना । देवो ररक्ष विज्ञातुमेतमिच्छामि शिष्यतां ॥ ३ ॥
उवाच गौतमो राजा नाम्ना चक्रध्वजोऽभवत् । स्थाने चक्रपुराभिख्ये भार्या तस्य मनस्विनी ४
तयोश्चित्तोत्सवापत्यं कन्या गुरुगृहे च सा । रराज सितमृल्लेखैर्लेखनी कर्णपूरिका ॥ ५ ॥
राज्ञां पुरोहितस्यास्य धूमकेशस्य पिंगलः । स्वाहाकुक्षिभवोधीते सुतस्तत्रैव पाठके ॥ ६ ॥
विद्यालाभस्तयोर्नासीदन्योन्यहृतचेतसोः । विद्याधर्मावगाहश्च जायतेवहितात्मनां ॥ ७ ॥
पुरासंसर्गतः प्रीतिः प्राणिनामुपजायते । प्रीतितोभिरतिप्राप्तीरतेर्विस्रंभसंभवः ॥ ८ ॥
सद्भावात्प्रणयोत्पत्तिः प्रेमैवं पंचहेतुकं । दुर्मोचं वध्यते कर्म पातकैरिव पंचभिः ॥ ९ ॥
अथासौ ज्ञातसद्भावा तेन चित्तोत्सवा रहः । ह्रियतेस्म महारूपा कीर्तिदुर्यशसा यथा ॥ १० ॥
दूरं देशं यथाऽनायि तदाज्ञायि सुबंधुभिः । हृता प्रमाददोषेण मोहेन सुगतिर्यथा ॥ ११ ॥

कन्यया मुदितश्चौरः पिंगलो धनवर्जितः । न विभाति यथा लोभी तृष्णया धर्मवर्जितः ॥१२॥
विदग्धनगरं चापदुर्गमं परराष्ट्रिणां । वहिः कृत्वा कुटीं तत्र तस्थौ निस्वकपाटकः ॥ १३ ॥
ज्ञानविज्ञानरहितस्तृणकाष्ठादिविक्रयात् । अनुरक्षति तां पत्नीं मग्नो दारिद्र्यसागरे ॥ १४ ॥
पुत्रः प्रकाशसिंहस्य परराष्ट्रभयंकरः । जातोत्र प्रवरावल्यां राजा कुंडलमंडितः ॥ १५ ॥
तेन दृष्टान्यदा बाला निर्यातेन कथंचन । हतश्च पंचभिर्बाणैर्मारस्याभूत्सुदुःखितः ॥ १६ ॥
प्रच्छन्नं प्रेषिता दूती तया रात्रौ नृपालयं । यथासीत्कमलामेला सुमुखस्य प्रवेशिता ॥ १७ ॥
तया सह सुखं रेमे प्रीतः कुंडलमंडितः । उर्वश्या सह संरक्तो यथासीन्नलकूवरः ॥ १८ ॥
ततः स पिंगलाख्योऽपि श्रांतः स्वगृहमागमत् । तामपश्यद्विशालाक्षीं मग्नो वैधुर्यसागरे ॥ १९ ॥
विस्तीर्णेन किमुक्तेन सोयं विरहदुःखितः । न क्वचिल्लभते सौख्यं चक्रारूढ इवाकुलः ॥ २० ॥
हृतभार्यो द्विजो दीनस्तं राजानमुपागमत् । ऊचे चान्विष्य मे राजन् पत्नी केनापि चोरिता २१
भीषितानां दरिद्राणामार्तानां च विशेषतः । नारीणां पुरुषाणां च सर्वेषां शरणं नृपः ॥ २२ ॥
अमात्यं धूर्तमाहूय समायं पार्थिवोऽब्रवीत् । चिराय मा कृथा माम जायाऽस्यान्विष्यतामिति २३
जगादेति च तत्रैकः सविकारेण चक्षुषा । सा दृष्टा पथिकैर्देव पौदनस्थानवर्त्मनि ॥ २४ ॥

क्षांत्यार्यावृंदमध्यस्थां तपःकर्तुं समुद्यतां । विनिवर्तयतां क्षिप्रं किं विरौषि व्रज द्विज ॥ २५ ॥
कोवा प्राव्रज्यकालोस्या दधत्यास्तरुणीं तनुं । वरस्त्रीगुणपूर्णाया हरंत्यास्तरुणं जनं ॥ २६ ॥
इत्युक्ते द्विज उत्थाय बद्ध्वा परिकरं दृढं । दधाव रंहसा विद्धो भ्रष्टाश्वतरको यथा ॥ २७ ॥
पोदने नगरेऽन्विष्य चैत्येषूपवनेषु च । अदृष्ट्वा पुनरागच्छाद्विदग्धनगरं द्रुतं ॥ २८ ॥
नृपाज्ञया नरैः क्रूरर्गलघातैः स तर्जनैः । यष्टिलोष्टप्रहारैश्च दूरं निर्वासितो भृशं ॥ २९ ॥
स्थानभ्रंशं परिक्लेशमवमानं वधं तथा । अनुभूय परं दीर्घमध्वानं स प्रपन्नवान् ॥ ३० ॥
रतिं न लभते क्वापि रहितः प्रियया तथा । शुष्यत्यहनि रात्रौ च पतितोग्राविवोरगः ॥ ३१ ॥
विशालपंकजवनं दावाग्निमिव पश्यति । सरोऽपि ग्राहमानोऽसौ दह्यते विरहाग्निना ॥ ३२ ॥
एवं सुदुःखितमतिः पर्यटन् पृथिवीतले । नगरस्य स्थितं दूरं ददर्श गगनांबरं ॥ ३३ ॥
आचार्यमार्यगुप्तिं च समेत्य रचितांजलिः । प्रणम्य शिरसा हृष्टो धर्मं शुश्राव तत्त्वतः ॥ ३४ ॥
श्रुत्वा धर्मं मुनेः प्राप्तः स वैराग्यमनुत्तमं । प्रशशंस जिनेंद्राणां शासनं शांतमानसः ॥ ३५ ॥
अहो परममाहात्म्यो मार्गोयं जिनदेशितः । ममांधकारयातस्य यो भास्कर इवोदितः ॥ ३६ ॥
प्रपद्येहं जिनेंद्राणां शासनं पापनाशनं । देहं निर्वापयाम्यद्य दग्धं विरहवह्निना ॥ ३७ ॥

ततः संवेगमापद्य गुरुणात्यनुमोदितः । कृत्वा परिग्रहत्यागं दीक्षां दैगंबरीमितः ॥ ३८ ॥
तथापि विहरन् क्षोणीं सर्वसंगविवर्जितः । चित्तोत्सवां समुत्कंठां जातुचित्प्रतिपद्यत ॥ ३९ ॥
सरित्पर्वतदुर्गेषु श्मसानेष्वटवीषु च । वसन् स परमं चक्रे तपो विग्रहशोषणं ॥ ४० ॥
न यस्य जलधेर्ध्वांते काले खेदं गतं मनः । हेमंते हिमपंकेन वपुर्यस्य न कंपितं ॥ ४१ ॥
पूष्णोर्यस्य करैरुग्रैस्तापोऽणुरपि नो कृतः । स्मृत्वा सीदत्सतां जातु स्नेहस्य किमु दुष्करं ॥४२॥
दह्यमानं तथाप्येष शरीरं विरहाग्निना । पुनर्विध्यापयज्जैनवचनोत्करसीकरैः ॥ ४३ ॥
अर्धदग्धतरुच्छायं तत्तस्य वपुरागतं । रमणीस्मरणेनोग्रतपसा च निरंतरं ॥ ४४ ॥
आस्तां तावदिदं वक्ष्ये मंडितस्याधुनेहितं । कथा ह्यंतरयोगेन स्थिता रत्नावली यथा ॥ ४५ ॥
अनरण्ये च राज्यस्थे वृत्तमेतान्निबुध्यतां । कथानुक्रमयोगेन कथ्यमानमतः शृणु ॥ ४६ ॥
स्थानं दुर्गं समाश्रित्य मंडितेन वसुंधरा । विरोधितानरण्यस्य कुशीलेन यथास्थितेः ॥ ४७ ॥
देशा उद्वासितास्तेन दुर्जनेन गुणा यथा । विरोधिताश्च सामंता कषाय इव योगिना ॥ ४८ ॥
नाशक्नोदनरण्यस्तं गृहीतुं क्षुद्रमप्यलं । आखोर्गिरिविलस्थस्य किं करोति मृगाधिपः ॥ ४९ ॥
नक्तं दिवमशुष्यत्स तत्परो जयचिंतया । अनादरेण शारीरमपि कर्म प्रपन्नवान् ॥ ५० ॥

ततोसौ बालचंद्रेण सेनान्या जात्वभाष्यत । उद्विग्न इव कस्मात्त्वं सततं नाथ लक्ष्यसे ॥ ५१ ॥
उद्वेगकारणं भद्र मम मंडितकः परं । इत्युक्ते बालचंद्रेण प्रतिज्ञेयं समाश्रिता ॥ ५२ ॥
राजन्न साधयित्वा तं पापं मंडितकं तव । सकाशं नागमिष्यामि व्रतमेतन्मया कृतं ॥ ५३ ॥
इति राज्ञः पुरः कृत्वा संगरं रोषमुद्वहन् । बलेन चतुरंगेण सेनानी गंतुमुद्यतः ॥ ५४ ॥
चित्तोत्सवासमायुक्तचित्तो मुक्तान्यचेष्टितः । प्रमादबहुलो भिन्नमूलभृत्पक्षतायतिः ॥ ५५ ॥
अज्ञातलोकवृत्तांतो मंडितः खंडितोद्यमः । हेलया बालचंद्रेण गत्वा बद्धो मृगो यथा ॥ ५६ ॥
गृहीतबलराज्यं तं निर्वास्य विषयात्कृती । बालचंद्रोऽनरण्यस्य समीपं पुनरागमत् ॥ ५७ ॥
ततस्तेन सुभृत्येन कृतसुस्थवसुंधरः । परं प्रमोदमापन्नोऽनरण्यः सुखमन्वभूत् ॥ ५८ ॥
शरीरमात्रधारी तु मंडितः पादचारकः । पर्यटन् धरणीं दुःखी पश्चात्तापसमाहतः ॥ ५९ ॥
परिप्राप्याश्रमपदं श्रमणानां महात्मनां । नत्वा च शिरसाचार्यं धर्मं पप्रच्छ भावतः ॥ ६० ॥
दुःखितानां दरिद्राणां वर्जितानां च बांधवैः । व्याधिसंपीडितानां च प्रायो भवति धर्मधीः ६१
प्राव्रज्ये यस्य भगवन्, शक्तिर्जंतोर्न विद्यते । परिग्रहपरस्यास्य धर्मः कश्चिन्न विद्यते ॥ ६२ ॥
कथं वा मुच्यते पापैश्चतुःसंज्ञापरायणः । एतादिच्छामि विज्ञातुं प्रसीद व्याकुरुष्व मे ॥ ६३ ॥

गुरुः प्रोवाच वचनं धर्मः प्राणिदया स्मृता । मुच्यंते देहिनः पापैरात्मनिंदाविगर्हणैः ॥ ६४ ॥
हिंसायाः कारणं घोरं शुक्रशोणितसंभवं । पिशितं मा भक्षय त्वं शुद्धं चेद्धर्ममृच्छसि ॥ ६५ ॥
प्राणिनां मृत्युभीरूणां मांसैश्चर्मप्रसेविकां । पूरयित्वा ध्रुवं याति नरकं पापमानवः ॥ ६६ ॥
शिरसो मुंडनैः स्नानैर्विलिंगग्रहणादिभिः । नास्ति साधारणं जंतोर्मांसभक्षणकारिणः ॥ ६७ ॥
तीर्थस्नानानि दानानि सोपवासानि देहिनः । नरकान्न परित्राणं कुर्वंति पिशिताशिनः ॥६८॥
सर्वजातिगता जीवा बांधवाः पूर्वजन्मसु । स्युरमी भक्षितास्तेन मांसभक्षणकारिणा ॥ ६९ ॥
पक्षिमत्स्यमृगान् हंति परिपथं च तिष्ठति । यो नरोऽस्मादपि क्रूरान् मधुमांसाद्गतिं व्रजेत्॥७०॥
न वृक्षाज्जायते मांसं नोद्भिद्य धरणीतलं । नांभसः पद्मवन्नापि सद्द्रव्येभ्यो यथौषधं ॥ ७१ ॥
पक्षिमत्स्यमृगान् हत्वा वराकान् प्रियजीवितान् । क्रूरैरुत्पाद्यते मांसं तन्नाश्नंति दयापराः ॥७२॥
शून्येन वर्धितं यस्यां शरीरं तां मृतां सतीं । माहिषीं मातरं कष्टं भक्षयंति नराधमाः ॥ ७३ ॥
माता पिता च पुत्रश्च मित्राणि च सहोदराः । भक्षितास्तेन यो मांसं भक्षयत्यधमो नरः ॥७४॥
इतः क्ष्मापटलं मेरोरधस्तात्सप्तमं स्मृतं । तत्र रत्नप्रभाभिख्ये देवा भवनवासिनः ॥ ७५ ॥
सकषायं तपः कृत्वा जायंते तत्र देहिनः । देवानामधमास्ते तु दुष्टकर्मसमन्विताः ॥ ७६ ॥

अधस्तस्याः क्षितेरन्या दारुणाः षट्च भूमयः । नारका यासु पापस्य भुंजंते कर्मणः फलं ॥७७॥
कुरूपा दारुणारावा दुःस्पर्शा ध्वांतपूरिताः । उपमोज्झितदुःखानां कारणीभूतविग्रहाः ॥ ७८ ॥
कुंभीपाकाख्यमाख्यातं नरकं भीमदर्शनं । नदी वैतरणी घोरा शाल्मलीक्रूरकंटकाः ॥ ७९ ॥
असिपत्रवनच्छन्नाः क्षुरधाराश्च पर्वताः । ज्वलदग्निनिभास्तीक्ष्णलोहकीला निरंतरा ॥ ८० ॥
तेषु ते तीव्रदुःखानि प्राप्नुवंति निरंतरं । प्राणिनो मधुमांसादिघातकाश्चासुधारिणां ॥ ८१ ॥
नास्त्यर्धाङ्गुलमात्रोऽपि प्रदेशस्तत्र दुःखितैः । क्रियते नारकैर्यत्र निमेषमपि विश्रमः ॥ ८२ ॥
प्रच्छन्नामि तिष्ठाम इति ध्यात्वा पलायिताः । हन्यंते निर्दयैरयैर्नारकैरमरैश्च ते ॥ ८३ ॥
ज्वलदंगारकुटिले दग्धा मत्स्या इवानिले । विरसं विहिताक्रंदा विनिश्चित्य कथंचन ॥ ८४ ॥
नारकाग्निभयग्रस्ताः प्राप्ता वैतरणीजलं । चंद्रक्षारोर्मीभिर्भूयो दह्यंते वह्नितोऽधिकं ॥ ८५ ॥
असिपत्रवनं याताश्छायाप्रत्याशया द्रुतं । पतद्भिस्तत्र दार्यंते चक्रखड्गगदादिभिः ॥ ८६ ॥
विच्छिन्ननासिकाकर्णस्कंधजंघादिविग्रहाः । कुंभीपाके नियुज्यंते चांतशोणितवर्षिणः ॥ ८७ ॥
प्रपीड्यंते च यंत्रेषु क्रूरारावेषु विह्वला । पुनः शैलेषु भिद्यंते तीक्ष्णेषु विरसस्वराः ॥ ८८ ॥
उल्लंघ्यंतेऽतितुंगेषु पादपेष्वंधकारिषु । ताड्यंते मुद्गराघातैर्महद्भिर्मस्तके तथा ॥ ८९ ॥

जलं प्रार्थयमानानां तृष्णार्तानां प्रदीयते । ताम्रादिकललं तेन दग्धदेहाः सुदुःखिताः ॥ ९० ॥
ब्रुवते नास्ति तृष्णा न इत्यतोऽपि वलादमी । पाय्यंते तदतिक्रूरैः संदंशव्यावृताननः ॥ ९१ ॥
प्रयात्यभूतले भूयो वक्षस्याक्रम दीयते । तेषां निर्दग्धकंठानां दह्यते हृदयं पुनः ॥ ९२ ॥
निष्क्रामंति परीतंति निर्भिद्य जठरं सह । ज्वलता कललेनाशु तेषां कलुषकर्मणां ॥ ९३ ॥
परस्परकृतं दुःखं तथा भवनवासिभिः । नरका यत्प्रपद्यंते कस्तद्वर्णयितुं क्षमः ॥ ९४ ॥
इति ज्ञात्वा महादुःखं नरके मांससंभवं । वर्जनीयं प्रयत्नेन विदुषा मांसभक्षणं ॥ ९५ ॥
अत्रांतरे जगादैवं कुंडलस्त्रस्तमानसः । नाथाणुव्रतयुक्तानां का गतिर्दृश्यते वद ॥ ९६ ॥
गुरुरूचे न यो मांसं खादत्यतिदृढव्रतः । तस्य वक्ष्यामि यत्पुण्यं सम्यग्दृष्टेर्विशेषतः ॥ ९७ ॥
उपवासादिहीनस्य दरिद्रस्यापि धीमतः । मांसभुक्तेर्निवृत्तस्य सुगतिर्हस्तवर्तिनी ॥ ९८ ॥
यः पुनः शीलसंपन्नो जिनशासनभावितः । सोऽणुव्रतधरः प्राणी सौधर्मादिषु जायते ॥ ९९ ॥
अहिंसा प्रवरं मूलं धर्मस्य परिकीर्तितं । सा च मांसान्निवृत्तस्य जायतेत्यंतनिर्मला ॥ १०० ॥
दयावान् संगवान् योऽपि म्लेच्छश्चांडाल एव वा । मधुमांसान्निवृत्तःसन् सोऽपि पापेन मुच्यते १०१
मुक्तमात्रः स पापेन पुण्यं गृह्णाति मानवः । जायते पुण्यबंधेन सुरः सन्मनुजो यथा ॥ १०२ ॥

सम्यग्दृष्टिः पुनर्जंतुः कृत्वाणुव्रतधारणं । लभते परमान् भोगान् विभुः स्वर्गनिवासिनां ॥१०३॥
इत्याचार्यस्य वचनं श्रुत्वा कुंडलमंडितः । मंदभाग्यतया शक्त्या रहितोऽणुव्रतेष्वपि ॥ १०४ ॥
प्राणिपत्य गुरुं मूर्ध्ना मधुमांसविवर्जनं । जग्राह शरणोपेतं समीचीनं च दर्शनं ॥ १०५ ॥
कृत्वा चैत्ये नमस्कारं गुरोर्दिग्वाससां तथा । निष्क्रांतः सततो देशादिति चिंतामुपागतः १०६
मातुः सहोदरो भ्राता कृतांतसमविक्रमः । ध्रुवं मे सीदतः सोयं भविष्यत्यवलंबनं ॥ १०७ ॥
राजा भूत्वा पुनः शत्रुं जेष्यामीति सुनिश्चितः । आशां वहन् प्रवृत्तोसावातुरो दक्षिणापथं १०८
श्रमादिदुःखपूर्णस्य व्रजतोऽस्य शनैः शनैः । उदीयुर्व्याधयो देहे पापैरन्यभवार्जितैः ॥ १०९ ॥
संधिषु छिद्यमानेषु भिद्यमानेषु मर्मसु । सर्वस्य जगतो त्राणं मरणं तस्य ढौकितं ॥ ११० ॥
मुंचते समये तस्मिञ्जीवं कुण्डलमंडितः । तत्रैव च्यवते देवः शेषपुण्याद्दिवश्च्युतः ॥ १११ ॥
गर्भे चित्तौ विदेहाया विधिना परियोजितौ । यस्य कर्मानुभावस्य विचित्रमिति चेष्टितं ॥११२॥
एतस्मिन्नंतरे साधुकालं कृत्वा स पिंगलः । तपोबलान्महातेजा महाकालोऽसुरोभवत् ॥ ११३ ॥
भवनेऽवधिना स्मृत्वा धर्मस्य च फलोदयं । दध्यौ चित्तोत्सवा क्वेति तावज्जज्ञे यथाविधि ११४
दुष्टया किं तया कृत्यं क्वासौ कुंडलमंडितः । येनाहं प्रापितोऽवस्थां विधुरां विरहार्णवे ॥११५॥

पत्न्यां जनकराजस्य गर्भमाश्रित्य मंडितः । साकमन्येन जीवेन विवेद स्थित इत्यसौ ॥११६॥
सूतां तावदियं देवी युगलं किममानया । गर्भद्वितयोगिन्या मृतयास्ति प्रयोजनं ॥ ११७ ॥
ततो निर्लुठितं संतं पापं मंडितकं ध्रुवं । नेष्यामि यदहं दुःखं ततमेव दुरीहितं ॥ ११८ ॥
इति संचितयन् क्रुद्धः पूर्वकर्मानुबंधतः । देवो रक्षति तं गर्भं सन्मृदन् पाणिना करं ॥११९॥
इति ज्ञात्वा क्षमं कर्तुं दुःखं जंतोर्न कस्यचित् । कालव्यत्रहितं तद्धि कृतमात्मन एव हि॥१२०॥
कालेनाथ सुतं देवी प्रसूता युगलं शुभं । सुतं दुहितरं चांते जहार पृथुकं सुरः ॥ १२१ ॥
आस्फाल्य मारयाम्येनं शिलायां पूर्वमंडितं । इति ध्यातं पुरा तेन पुनरेवमचिंतयत् ॥ १२२ ॥
धिग्मया चिंतितं सर्वं संसारपरिवर्द्धनं । जायते कर्मणा येन तत्कुर्वीत कथं बुधः ॥ १२३ ॥
तृणस्यापि पुरा दुःखं श्रामण्येन कृतं मया । सर्वारंभनिवृत्तेन तपो विविधवाहिना ॥ १२४ ॥
गुरोस्तस्य प्रसादेन कृत्वा धर्मं सुनिर्मलं । ईदृशीं द्युतिमाप्तोऽस्मि करोमि दुरितं कथं ॥१२५॥
स्वल्पमप्यर्जितं पापं व्रजत्युपचयं परं । निमग्नो येन संसारे चिरं दुःखेन दह्यते ॥ १२६ ॥
निर्दोषभावनो यस्तु दयावान् सुसमाहितः । स्थितं करतले तस्य रत्नं सुगतिसंज्ञकं ॥ १२७ ॥
घृणावान् संप्रधार्येदं तमलंकृत्य बालकं । कुंडले कर्णयोरस्य चक्रे दीप्तांशुमंडले ॥ १२८ ॥

पर्णलघ्वीं ततो विद्यां संक्रमय्य शिशोः सुरः । सुखदेशे विमुच्यैनं गतो धाम मनीषितं ॥१२९॥
नक्तं शक्त्या स्थितेनासावुद्याने नभसः पतन् । विद्याभृतेंदुगतिना ददृशे सुखभाजनं ॥ १३० ॥
उडुपातः किमेष स्याद्विद्युत्खंडोऽथवा च्युतः । वितर्क्यैति समुत्पत्य ददृशे पृथुकं शुभं ॥१३१॥
गृहीत्वा च प्रमोदेन देव्याः पुष्पवतीश्रुतेः । वरशय्याप्रसुप्तायां जंघादेशे चकार सः ॥ १३२ ॥
ऊचे चैतां हुतस्वान उत्तिष्ठोत्तिष्ठ सुंदरि । किं शेषे बालकं पश्य संप्रसूतासि शोभिनं ॥ १३३ ॥
ततः कांतकरस्पर्शसौख्यसंपत्प्रबोधिता । शय्यातः सहसोत्तस्थौ सा विघूर्णितलोचना ॥ १३४ ॥
अर्भकं च ददर्शातिसुंदरं सुंदरानना । तस्यास्तदंशुजालेन निद्राशेषो निराकृतः ॥ १३५ ॥
परं च विस्मयं प्राप्ता पप्रच्छ प्रियदर्शना । कयाथं जनितो नाथ पुण्यवत्या स्त्रिया शिशुः १३६
सोऽवोचद्दयिते जातस्तवायं प्रवरः सुतः । प्रतीहि संशयं मागास्त्वत्तो धन्या परा तु का॥१३७॥
सावोचत्प्रिय बंध्यास्मि कुतो मे सुतसंभवः । प्रतारितास्मि दैवेन किं मे भूप प्रतार्यते ॥१३८॥
सोवोचद्देवि मा शंकां कार्षीः कर्मनियोगतः । प्रच्छन्नोऽपि हि नारीणां जायते गर्भसंभवः १३९
सावोचदस्तु नामेवं कुंडले त्वतिचारिणी । ईदृशी मर्त्यलोकेऽस्मिन् सुरत्ने भवतः कुतः ॥१४०॥
सोऽवोचद्देवि नानेन विचारेण प्रयोजनं । शृणु तथ्यं पतन्नेष गगनादाहृतो मया ॥ १४१ ॥

मया तु मोदितस्तेऽयं सुतः सुकुलसंभवः । लक्षणानि वदंत्यस्य महापुरुषभूमिकं ॥ १४२ ॥
श्रमं कृत्वापि भूयांसं भारमूढ्वा च गर्भजं । फलं तनयलाभोऽत्र तत्ते जातं सुखं प्रिये ॥१४३॥
कुक्षिजातोऽपि पुत्रस्य यः कृत्यं कुरुते न ना । अपुत्र एव कांतेऽसौ जायते रिपुरेव वा ॥१४४॥
तव सोयमपुत्रायाः सति पुत्रो भविष्यति । अंतयानेन किं कृत्यमत्र वस्तुनि शोभने ॥ १४५ ॥
एवमस्त्वति संभाष्य देवी सूतिगृहं गता । प्रभाते सुतजन्मास्यास्तुष्ट्या लोके प्रकाशितं १४६
ततो जन्मोत्सवस्तस्य पुरेऽस्मिन् रथनूपुरे । संप्रवृत्तः समागच्छद्विस्मिताशेषबांधवः ॥ १४७ ॥
रत्नकुंडलभानूनां मंडले नयतो वृतः । प्रभामंडलनामास्य पितृभ्यां निर्मितं ततः ॥ १४८ ॥
अर्पितः पोषणायासौ धात्र्या लीलामनोहरः । सर्वांतःपुरलोकस्य करपद्ममधुव्रतः ॥ १४९ ॥
विदेहा तु हृते पुत्रे कुररीवत्कृतस्वना । बंधूनपातयत् सर्वान् गंभीरे शोकसागरे ॥ १५० ॥
परिदेवनमेवं च चक्रे चक्राहतेव सा । हा वत्स केन नीतोऽसि मम दुष्करकारिणा ॥ १५१ ॥
विघृणस्य कथं तस्य पापस्य प्रसृतौ करौ । अज्ञानं जातमात्रं त्वां गृहीतुं ग्रावचेतसः ॥१५२॥
पश्चिमाया इवाशाया संध्येवेयं सुता मम । स्थिता स तु परिप्राप्तो मंदायाः सूर्यवत्सुतः ॥१५३॥
ध्रुवं भवांतरे कोऽपि मया बालो वियोजितः । तदेव फलितं कर्म न कार्यं बीजवर्जितं ॥ १५४ ॥

मारितास्मि न किं तेन पुत्रचोरणकारिणा । पुरुप्राप्तास्मि यद्दुःखं समागत्यार्धवैशसं (?) ॥१५५॥
इति तां कुर्वतीमुच्चैर्विह्वलां परिदेवनं । समाश्वासयदागत्य जनको निगदन्निदं ॥ १५६ ॥
प्रिये मागाः परं शोकं जीवत्येव शरीरजे । हृतः केनाप्यसौ जीवन् द्रक्ष्यसे ध्रुवमेव हि ॥१५७॥
दृश्यते नेक्ष्यते भूयः पुनर्जात्ववलोक्यते । पूर्वकर्मानुभावेन जाये! रोदिषि किं वृथा ॥ १५८ ॥
व्रज स्वास्थ्यमिमं लेखं सुहृदो नीययाम्यहं । वार्तां दशरथस्येमां परिवेदयितुं प्रिये ॥ १५९ ॥
सचाहं च सुतस्याशु करिष्यावो गवेषणं । प्रच्छाद्य धरणीं सर्वां चरेः कुशलचेष्टितैः ॥ १६० ॥
दयितां सांत्वयित्वैवं लेखं मित्राय दत्तवान् । तं प्रवाच्य सशोकेन पूरितोऽति गरीयसा ॥१६१॥
मह्यामन्वेषितस्ताभ्यां नासौ दृष्टो यदार्भकः । मंदीकृत्य तदा शोकमस्थुः कृच्छ्रेण बांधवाः १६२
नासावासीज्जनस्तत्र पुरुषः प्रमदाथवा । यो न वाष्पपरीताक्षस्तच्छोकेन वशीकृतः ॥ १६३ ॥
शोकविस्मरणे हेतुर्बभूव सुमनोहरा । जानकी बंधुलोकस्य शुभशैशवचेष्टिता ॥ १६४ ॥

प्रमदमुपगतानां योषितामंकदेशे । पृथुतनुभवकांत्या लिंपती दिक्समूहं ॥
विपुलकमलपाता श्रीरिवासौ सुकंठा । शुचिहसितसितास्यावर्धतांभोजनेत्रा ॥ १६५ ॥
प्रभवति गुणसस्यं येन तस्यां समृद्धं । भजदखिलजनानां सौख्यसंभारदानं ॥

तदतिशयमनोज्ञा चारुलक्ष्मान्वितांगा । जगति निगदितासौ भूमिसाम्येन सीता॥१६६॥
वदनजितशशांका पल्लवच्छायपाणिः । सितमणिसमतेजःकेशसंघातरम्या ॥
जितसमदनहंसस्त्रीगतिः सुंदरभ्रू–र्वकुल सुरभिवक्त्रा मोदवद्धालिवृंदा ॥ १६७ ॥
अतिमृदुभुजमाला शक्रशस्त्रानुमध्या । प्रवरसरसरंभास्तंभसाम्यस्थितोकः ॥
स्थलकमलसमानोत्तुंगपृष्ठोज्वलांघ्रिः । प्रभवदतिविशालच्छायवक्षोजयुग्मा ॥ १६८ ॥
प्रवरभवनकुक्षिष्वत्युदारेषु कांत्या । विविधविहितमार्गा लब्धवर्णा परं सा ॥
सततमुपगतांतः सप्तकन्याशताना–मतिशयरमणीयं शास्त्रमार्गेण रेमे ॥ १६९ ॥
अपि दिनकरदीप्तिः कौमुदी चंद्रकांतिः । सुरपतिमहिषी वा कापि वा सा सुभद्रा ॥
यदि भजति तदीयासंगशोभां कथंचि–न्नियतमतिमनोज्ञास्तास्ततो वेदनीयाः ॥ १७० ॥
विधिरिव रतिदेवीं कामदेवस्य बुद्ध्या । दशरथतनयस्याकल्पयत्पूर्वजस्य ॥
जनकनरपतिस्तां सर्वविज्ञानयुक्तां । ननु रविकरसंगस्योचिता पद्मलक्ष्मीः ॥ १७१ ॥

इत्यार्षे रविषेणाचार्यप्रोक्ते पद्मचरिते सीताभामंडलोत्पत्त्यभिधानं नाम षड्विंशतितमं पर्व ।

---

# अथ सप्तविंशतितमं पर्व ।

ततो मगधराजेंद्रश्चारुवृत्तांतविस्मितः । पप्रच्छ गणिनामग्र्यं नूतनप्रश्रयान्वितः ॥ १ ॥
किं पुनस्तस्य माहात्म्यं दृष्टं जनकभूभृता । रामस्य येन सा तस्मै तेन बुद्ध्या निरूपिता ॥२॥
ततः करतलासंगद्विगुणीभूतदंतभाः । जगौ गणधरो वाक्यं चित्तप्रह्लादनावहं ॥ ३ ॥
शृणु राजन् प्रवक्ष्यामि रामस्याक्लिष्टकर्मणः । यतः प्रकल्पिता कन्या जनकेन सुबुद्धिना ॥ ४ ॥
दक्षिणे विजयार्द्धस्य कैलाशाद्रेस्तथोत्तरे । अंतरेत्यंतबहवः संति देशा सहांतराः ॥ ५ ॥
तत्रार्धबर्बरो देशो निःसंयमनमस्कृतिः । निर्विदग्धजनो घोरम्लेच्छलोकसमाकुलः ॥ ६ ॥
मयूरमालनगरे कृतांतनगरोपमे । आंतरंगतमो नामेत्यर्द्धबर्बरचारिणां ॥ ७ ॥
पूर्वापरायतक्षोण्यां यावंतो म्लेच्छसंभवाः । कपोतशुककंबोजमांकनाद्याः सहस्रशः ॥ ८ ॥
गुप्ता बहुविधैः सैन्यैर्भीषणैर्विविधायुधैः । आंतरंगतमं प्रीत्या परिवार्य ससाधनाः ॥ ९ ॥
आर्यानेताञ्जनपदान् प्रचंडांतररंहसः । उद्वासयंत आजग्मुरिति कारुण्यवर्जिताः ॥ १० ॥
देशं जनकराजस्य ततो व्याप्तुं समुद्यताः । शलभा इव निशेषमुपप्लवविधायिनः ॥ ११ ॥

जनकेन च साकेतां युवानः प्रेषिता द्रुतं । आंतरंगतमं प्राप्तमूचुर्दशरथस्य ते ॥ १२ ॥
विज्ञापयति देव त्वां जनको जनवत्सलः । पौलिंग्य परचक्रेण समाक्रांतं महीतलं ॥ १३ ॥
आर्यदेशाः परिध्वस्ता म्लेच्छैरुद्वासितं जगत् । एकवर्णाः प्रजां सर्वां पापाः कर्तुं समुद्यताः ॥१४॥
प्रजासु विप्रनष्टासु जीवामः किं प्रयोजनं । चिंत्यतामिति किं कुर्मो व्रजामो वा कमाश्रयं॥१५॥
किं वा दुर्गं समाश्रित्य तिष्ठामः ससुहृज्जनाः । नदीकीलींद्रभागान्वा गिरिं वा विपुलाह्वयं १६
अथवा सर्वसैन्येन निकुंजगिरिमाश्रिताः । सन्निरुद्धाः समागच्छत्परसैन्यं भयानकं ॥ १७ ॥
साधुगोश्रावकाकीर्णां प्रजामेतां सुविह्वलां । सम्यक् संधारयिष्यामस्त्यक्त्वा जीवं सुदुस्सहं ॥१८॥
अतो ब्रवीमि राजंस्त्वं यत्त्वया पाल्यते मही । तव राज्यं महाभाग त्वमेव हि जगत्पतिः ॥१९॥
यजंते भावतः संतो यावंतः श्रावकादयः । पंचयज्ञान् प्रधानेन व्रीह्याद्यैर्यवबीजकैः ॥ २० ॥
मुक्तिः क्षांतिगुणैर्युक्ता यच्च ध्यानपरायणाः । तप्यंते सुतपो मोक्षसाधनं गगनांबराः ॥ २१ ॥
महांतश्च पुरस्कारा यच्चैत्यभवनादिषु । विधीयंतेऽभिषेकांश्च जिनानां क्षीणकर्मणां ॥ २२ ॥
प्रजाःसुरक्षितास्त्वेतत्सर्वं भवति रक्षितं । ततश्च धर्मकामार्थाः प्रेत्य चेह च भूभृतां ॥ २३ ॥
बहुकोषो नरेशो यः प्रीतः पालयति क्षितिं । परचक्राभिभूतश्च नावसादं समश्नुते ॥ २४ ॥

हिंसा धर्मविहीनानां यच्छतां यागदक्षिणां । कुरुते पालनं यश्च तस्य भोगाः पुनर्भुवः ॥ २५ ॥
धर्मार्थकाममोक्षाणामधिकारा महीतले । जनानां राजगुप्तानां जायंते तेन्यथा कुतः ॥ २६ ॥
नृपबाहुबलच्छायां समाश्रित्य सुखं प्रजाः । ध्यायंत्यात्मानमव्यग्रास्तथैवाश्रमिणो बुधाः ॥२७॥
यस्य देशं समाश्रित्य साधवः कुर्वते तपः । षष्ठमंशं नृपस्तस्य लभते परिपालनात् ॥ २८ ॥
अथैवमिति तत्सर्वमुपाश्रित्य नराधिपः । द्रुतं रामं समाहूय दातुं राज्यं समुद्यतः ॥ २९ ॥
मुदितैः किंकरैर्भेरीघनानंदा समाहताः । आजग्मुः सचिवाः सर्वे गजवाजिसमाकुलाः ॥ ३० ॥
जांबूनदमयान्कुंभान् गृहीत्वा वारिपूरितान् । बद्ध्वा परिकरं शूरा भासमानाः समागताः ॥३१॥
चारुनूपुरनिस्वाना दधाना वेषमर्चितं । वस्त्रालंकारमादाय पटलेऽथागताः स्त्रियः ॥ ३२ ॥
आटोपमीदृशं दृष्ट्वा किमेतदिति शब्दितं । रामं दशरथोऽवोचत्पालयेमां सुत क्षितिं ॥ ३३ ॥
रिपुचक्रमिहायातं यद्दैवैरपि दुर्जयं । विजेष्ये तदहं गत्वा प्रजानां हितकाम्यया ॥ ३४ ॥
ततो राजीवनयनो राघवो नृपमब्रवीत् । किमर्थं तात संरंभमस्थाने प्रतिपद्यसे ॥ ३५ ॥
किं कार्यं पशुसंज्ञैस्तैरसंभाषैर्दुरात्मभिः । येषामभिमुखीभावं प्रयासि रणकांक्षया ॥ ३६ ॥
नह्याखूनां विरोधेन क्षुभ्यंति वरवारणाः । नचापि तूलदाहार्थं सन्नह्यति विभावसुः ॥ ३७ ॥

तत्र प्रयातुमस्माकं युज्यते यच्छ शासनं । इत्युक्ते हर्षितांगस्तं परिष्वज्य पिताब्रवीत् ॥ ३८ ॥
त्वं बालः सुकुमारांगः पद्म पद्मनिभेक्षणः । कथं तां सहसे जेतुं न प्रत्येम्यहमर्भकः ॥ ३९ ॥
सोऽवोचत्सद्यमुत्पन्नो भृशमल्पोऽपि पावकः । कक्षं दहति विस्तीर्णं महद्भिः किं प्रयोजनं ॥४०॥
बालः सूर्यस्तमो घोरं द्युतिः ऋक्षगणस्य च । एको नाशयति क्षिप्रं भूतिभिः किम्प्रयोजनम् ॥४१॥
ततः सहृष्टरोमांगो नृपो दशरथः पुनः । प्रमोदं परमं प्राप्तो विषादं च सबाष्पदृक् ॥ ४२ ॥
सत्वत्यागादिवृत्तीनां क्षत्रियाणामियं स्थितिः । उत्सहंते प्रयातुं यद्धिहातुमपि जीवितं ॥ ४३ ॥
अथवा क्षयमप्राप्ते जंतुरायुषि नाश्नुते । मरणं गहनं प्राप्तः परं यद्यपि जायते ॥ ४४ ॥
इति चिंतयतस्तस्य कुमारौ रामलक्ष्मणौ । पितुः पादाब्जयुगलं प्रणम्योपगतौ बहिः ॥ ४५ ॥
ततः सर्वास्त्रकुशलौ सर्वशास्त्रविशारदौ । सर्वलक्षणसंपूर्णौ सर्वस्य प्रियदर्शनौ ॥ ४६ ॥
चतुरंगबलोपेतौ पूर्यमाणौ विभूतिभिः । संप्रयातौ रथारूढौ दीप्यमानौ स्वतेजसा ॥ ४७ ॥
पूर्वमेव तु निर्यातो जनकः सोदरान्वितः । अंतरं योजने द्वेच परसैन्यस्य तस्य च ॥ ४८ ॥
शत्रुशब्दमपृक्षंतो जनकस्य महारथाः । विविशुर्म्लेच्छसंघातं मेघवृंदमिव ग्रहाः ॥ ४९ ॥
प्रवृत्तश्च महाभीमः संग्रामो रोमहर्षणः । बृहत्प्रहरणाटोप आर्यम्लेच्छभटाकुलः ॥ ५० ॥

जनकः कनकं दृष्ट्वा परं गहनमागतं । अचोदयदतिक्रुद्धो दुर्वारकरिणां घटां ॥ ५१ ॥
वर्वरैस्तु महासैन्यैर्भग्नैर्भग्नैः पुनः पुनः । भीमैर्जनकराजोऽपि दिक्षु सर्वासु वेष्टितः ॥ ५२ ॥
एतस्मिन्नंतरे प्राप्तः पद्मः सौमित्रिणा सह । अपारं गहनं सैन्यमपश्यच्चारुलोचनः ॥ ५३ ॥
दृष्ट्वा तस्य सितच्छत्रं विशीर्णा शत्रुवाहिनी । तमसां संततिः स्फीताः पौर्णमासीविधुं यथा ५४
आश्वासितश्च वाणोघैर्जनको ध्वस्तकंकटः । तेन जंतुर्यथा दुःखी धर्मेण जगदायुषा ॥ ५५ ॥
राघवो रथमारूढो युक्तं चपलवाजिभिः । कवचोद्योतितवपुः हारकुंडलमंडितः ॥ ५६ ॥
धनुरायतमास्थाय शरपाणिर्हरिध्वजः । प्रकीर्णकोल्वणच्छत्रो धरणीधीरमानसः ॥ ५७ ॥
प्रविशन् विपुलं सैन्यं लीलया लोकवत्सलः । सुभटैः पूर्यमाणः सन् भात्यर्क इव रश्मिभिः ५८
संरक्ष्य जनकं प्रीतः कनकं च यथाविधि । बलं विध्वंसयच्छत्रोरिभवत्कदलीवनं ॥ ५९ ॥
तथैव लक्ष्मणस्तत्र वाणानाकर्णसंहतान् । ववर्ष वायुना नुन्नः सागरे जलदो यथा ॥ ६० ॥
निशितानि च चक्राणि शक्तींश्च कनकानि च । शूलं क्रकचनिर्घातान्येवमाद्यान्यचिक्षिपत् ॥ ६१ ॥
सौमित्रिभुजनिर्मुक्तैस्तैः पतद्भिरितस्ततः । म्लेच्छदेहानि कृत्यंते द्रुमाः परशुभिर्यथा ॥ ६२ ॥
भटाः शवरसैन्येऽस्मिन्वाणैर्निर्भिन्नवक्षसः । केचिच्छिन्नभुजग्रीवा निपतंति सहस्रशः ॥ ६३ ॥

ततः पराङ्मुखीभूता लोककंटकवाहिनी । तथापि लक्ष्मणस्तेषामनुधावति पृष्ठतः ॥ ६४ ॥
अनिवार्यं समालोक्य तं सौमित्रिं मृगाधिपं । अपरे म्लेच्छशार्दूला समंतात्क्षोभमागताः ॥६५॥
बृहद्वादित्रनिर्घोषैः कुर्वाणा भैरवं रवं । चापासिचक्रबहुला कृतसंघातपंक्तयः ॥ ६६ ॥
रक्तवस्त्रशिरस्त्राणाः केचिद्वर्वरधारिणः । असिधेनुकराः क्रूरा नानावर्णांगधारिणः ॥ ६७ ॥
केचिद्भिन्नांजनच्छाया शुष्कपत्रत्विषोऽपरे । केचित्कर्दमसंकाशाः केचित्ताम्रसमत्विषः ॥ ६८ ॥
कटिसूत्रमणिप्रायाः पत्रचीवरधारिणः । नानाधातुविलिप्तांगा मंजरीकृतशेखराः ॥ ६९ ॥
वराटकाभदशना विशालपिठरोदराः । विरेजुः सैन्यमध्यं ते कुटजा इव पुष्पिताः ॥ ७० ॥
अपरे शवरा रेजुर्भीषणायुधपाणयः । पीनजंघाभुजस्कंधा असुरा इव दर्पिताः ॥ ७१ ॥
निर्दया पशुमांसादो मूढाः प्राणिवधोद्यताः । आरभ्य जन्मनः पापाः सहसारभ्यकारिणः ७२
वराहमहिषव्याघ्रवृककंकादिकेतवः । नानायानच्छदच्छत्रास्तत्सामंता सुभीषणाः ॥ ७३ ॥
नानायुद्धकृतध्वांता महावेगपदातयः । सागरोर्मिनिभाश्चंद्रा नानाभीषणनिस्वनाः ॥ ७४ ॥
लक्ष्मणक्ष्माधरं वव्रु क्षुब्धाः शरदनीरदाः । निजसामंतवातेन प्रेरिताः पुरुरंहसः ॥ ७५ ॥
अधावल्लक्ष्मणस्तेषां निपाताय समुद्यतः । यथा नदत्समूहानां महावेगो गजाधिपः ॥ ७६ ॥

मृद्यमाना निपेतुस्ते स्वैरवेव सुधातले । विदुद्रुवुरसंख्याश्च भीत्या विकृतमूर्तयः ॥ ७७ ॥
ततः साधरयन् सैन्यमातरंगतमो नृपः । समं सकलसैन्येन लक्ष्मणाभिमुखं स्थितः ॥ ७८ ॥
तेनाभ्यागतमात्रेण प्रवृत्ते भैरवे मृधे । लक्ष्मणस्य धनुश्छिन्नं वाणैः संततवर्षिभिः ॥ ७९ ॥
कृपाणं यावदादत्ते लक्ष्मणो विरथीकृतः । समीरणजवात्तावत्पद्मो रथमचोदयत् ॥ ८० ॥
लक्ष्मणस्योपनीतश्च रथोऽन्यः क्षेपवर्जितः । अपारमदहत्सैन्यं रामः कक्षमिवानलः ॥ ८१ ॥
कांश्चिच्चिच्छेद वाणोघैः कांश्चित्कनकतोमरैः । चक्रैः शिरांसि केषांचित्कुचितोष्ठान्यपातयत् ८२
ननाश भयपूर्णा च यथासंम्लेच्छवाहिनी । विध्वस्तचामरच्छत्रध्वजचापसमाकुला ॥ ८३ ॥
निमिषांतरमात्रेण रामेणाक्लिष्टकर्मणा । म्लेच्छा निराकृता सर्वे कषाया इव साधुना ॥ ८४ ॥
आगतो यश्च सैन्येन निष्पारेणोदधिर्यथा। भीतोश्वैर्दशभिः सोयं म्लेच्छराजो विनिस्मृतः ॥८५॥
पराङ्मुखीकृतैः क्लीवैः किमेभिर्निहतैरिति । सौमित्रिणा समं रामः कृती निववृते सुखं ॥८६॥
अमी भयाकुला म्लेच्छा विहाय विजिगीषुतां । आश्रित्य सह्यविंध्याद्रीन् समयेनावतस्थिरे ८७
कंदमूलफलाहारास्तत्यजू रौद्रकर्मतां । राघवाद्भयमापन्ना वैनतेयादिवोरगाः ॥ ८८ ॥
सानुजः सानुजं पद्मो विग्रहे शांतविग्रहः । विसर्ज्य जनकं हृष्टं जनकाभिमुखोगमत् ॥ ८९ ॥

प्रजातपरमानंदा रोमविस्मितमानसा । रराज पृथिवी सर्वा भूत्या कृतयुगे यथा ॥ ९० ॥
धर्मार्थकामसंसक्तैः पुरुषैर्भूषितं जगत् । व्यतीतहिमसंरोधैर्नक्षत्रैरंबरं यथा ॥ ९१ ॥
माहात्म्यादमुतो राजन् दुहिता लोकसुंदरी । जनकेन प्रसन्नेन राघवस्य प्रकल्पिता ॥ ९२ ॥

किं वात्रकृत्यं बहुभाषितेन । श्री श्रेणिक स्वं ननु कर्म पुसां ॥
समागते गच्छति हेतुभावं । वियोजने वा सुजनेन सार्कं ॥ ९३ ॥
सोयं महात्मा भुवने समस्ते । गतः प्रतापं परमं सुभाग्यः ॥
गुणैरनन्यप्रमितैरुपेतो । रविर्यथोद्भूतपरो मयूखैः ॥ ९४ ॥

इत्यार्षे रविषेणाचार्यप्रोक्ते पद्म-चरिते म्लेच्छपराजयसंकीर्तनं नाम सप्तविंशतितमं पर्व ।

---

# अथाष्टाविंशतितमं पर्व ।

ईदृक् पराक्रमाकृष्टो नारदः पुरुविस्मयः । धृतिं न लभते क्वापि रामसंकथया विना ॥ १ ॥
श्रुतश्च तेन वृत्तांतो रामस्य किल मैथिली । पित्रा दातुमभीष्टेति प्रकटा सर्वविष्टपे ॥ २ ॥

अचिंतयच्च पश्यामि कन्यां तामद्य कीदृशीं । शोभनैर्लक्षणैर्येन रामस्य परिकल्पिता ॥ ३ ॥
पद्मगर्भदलं यस्मिन् कृत्वा स्तनतटे रहः । मत्कांत्या सदृशा नेदमिति बुद्ध्यावलोकते ॥ ४ ॥
समये नारदस्तस्मिन् सीतालोकनलालसः । विशुद्धहृदयः प्रापदारुरोह च तद्गृहं ॥ ५ ॥
ततो दर्पणसंक्रांतं जटामुकुटभीषणं । नारदीयं वपुर्वीक्ष्य कन्या त्रासससमाकुला ॥ ६ ॥
हा मातः कोयमत्रेति कृत्वा प्रस्खलितं स्वनं । विवेश गर्भभवनं वेपमानशरीरिका ॥ ७ ॥
नारदोऽनुपदं तस्याविशन्नतिकुतूहलः । नारीभिर्द्वारपालीभिः सावष्टंभमरुध्यत ॥ ८ ॥
यावत्तस्य च तासां च कलहो वर्तते महान् । तावच्छब्देन संप्रापुर्नराः खड्गधनुर्धराः ॥ ९ ॥
गृह्यतां गृह्यतां कोयं कोयमित्युद्धतस्वनाः । कुंचितोष्ठान्नरान् दृष्ट्वा सशस्त्रान् हंतुमुद्यतान् ॥ १० ॥
नारदः परमं विभ्रद्भयमुत्कटवेपथुः । ऊर्ध्वरोमा खमुत्पत्य विश्रांतोष्टापदाचले ॥ ११ ॥
अचिंतयच्च हा कष्टं प्राप्तोऽस्मि जननं पुनः । निष्क्रांतोऽस्मि महादावात्पक्षी ज्वालाहतो यथा १२
शनैः शनैस्ततः कंपं तद्विग्न्यस्तेक्षणोऽमुचत् । ममार्ज च ललाटस्थान् स्वेदविंदून् स्थवीयसः १३
समादधे स्खलत्पाणिर्जटाभारं समाकुलं । मुहुः स्मृत्वा च निश्वासान्मुमुचे दीर्घवेगिनः ॥१४॥
ततः स्वैरं भयाद्भ्रष्टो दध्यावेवं प्रकोपवान् । निश्चितस्थितशेषांगो मूर्धानं कंपयन्मनाक् ॥ १५ ॥

अदुष्टमानसः पश्यन् यातो रूपदिदृक्षया । रामानुरागतः प्रापमवस्थां मृत्युगोचरां ॥ १६ ॥
अहो प्रौढ़कुमार्यास्तच्चेष्टितं दुष्टविभ्रमं । गृहीतोऽस्मि नयेनैष कृतांतसदृशैर्नरैः ॥ १७ ॥
क्व मे पापाधुना याति व्यसने पातयामि तां । नृत्याम्यातोद्यमुक्तोऽपि किमुतातोद्यसंयतः ॥१८॥
विचिंत्यैवं द्रुतं गत्वा नगरं रथनूपुरं । सीतारूपं पटे न्यस्य प्रत्यक्षमिव सुंदरं ॥ १९ ॥
चकारोपवने चंद्रगते क्रीडनसद्मनि । उत्सृत्य च वहिस्तस्थौ पुरस्याप्रकटात्मकः ॥ २० ॥
अन्यदाथ तमुद्देशं कुमारैर्बहुभिः समं । भामंडलकुमारोसौ रममाणः समाययौ ॥ २१ ॥
तत्राज्ञानात्समालोक्य स्वसारं चित्रगोचरां । ह्रीश्रुतिस्मृतिमुक्तात्मा द्राक् प्रभामंडलोऽभवत् २२
ततः शोचति निश्वासान्मुंचतेत्यंतमायतान् । शुष्यति क्षिपति स्रस्तं गात्रं यत्र क्वचिद्द्रुतं ॥ २३ ॥
न रात्रौ न दिवा निद्रां लभते ध्यानतत्परः । उपचारेण कांतेन न जातु सुखमश्नुते ॥ २४ ॥
पुष्पाणि गंधमाहारं द्वेष्टि क्ष्वेडं यथा भृशं । करोति लोठनं भूयः संतापी जलकुट्टिमे ॥ २५ ॥
मौनमाचरति स्मित्वा करोति च कथां मुहुः । सहसोत्तिष्ठति व्यर्थं याति भूयो निवर्तते ॥२६॥
ततो गृहगृहीतस्य सदृशैस्तैर्विचेष्टितैः । ज्ञातं तदातुरत्वस्य कारणं मतिशालिभिः ॥ २७ ॥
जगदुश्चैवमन्योन्यं कन्येयं केन चित्रिताः । पटोऽत्र निहितो गेहे स्याद्वा नारदचेष्टितं ॥ २८ ॥

ततः श्रुत्वा कुमारं तमाकुलं स्वेन कर्मणा । नारदस्तस्य बंधूनां विस्रब्धो दर्शनं ददौ ॥ २९ ॥
आदरेण च तैः पृष्टः कृतपूजानमस्कृतिः । मुने कथय कन्येयं दृष्टा क्व भवतेदृशी ॥ ३० ॥
महोरगांगना किं स्याद्भवेत्किंवा विमानजा । मर्त्यलोकं समायाता त्वया दृष्टा कथंचन ॥ ३१ ॥
अवद्धारस्ततोऽवोचद्विनयं परमं महत् । भूयो भूयः स्वयं गच्छाद्विस्मयं कंपयन् शिरः ॥ ३२ ॥
अस्त्यत्र मिथिला नाम पुरी परमसुंदरी । इंद्रकेतोःस्तुतस्तत्र जनको नाम पार्थिवः ॥ ३३ ॥
विदेहेति प्रिया तस्य मनोबंधनकारिणी । गोत्र सर्वस्वभूतेयं सीतेति दुहिता तयोः ॥ ३४ ॥
निवेद्यैवमसौ तेभ्यः कुमारं पुनरुक्तवान् । बाल मा याः विषादं त्वं तवेयं सुलभैव हि ॥ ३५ ॥
रूपमात्रेण यातोसि किमस्या भावमीदृशं । ये तस्या विभ्रमा भद्र ! कस्तां वर्णयितुं क्षमः ३६
तया चित्तं समाकृष्टं तवेति किमिहाद्भुतं । धर्म्यध्याने दृढं बद्धं मुनीनामपि सा हरेत् ॥ ३७ ॥
आकारमात्रमत्रैतत्तस्या न्यस्तं मया पटे । लावण्यं यत्तु तत्तस्या तस्यामेवैतदीदृशं ॥ ३८ ॥
नवयौवनसंभूतकांतिसागरवीचिषु । सा तिष्ठति तरंतीव संसक्तास्तनकुंभयोः ॥ ३९ ॥
तस्या श्रोणी वरारोहा कांतिसंप्लावितांशुका । वीक्षितोन्मूलयत्स्वांतं समूलमपि योगिनां ॥४०॥
मुक्त्वा भवंतमन्यस्य सेयं कस्योचिता भवेत् । यत्नं वस्तुनि कुर्वन्नाजायतां योग्यसंगमः ॥४१॥

इत्युक्त्वा चरितार्थः सन्नारदोऽगान्मनीषितं । दध्यौ भामंडलोप्येवं स्मरसावकताडितः ॥ ४२ ॥
क्षेपिष्टं प्रमदारत्नं न लभेयं यदीदृशं । न जीवेयं तदावश्यं स्मराकुलितमानसः ॥ ४३ ॥
धारयंती परां कांतिमियं मे हृदयं स्थिता । कथं च कुरुते तापमग्निज्वालेव सुंदरी ॥ ४४ ॥
दहति त्वचमेवार्को बहिरंतश्च मन्मथः । अंतर्द्धिरस्ति सूर्यस्य मन्मथस्य न विद्यते ॥ ४५ ॥
द्वयमेव ध्रुवं मन्ये प्राप्तव्यमधुना मया । तया वा संगमः साकं मरणं वा स्मरेषुभिः ॥ ४६ ॥
अनारतमतिध्यायन्नशने शयने न च । न प्रासादे नचोद्याने धृतिं भामंडलोऽगमत् ॥ ४७ ॥
स्त्रियोऽथ नारदं मत्वा कुमारासुखकारणं । स संभ्रमं समुद्विग्ना पितुरस्य न्यवेदयत् ॥ ४८ ॥
तथानर्थसमुद्रेन नारदेनाहृता पटे । चित्रीकृत्यांगना क्वापि रूपातिशययोगिनी ॥ ४९ ॥
समालोक्य कुमारस्तां विह्वलीभूतमानसः । धृतिं न लभते क्वापि त्रपया दूरमुज्झितः ॥ ५० ॥
मुहुस्तामीक्षते कन्यां सीताशब्दं समुच्चरन् । करोति विविधां चेष्टां वायुनेव वशीकृतः ॥ ५१ ॥
उपायश्चिंत्यतामाशु तस्योत्पादयितुं धृतिं । यावन्न मुच्यते प्राणैर्भोजनादिपराङ्मुखः ॥ ५२ ॥
ततश्चंद्रगतिः श्रुत्वा वार्तामेतां समाकुलः । आगत्य कांतया साकं सुतमेवमभाषत ॥ ५३ ॥
भज सर्वाः क्रियाः पुत्र सुचेता भोजनादिकाः । अयं वृणोमि तां कन्यां भवतो मनसि स्थितां ॥

परिशांत्य सुतं कांतां रहश्चंद्रायणोऽवदत् । प्रमोदं च विषादं च विस्मयं च वहन्निदं ॥ ५५ ॥
आर्ये विद्याभृतां कन्याः संत्यज्य प्रतिमोज्झिताः । भूगोचराभिसंबंधः कथमस्मासु युज्यते ५६
क्ष्मागोचरस्य निलयं गंतुं वा युज्यते कथं । यदा वा तेन नो दत्ता मुखच्छाया तदा तु का ५७
तस्मात्केनाप्युपायेन कन्यायाः पितरं प्रियं । इहैव नययाम्याशु नान्यः पंथा विराजते ॥५८॥
नाथ युक्तमयुक्तं वा त्वमेव ननु मन्यते । तथापि तावकं वाक्यं ममापि हृदयंगमं ॥ ५९ ॥
ततश्चपलवेगाख्यं भृत्यमाहूय सादरं । कर्णजापेन विज्ञातवृत्तांतमकरोन्नृपः ॥ ६० ॥
आज्ञादानेन तुष्टोसौ मिथिलां त्वरितो ययौ । हृष्टहंसयुवामोदसूचितामिव पद्मिनीं ॥ ६१ ॥
अवतीर्यांवराच्चारुसन्निवेषमुपाश्रितः । वित्रासयितुमुद्युक्तो गोमहिषश्ववारणान् ॥ ६२ ॥
देशघाते यथा यातः समाक्रंदस्तदापरः । शुश्राव च जनौघेभ्यो जनकस्तद्विचेष्टितं ॥ ६३ ॥
निर्ययौ च पुराद्युक्तः प्रमोदोद्वेगकौतुकैः । ईक्षांचक्रे च तं सप्तिं नवयौवनसंगतं ॥ ६४ ॥
उदमानं मनोयोगं भास्वत्प्रवरलक्षणं । प्रदक्षिणमहावर्तं तनुवक्त्रोदरं बलं ॥ ६५ ॥
सुशफाग्रैर्मृदंगानां कुर्वाणमिव ताडनं । पृथग्जनैर्दुरारोहं दधतं प्रोथुवेपथुं ॥ ६६ ॥
ततः शुद्धः प्रमोदः सन् जगाद जनको मुहुः । ज्ञायतामेष कस्याश्वः प्राप्तो निर्दामतामिति ६७

ततो द्विजगणा ऊचुः प्रियोद्योद्यतचेतसः । राजन्नस्य न ना कोऽपि तुरंगो विद्यते समः ॥६८॥
कैव वार्ता पृथिव्यां तु राज्ञामीदृग्भवेदिति । अथ वा किं न कालेन नृप दृष्टस्त्वयेयता ॥ ६९ ॥
रथे दिवाकरस्यापि श्रुतिविभ्रमगोचरः । विद्यते नेति जानीमः स्थूरीपृष्टोऽमुना समः ॥ ७० ॥
नूनं भवंतमुद्दिश्य कृतवंतं परं तपः । सृष्टोयं विधिना सप्तिरतः स्वीक्रियतां प्रभो ! ॥ ७१ ॥
ततोऽसौ विनयी निन्ये प्रग्रहद्वयसंयुतः । मंदुराकुंकुमार्द्रांगप्रचलच्चारुचामरः ॥ ७२ ॥
संवृतो माससमात्रोऽस्य ययौ कालो गृहीतितः । उपचारैरलं योग्यैः सेव्यमानस्य संततं ॥ ७३ ॥
पाशकोत्रांतरे नत्वा जनकाय न्यवेदयत् । नाथ नागस्य सदेशे ग्रहणं दृश्यतामिति ॥ ७४ ॥
ततोसौ मुदितस्तुंगमारुह्य वरवारणं । उद्दिष्टपदविस्तेन विवेश सुमहद्वनं ॥ ७५ ॥
दूरे च सरसो दुर्गे स्थितं दृष्ट्वा वरं द्विपं । जगादानय तत्क्षिप्रं कंचिदश्वं महाजवं ॥ ७६ ॥
ढौकितश्च स मायाश्वः सद्यः स्फुरितविग्रहः । आरुरोह स तं यातश्चोत्पत्य तुरगो नभः ॥ ७७ ॥
हाहाकारं नृपाः कृत्वा वहंतः शोकमुद्धतं । निवृत्ताः सहसा भीता विस्मयव्याप्तमानसाः ॥७८॥
ततो नदीगिरेर्देशान् अरण्यानि च भूरिशः । प्रयाति लंघयन् सप्तिः मनोवदानिवारणः ॥७८॥
नाति दूरे ततो दृष्ट्वा प्रसादं तुंगमुच्चलं । ह्रियमाणः स शाखायां दृढं लग्नो महातरोः ॥ ८० ॥

अवतीर्य ततो वृक्षाद्विश्रम्य च सविस्मयः । चरणाभ्यां परिक्रामन् प्रययौ स्तोकमंतरं ॥ ८१ ॥
ददर्श च महातुंगं शालं चामीकरात्मकं । गोपुरं च सुरत्नेन तोरणेनातिशोभिनं ॥ ८२ ॥
नानाजातीश्च वृक्षाणां लताजालकयोगिनां । फलपुष्पसमृद्धानां नानाविहगशोभिनां ॥ ८३ ॥
संध्याभ्रकूटसंकाशान्प्रासादान्मंडलस्थितान् । सेवां प्रासादराजस्य कुर्वाणानिव तत्परां ॥ ८४ ॥
ततोऽसौ खड्गमालंब्य दाक्षिणो दक्षिणे करे । केसरीवातिनिश्शंकः प्रविवेश स गोपुरं ॥ ८५ ॥
अपश्यच्च परिस्फीताः पुष्पजातीर्बहुत्विषः । मणिकांचनसोपाना वापी च स्फटिकांभसः ॥८६॥
रमणांश्च महामोदान् विशालान् कुंदमंडपान् । चलत्पल्लवसंघातान् कृतसंगीतषट्पदान् ॥८७॥
ततश्च माधवीतुंगजालकांतरयोगिना । विस्फारितप्रसन्नेन चक्षुषा चारुकांतिना ॥ ८८ ॥
रत्नवातायनैर्युक्तं मुक्ताजालकशोभितैः । शातकौंभमहास्तंभसहस्रकृतधारणं ॥ ८९ ॥
नानारूपसमाकीर्णं मेरुश्रृंगसमप्रभं । वज्रवद्धमहापीतमद्राक्षीद्भवनं नृपः ॥ ९० ॥
अचिंतयच्च किंत्वेतद्विमानं पतितं खतः । वासवस्य हृतं किंवा दैत्यैः क्रीडागृहं भवेत् ॥ ९१ ॥
पातालादुत्थितः किंवा नागेंद्रस्यायमालयः । कुतोऽपि कारणत्सूर्यमरीचिकृतखंडनः ॥ ९२ ॥
अहो मे यथुना तेन भद्रेणोपकृतं परं । अदृष्टपूर्वमेतद्यत्साधु वेश्मावलोकितं ॥ ९३ ॥

विवेश चिंतयन्नेवं भवनं तन्मनोहरं । संफुल्लवदनांभोजो ददर्श च जिनाधिपं ॥ ९४ ॥
हुताशनशिखागौरं पूर्णचंद्रनिभाननं । पद्मासनस्थितं तुंगं जटामुकुटधारिणं ॥ ९५ ॥
प्रातिहार्यसमायुक्तं हेमतामरसार्चितं । चित्ररत्नकृतच्छायं तुंगसिंहासनस्थितं ॥ ९६ ॥
ततोंजालिपुटं मूर्ध्नि कृत्वा हृष्टतनूरुहः । प्रणामं प्रयतः कुर्वन् भक्त्या मूर्छामुपागतः ॥ ९७ ॥
क्षणेन प्राप्य संज्ञां च स्तुतिं कृत्वा सुसंस्कृतां । विस्रब्धं जनकस्तस्थौ विस्मयं परमुद्वहन् ॥९८॥
कृती चपलवेगश्च मायां संहृत्य सत्वरः । खड्गविद्याधरो भूत्वा संप्राप रथनूपुरं ॥ ९९ ॥
स्वामिने चावदन्नत्वा तुष्टो जनकमाहृतं । रम्यकाननसंवीते स्थापितं जिनवेश्मनि ॥ १०० ॥
आगतं जनकं ज्ञात्वा परं हर्षमुपागमत् । आप्तवर्गेण संयुक्तश्चंद्रयानो महामनाः ॥ १०१ ॥
गृहीत्वा च परां पूजां नानावाहनसंकुलः । मनोरथरथारूढो ययौ जिनवरालयं ॥ १०२ ॥
दृष्ट्वा तत्सुमहत्सैन्यमागच्छत्परमोज्वलं । तूर्यशंखमहानादमाविग्नो जनकोऽभवत् ॥ १०३ ॥
ततो हरिगजद्वीपिनागहंसादिवाहिनां । पुरुषाणामिदं मध्ये विमानं स व्यलोकयत् ॥ १०४ ॥
अचिंतयच्च ते नूनमेते विद्याधरा जनाः । विजयार्द्धगिरेरूर्ध्वं ये वसंतीति मे श्रुतं ॥ १०५ ॥
मध्येयमस्य सैन्यस्य स्वविमानकृतास्थितिः । शोभते परमो दीप्त्या कोऽपि विद्याधराधिपः १०६

एवं चिंतापरे तस्मिन्नृपतौ दैत्यपुंगवः । संप्रापच्चैत्यभवनं सम्मदी नतविग्रहः ॥ १०७ ॥
दृष्ट्वा दैत्याधिपं प्राप्तं भीमसौम्यपरिग्रहं । जनकः किमपि ध्यायंस्तस्थौ सिंहासनांतरे ॥ १०८ ॥
भक्त्या शशांकयानोऽपि कृत्वा पूजामनुत्तमां । प्रणम्य विधिना चक्रे जिनानां परमस्तुतिं १०९
विपंचीं च विधायांके प्रियामिव सुखस्वरां । महाभावनया युक्तो जगौ जिनगुणात्मकं ॥ ११० ॥

त्रिभुवनवरदमभिष्टुत—मतिशयपूजाविधानविनिहितचित्तैः ॥
प्रणतं सुरवृषभगणैः । प्रणमत नाथं जिनेंद्रमक्षयसौख्यं ॥ १११ ॥
ऋषभं सततं परमं । वरदं मनसा वचसा शिरसा सुजनाः ॥
भजत प्रवरं विलयं । प्रगतं विहितं सकलं दुरितं भवति ॥ ११२ ॥
अतिशयपरमं विनिहितदुरितं । परमगतिगतं नमत जिनवरं ॥
सर्वसुरासुरपूजितपादं । क्रोधमहारिपुनिर्मितभंगं ॥ ११३ ॥
उत्तमलक्षणलक्षितदेहं । नौमि जिनेंद्रमहं प्रयतात्मा ॥
भक्त्या विनामितसर्वजनौघं । नतिमात्रविनाशितभक्तभयं ॥ ११४ ॥
अनुपमगुणधरमनुपमकायं । विनिहतभवमयसकलकुचेष्टं ॥

कलिमलघनपटविनयनदक्षं । प्रणमत जिनवरमतिशयपूतं ॥ ११५ ॥
इति गायति दैत्येंद्रे जिनसिंहासनांतरात् । निर्ययौ भयमुत्सृज्य जनको नाम शोभनः ॥११६॥
ततश्चंद्रायणोऽवोचदीषच्चलितमानसः । को भवान् विजने देशे वसत्यत्र जिनालये ॥ ११७ ॥
उरगाणां पतिः किंस्यात्किंवा विद्याधराधिपः । सखे वद कुतः प्राप्तो भवान् किंसंज्ञकोऽपि वा ॥
मिथिलानगरीतोहं प्राप्तो जनकसंज्ञकः । हृतो मायातुरंगेण नभस्वरमहीपते ॥ ११९ ॥
इत्युक्ते जनकेनैतावन्योन्यं प्रीतिमानसौ । इच्छाकारांजली कृत्वा सुखासीनौ बभूवतुः ॥ १२० ॥
क्षणं स्थित्वा च वृत्तांतैरन्योन्यविनिवेदितैः । जनितान्योन्यसन्मानौ तौ विश्रंभं समीयतुः १२१
ततश्चंद्रायणोऽवोचद्धीमान् कृत्वा कथांतरं । पुण्यवानास्मि येन त्वं मिथिलापतिरीक्षितः ॥१२२॥
अस्ति ते दुहिता राजन् लक्षणैरन्विता शुभैः । कर्णगोचरमायाता मम भूरिजनाननात् ॥१२३॥
सा भामंडलसंज्ञाय मत्पुत्राय प्रदीयतां । त्वया विहितसंबंधं मन्ये स्वं परमोदयं ॥ १२४ ॥
सोऽवोचत्सर्वमेतत्स्यात् कृतं विद्याधराधिप । किंतु दाशरथेर्बाला ज्येष्ठस्य परिकल्पिता ॥१२५॥
सुहृच्चंद्रगतिरूचे सा कस्मात्तस्य कल्पिता । सोऽवोचच्छ्रूयतामस्ति भवतां चेत्कुतूहलं ॥ १२६ ॥
धनगोरत्नसंपूर्णा मदीया मिथिला पुरी । अर्द्धवर्वरकैर्म्लैच्छैरबाध्यत सुदारुणैः ॥१२७॥

अपीड्यंत प्रजाः सर्वाः स्वह्रियंत धनोत्कराः । धर्मयज्ञान्न्यवर्तंत श्रावकाणां महात्मनां ॥१२८॥
ततो महाहवे जाते रक्षित्वा मां सहानुजं । पद्मेन विजिता म्लेच्छा ये सुरैरपि दुर्जयाः ॥ १२९ ॥
लक्ष्मणश्चानुजस्तस्य शक्रोपमपराक्रमः । कुरुते शासनं नित्यं महाविनयसंयुतः ॥ १३० ॥
यदि नाम न तत्सैन्यं ताभ्यां स्याद्विजितं द्विषा । म्लेच्छलोकेन संपूर्णा ततः स्यादखिला मही॥
विवेकरहितास्ते हि लोकपीडामया इव । महोत्पाता इवात्यंतभीषणा विपदारुणाः ॥ १३२ ॥
प्राप्य तौ गुणसंपूर्णौ सुपुत्रौ लोकवत्सलौ । इंद्रवद्भवने राज्यं सुखं दशरथोऽभजत् ॥ १३३ ॥
तस्य राज्येऽधुना जाते नयशौर्यविलासिनः । वातोऽपि नाहरत्किंचित्प्रजानां पुरुसंपदां ॥१३४॥
ततः प्रत्युपकारं कं करोमीति समाकुलः । न रात्रौ न दिवा निद्रां संप्राप्तोऽस्मि विचिंतयन्१३५
रक्षिता येन मे प्राणास्तस्य रामस्य नो समः । कश्चित्प्रत्युपकारोऽस्ति किमुताधिक्यगोचरः १३६
हतं महोपकारेण प्रतीकारविवर्जितं । मन्ये तृणमिवात्मानं भोगभीतिपरांमुखः ॥ १३७ ॥
नवयौवनसंपूर्णां दृष्ट्वा दुहितरं शुभां । गतो विरलतां शोकः शोकस्थानेऽपि मे ततः ॥ १३८ ॥
तया कल्पितया तस्य रामस्य पुरुतेजसः । नावेव शोकजलधेस्तारितोहं सुजातया ॥ १३९ ॥
ततो नभश्चरा ऊचुरंधकारी–कृताननाः । अहो मानुषमात्रस्य बुद्धिस्तव न शोभना ॥ १४० ॥

म्लेच्छैः किं गृहणं क्षुद्रैर्यदि तेषां पराजये । प्रशशंस परां शक्तिं भूमिगोचरिणोर्बुधः ॥ १४१ ॥
म्लेच्छनिर्घाटनात्स्तोत्रं त्वया पद्मस्य कुर्वता । कृता प्रत्युतनिंदेयमहो हास्यमिदं परं ॥ १४२ ॥
शिशोर्विषफले प्रीतिर्निःश्वस्य वदरादिषु । ध्वांक्षस्य पादपे शुष्के स्वभावः खलु दुस्त्यजः १४३
कुसंबंधं परित्यज्य क्षितिगोचरिणामतः । कुरु विद्याधरेंद्रेण संबंधमधुना सह ॥ १४४ ॥
क्व महासंपदो देवैः सदृशो व्योमचारिणः । क्व भूमिगोचराःक्षुद्राः सर्वथैवातिदुःखिताः १४५
जनकोवोचदत्यंतविपुलः क्षारसागरः । न तत्करोति यद्वाप्यः स्तोकस्वादुपयोभृतः ॥ १४६ ॥
अत्यंतघनबंधेन तमसा भूयसापि किं । अल्पेन तु प्रदीपेन जन्यते लोकचेष्टितं ॥ १४७ ॥
असंख्या अपि मातंगा मादिनः कुर्वते न तत् । केसरी यत्किशोरःसंश्चंद्रमंडलकेसरः ॥ १४८ ॥
इत्युक्ते केऽपि नोत्यर्थं समं कृतमहारवाः । भूमिचेष्टां समारब्धा निंदितुं गगनायनाः ॥ १४९ ॥
विद्यामाहात्म्यनिर्मुक्ता नित्यं स्वेदसमन्विताः । शौर्यसंपत्परित्यक्ता शोचनीया धराचराः॥१५०॥
वद तेषां पशूनां च को भेदो जनक त्वया । दृष्टो येन त्रपां त्यक्त्वा दुर्बुद्धिस्तान् विकत्थसे१५१
उवाच जनको धीरः हा कष्टं किं श्रुतं मया । वसुधाराजरत्नानां निंदितं पापकर्मणा ॥ १५२ ॥
कथं त्रिभुवनख्यातो वंशो नाभेयसंभवः । कर्णगोचरमेतेषां न प्राप्तो लोकपावनः ॥ १५३ ॥

अर्हतास्त्रिजगत्पूज्याश्चक्रिणो हरयो बलाः । उत्पद्यंते नरा यस्यां सा कथं निंदिता मही ॥१५४॥
पंचकल्याणसंप्राप्तिः पुंसां वदत खेचराः । स्वप्नेऽपि जातु किं दृष्टा भवाद्भिः खेचरावनौ॥१५५॥
इक्ष्वाकुवंशसंभूता गोष्पदीकृतविष्टपाः । अनीक्षितपरच्छत्रा महारत्नसमृद्धयः ॥ १५६ ॥
सुरेंद्रकीर्तितोदारकीर्त्तयो गुणसागराः । व्यतीता बहवो भूमौ कृतकृत्या नरोत्तमाः ॥ १५७ ॥
पुत्रोऽनरण्यराजस्य तत्र वंशे महात्मनः । जातः सुमंगलाकुक्षौ नृपो दशरथोऽभवत् ॥ १५८ ॥
यो लोकहितमुद्दिश्य विरहेदपि जीवितं । मूर्ध्ना वहति यस्याज्ञां शेषामिव जनाऽखिलः ॥ १५९ ॥
चतस्रो यस्य संपन्ना सर्वशोभागुणोज्वलाः । आशा इव महादेव्यः सुभावाः सुप्रसाधिताः १६०
शतानि वरनारीणां पंच यस्य सुचेतसः । वक्त्रनिर्जितचंद्राणां हरंति चरितैर्मनः ॥ १६१ ॥
पद्मो नाम सुतो यस्य पद्मालिंगितविग्रहः । दीप्तिनिर्जिततिग्मांशुः कीर्तिनिर्जितशीतगुः ॥१६२॥
स्थैर्यनिर्जितशैलेंद्रः शोभाजितपुरंदरः । शौर्येण यो महापद्मं जयेदपि सुविभ्रमः ॥ १६३ ॥
अनुजो लक्ष्मणो यस्य लक्ष्मीनिलयविग्रहः । द्रवंति शत्रवो भीता दृष्ट्वा यस्य शरासनं ॥ १६४ ॥
वायसा अपि गच्छंति नभसा तेन किं भवेत् । गुणेष्वत्र मनः कृत्यमिंद्रजालेषु को गुणः॥१६५॥
ग्रहणं वा भवद्भिः किं यत्र देवाधिपा अपि । क्रियंते भूमिसंभूतैर्नमंतः क्षितिमस्तकाः ॥१६६॥

इत्युक्ते रहसि स्थित्वा सन्मंत्र्य गगनायनाः । ऊचुर्न वेत्सि कार्याणि जनकैकाग्रमानसः॥१६७॥
पद्मो लक्ष्मण इत्युच्चैर्गर्जितं वहसे वृथा । अथ विप्रत्ययः कश्चित्ततोऽस्माद्व्रज निश्चयं ॥ १६८ ॥
समयं शृणु भूनाथ वज्रावर्तमिदं धनुः । इदं च सागरावर्तममरैः कृतरक्षणं ॥ १६९ ॥
इमे वाणासने कर्तुमधिज्ये यदि तौ क्षमौ । अनेनैव तयोः शक्तिं ज्ञास्यामः किं बहूदितैः॥१७०॥
वज्रावर्तं समारोप्य पद्मो गृह्णातु कन्यकां । अस्माभिः प्रसभं पश्य तामानीतामिहान्यथा॥१७१॥
ततः परममित्युक्त्वा धनुषी वीक्ष्य दुर्ग्रहे । मनकाष्वाकुलीभावं जनको मनसागमत् ॥ १७२ ॥
ततः कृत्वा जिनेंद्राणां पूजां स्तोत्रं तु भावतः । गदासीरादिसंयुक्ते पूजां नीते शरासने॥१७३॥
उपादाय च ते शूरा जनकं च नभश्चराः । मिथिलाभिमुखं जग्मुश्चंद्रोऽपि रथनूपुरं ॥ १७४ ॥
ततः कृतमहाशोभं समंगलमहाजनं । विवेश जनको वेश्म पौरलोकावलोकितः ॥ १७५ ॥
विधायायुधशालां च समावृत्त्य नभश्चराः । वहंतः परमं गर्वं नगरस्य वहिः स्थिताः ॥ १७६ ॥
जनकस्तु सखेदांगः कृत्वा किंचित्स भोजनं । चिंतयाकुलितो भेजे तल्पमुत्साहवर्जितः॥१७७॥
तत्र चोत्तमनारीभिर्विनीताभिः सुविभ्रमं । चंद्रांशुचयसंकाशैश्चामरैरभिवीजितः ॥ १७८ ॥
उष्णदीर्घातिनिश्वासान् विमुंचन् विषमानलं । दधत्या विविधं भावमभाष्यत विदेहया ॥१७९॥

का क्व कामिंस्त्वया दृष्टा नारी या तेन लक्षितः । तद्वियोगकथामेतामवस्थामसि संश्रितः१८०
प्राकृता कापि सा नारी कामिनीगुणरिक्तिका । इति या स्मरसंसक्तं भवंतं नानुकंपते ॥१८१॥
नाथ वेदय मे स्थानं येन तामानयामि ते । भवद्दुःखेन मे दुःखं जनस्य सकलस्य वा ॥ १८२ ॥
उदारे सति सौभाग्ये कथमिष्टोऽसि नो तया । ग्रावमानसया येन धृतिं न लभसे भृशं ॥१८३॥
उत्तिष्ठ भज निश्शेषाः क्रिया राजजनोचिताः । शरीरे सति कामिन्यो भविष्यंति मनीषिताः१८४
इत्युक्ते पार्थिवोऽवोचत् कांतां प्राणगरीयसीं । अन्यथा खेदितस्यास्य किं मे चित्तस्य खेद्यते ॥
शृणु देवि यतोवस्थामीदृशीमहमागतः । अपरिज्ञातवृत्तांता किमर्थमिति भाषसे ॥ १८६ ॥
तेन मायातुरंगेण नीतोहं विजयाचलं । समयेनामुना तत्र मुक्तः पत्या खगामिनां ॥ १८७ ॥
वज्रावर्तमधिज्यं चेद्धनुः पद्मः करिष्यति । ततः स्यात्तस्य कन्येयं तनयस्य ममान्यथा ॥१८८॥
कर्मानुभावतस्तच्च मया साध्वसतोऽपि वा । प्रतिपन्नमभाग्येन बंधावस्थामुपेयुषा ॥ १८९ ॥
समुद्रावर्तसंख्येन तच्चापेन समन्वितं । आनीतं खेचरैरुग्रैर्बहिःस्थानस्य तिष्ठति ॥ १९० ॥
मन्ये तस्य सुरेशोऽपि न शक्तोऽधिज्यताकृतौ । दिग्ज्वालानलतुल्यस्य दुर्निरीक्ष्यस्य तेजसा १९१
कृतांतायैव तत्क्रुद्धमनाकृष्टमपि स्वनत् । अनधिज्यमपि स्वैरं भीष्मं तिष्ठत्यनारतं ॥ १९२ ॥

अधिज्येन क्षते यस्मिन् पत्रेन मदियं ध्रुवं । हरिष्यते खगैः कन्या मांसपेशीव जंबुकात् ॥१९३॥
विंशतिर्वासराणां च वस्त्वन्यत्र कृतोऽवधिः । वरान्नीता वराकीयं भूयोऽस्माभिः क्व वीक्षिता ॥
एवमुक्तेऽस्रसंपूर्णलोचना सहसाभवत् । विदेहापहृतं बालमस्मरच्च प्रसंगतः ॥ १९५ ॥
अतीतागामिशोकाभ्यामभितः पीडितेव सा । चकार वारिनेत्राभ्यां कुररीव कृतस्वना ॥१९६॥
परिदेवनमेवं च चक्रे विह्वलमानसा । कुर्वती परिवर्गस्य द्रविणं चेतसामलं ॥ १९७ ॥
कीदृग्वामं मया नाथ दैवस्यापकृतं भवेत् । पुत्रेण यन्न संतुष्टं हर्तुं कन्यां समुद्यतं ॥ १९८ ॥
स्नेहालंबनमेकैव बालिकेयं सुचेष्टिता । मम ते बांधवानां च प्रेमभावो जनस्य च ॥ १९९ ॥
दुःखस्य यावदेतस्य नांतं गच्छामि पापिनी । द्वितीयं तावदेवन्मे कृतसन्निधि वर्तते ॥ २०० ॥
शोकावर्तनिमग्नां तां करुणं रुदतीमिति । नियम्याश्रुं प्रियोवोचदतः शोकसमाकुलः ॥ २०१ ॥
अलं कांते रुदित्वा ते ननु कर्मार्जितं पुरा । नर्तयत्यखिलं लोकं नृत्ताचार्यो ह्यसौ परः ॥२०२॥
अथवा मयि विश्वस्ते हृतो दुष्टेन बालकः । अप्रमत्तस्य बालां तु हर्तुं शक्तोऽस्ति को मम॥२०३॥
आप्तप्रधारणन्यायमप्रारित्यज्यता मया । पृष्टासि दयिते वस्तु जानाम्येत्सुखावहं ॥ २०४ ॥
सारैरेवंविधैर्वाक्यैः कांतेन कृतसांत्वना । विदेहा विरलीकृत्य शोकं कृच्छ्रादवस्थिता ॥ २०५ ॥

ततो धनुर्ग्रहप्रांते विशाला रचितावनिः । स्वयंवरार्थमाहूताः पार्थिवा सकलाः क्षितौ ॥२०६॥
प्रेषितः कोशलां दूतः पद्माद्याः समुपागताः । मातृपित्रादिसंयुक्ता जनकेनाभिपूजिताः ॥२०७॥
ततो हर्म्यतले कांते स्थिता परमसुंदरी । कन्या सप्तशतांतस्था सीता शूरभटावृता ॥ २०८ ॥
प्रांतेषु सर्वसामंता वेश्मनोऽस्यावतस्थिरे । कुर्वाणा विविधां लीलां महाविभववर्तिनः ॥ २०९ ॥
ततः स्थित्वा पुरस्तस्या कंचुकी सुबहुश्रुतः । जगाद तारशब्देन हेमवेत्रलताकरः ॥ २१० ॥
राजपुत्रि परीक्षस्व पद्मोसौ पद्मलोचनः । अयोध्याधिपतेराद्यः पुत्रो दशरथश्रुतेः ॥ २११ ॥
लक्ष्मीवान् लक्ष्मणश्चायमनुजोस्य महाद्युतिः । भरतोयं महाबाहुः शत्रुघ्नोयं सुचेष्टितः ॥२१२॥
सुतैर्दशरथोऽमीभिर्गुणसागरमानसैः । वसुधां शास्ति निर्दग्धभयांकुरसमुद्भवां ॥ २१३ ॥
हरिवाहननामायं धीमानेष धनप्रभः । अयं चित्ररथः कांतो दुर्मुखोयं प्रभाववान् ॥ २१४ ॥
श्रीसंजयो जयो भानुः सुप्रभो मंदरो बुधः । विशालः श्रीधरो वीरो बंधुर्भद्रवलः शिखी ॥२१५॥
एतेऽन्ये च महासत्वा महाशोभासमन्विताः । विशुद्धवंशसंभूताश्चंद्रानिर्मलकांतयः ॥ २१६ ॥
कुमाराः परमोत्साहा गुणभूषणधारिणः । महाविभवसंपन्ना भूरिविज्ञानकोविदाः ॥ २१७ ॥
गजोयमस्य शैलाभस्तुरंगोस्यायमुन्नतः । रथोस्यायं महाभागो भटोस्यायं कृताद्भुतः ॥ २१८ ॥

सांकाश्यपुरनाथोयमयं रध्रपुराभिधः । गवाधुमदधीशोयमयं नंदनिकाधिपः ॥ २१९ ॥
विभुः शूरपुरस्यायमेष कुंडपुराधिपः । अयं मगधराजेंद्रः कांपिल्यविभुरेष च ॥ २२० ॥
अयमिक्ष्वाकुसंभूतो नृपोयं हरिवंशजः । अयं कुरुकुलानंदो भोजोयं वसुधापतिः ॥ २२१ ॥
इत्यादिवर्णनायुक्ताःश्रूयंतेऽमी महागुणाः । इदं त्वदर्थमेतेषां समारब्धं परीक्षणं ॥ २२२ ॥
वज्रावर्तमिदं चापमारोपयति यो नरः । कुमारि वरणीयोसौ भवत्या पुरुषोत्तमः ॥ २२३ ॥
क्रमेण मानिनस्ते च कुर्वाणाः स्वविकत्थनं । वज्रावर्तधनुस्तेन ढौकिता चारुविभ्रमा ॥२२४॥
आसीदत्सु कुमारेषु धनुर्मुंचति पावकं । विद्युत्सटा समाकारं निश्वसद्भीषणोरगं ॥ २२५ ॥
चक्षुस्तत्र द्रुतं केचिद्धनुर्ज्वालासमाहतं । त्रस्ताः पिधाय पाणिभ्यां पराचीनत्वमाश्रिताः २२६
तस्थुर्दूरत एवान्ये दृष्ट्वा स्फुरितपन्नगान् । कंपमानसमस्तांगा निमीलितविलोचनाः ॥ २२७ ॥
केचिद्भराकुलाः पेतुः क्षिताविन्ये गिरोज्झिताः । द्रुतं पलायिताः केचिदेके मूर्छामुपागताः २२८
केचित्पन्नगवातेन क्षिप्ता मर्मरपत्रवत् । अपरे स्तंभमायाताः स्थिताः शांतर्द्वयोऽपरे ॥ २२९ ॥
केचिदूचुर्यदि स्थानं गमिष्यामो निजं ततः । जीवदानानि दास्यामश्चरणौ देहि देवते ॥२३०॥
ऊचुरन्ये न नारीभिः सेवां मानसवासिनः । ध्रियमाणाः करिष्यामो रूपिण्यापि किमेतया२३१

अन्ये जगुरियं नूनं केनापि क्रूरचेतसा । प्रयुक्ता परमा माया बधार्थं पृथिवीक्षितां ॥ २३२ ॥
अन्ये जगुः किमस्माकं कामेनास्ति प्रयोजनं । ब्रह्मचर्येण नेष्यामः समयं साधवो यथा ॥२३३॥
ततः पद्मः समुत्तस्थौ वरकार्मुकलालसः । डुढौके च महानागमंथरां गतिमुद्वहन् ॥ २३४ ॥
आसीदति शुभे तस्मिन् रूपं भेजे धनुर्निजं । सुचारुपरमं सौम्यमंतेवासी गुराविव ॥ २३५ ॥
ततो विस्रब्धमादाय धनुरुद्वेष्टच चांशुकं । समारोपयदभ्युच्चैर्ध्वनितं विपुलं प्रभं ॥ २३६ ॥
महाजलधरध्वानशंकिभिः शिखिभिः कृतं । मुक्तकेकारवैर्नृत्यं वद्धविस्तीर्णमंडलैः ॥ २३७ ॥
अलातचक्रसंकाशः संजातो दिवसाधिपः । सुवर्णरजसाच्छन्ना इवासन् व्योमवाहवः ॥ २३८ ॥
साधु साध्विति देवानां बभूव नभसि स्वनः । ननृतुर्व्यंतराः केचिन्मुंचंतः पुष्पसंहतीः ॥२३९॥
ततो टनिजटंकारवधिरीकृतविष्टपं । आचकर्ष धनुः पद्मः संप्राप्तं चक्रताविव ॥ २४० ॥
विकलीभूतनिश्शेषहृषीकः सकलो जनः । तदावर्तमिव प्राप्तो भ्राम्यति त्रस्तमानसः ॥ २४१ ॥
प्रवातघूर्णतांभोजपलाशाधिककांतिना । चक्षुषा स्मरचापेन सीता रामं निरैक्षत ॥ २४२ ॥
रोमांचार्चितसर्वांगा दधती परमस्रजं । प्रीता रामं डुढोके सा वीडाविनामितानना ॥ २४३ ॥
पार्श्वस्थया तया रेजे स तथा सुंदरा यथा । यथायमिति दृष्टांतं यो गदेत्स गतत्रपः ॥ २४४ ॥

अवतारितमौर्वीकं स कृत्वा सायकासनं । तस्थौ विनयसंपन्नः स्वासने सीतया सह ॥ २४५ ॥
सकंपहृदया सीता रामाननदिदृक्षया । भावं कमपि संप्राप्ता नवसंगमसाध्वसा ॥ २४६ ॥
क्षुब्धाकूपारनिस्वानं सागरावर्तकार्मुकं । तावच्च लक्ष्मणोऽधिज्यं कृत्वास्फालयदुन्नतं ॥ २४७ ॥
शरे निहितदृष्टिं तं समालोक्य नभश्चराः । वदंतो देव मा मेति मुमुचुः कुसुमोत्करान् ॥ २४८ ॥
आकृष्य कार्मुकं क्रूरं मौर्वीसंरावमूर्जितः । अवतार्य च पद्मस्य पार्श्वे सुविनयस्थितः ॥ २४९ ॥
विक्रांताय तथा तस्मै विद्याभृच्चंद्रवर्धनः । अष्टादश ददौ कन्या धियैवाप्रौढिका इति ॥२५०॥
विद्याधरैः समागत्य परमं भयपूरितैः । वृत्तांते कथिते तस्मिंश्चंद्रश्चितापरः स्थितः ॥ २५१ ॥
वृत्तांतमिममालोक्य भरतः पुरुविस्मयः । अशोचदेवमात्मानं मनसा संप्रबुद्धवान् ॥ २५२ ॥
कुलमेकं पिताप्येक एतयोर्मम चेदृशं । प्राप्तमद्भुतमेताभ्यां न मया मंदकर्मणा ॥ २५३ ॥
अथवा किं मनो व्यर्थं परलक्ष्म्याभितप्यसे । पुरा चारूणि कर्माणि न कृतानि ध्रुवं त्वया२५४
पद्मगर्भदलच्छाया साक्षाल्लक्ष्मीरिवोज्वला । ईदृशी पुरुपुण्यस्य पुंसो भवति भामिनी ॥२५५॥
कलाकलापनिष्णाता विज्ञाना केकया ततः । विज्ञाय तनयाकूतं कर्णे प्रियमभाषत ॥ २५६ ॥
भरतस्य मया नाथ शोकवल्लक्षितं मनः । तथा कुरु यथा नायं निर्वेदं परमृच्छति ॥ २५७ ॥

अस्त्यत्र कनको नामजनकस्यानुजो नृपः । सुप्रभायां ततो जाता सुकन्या लोकसुंदरी ॥२५८॥
स्वयंवराभिधं भूयः समुद्घोष्य नियोज्यतां । तथायं यावदायाति नान्यं तं भावनांतरं ॥२५९॥
ततः परममित्युक्त्वा वार्ता दशरथेन सा । कर्णगोचरमानीता कनकस्य सुचेतसः ॥ २६० ॥
यदाज्ञापयतीत्युक्त्वा कनकेनान्यवासरे । समाहूता नृपाः क्षिप्रं गता ये निलयं निजं ॥२६१॥
ततो यथोचितस्थानस्थितभूनाथमध्यगं । नक्षत्रं गणमध्यस्थं शर्वरीवरविभ्रमं ॥ २६२ ॥
उपात्तसुमनोदामा कानकी कनकप्रभा । सुप्रभा भरतं वव्रे सुभद्रा भरतं यथा ॥ २६३ ॥
अत्यंतविषमीभावं पश्य श्रेणिक कर्मणां । यतोऽसौ संप्रबुद्धः सन् कन्यया मोहितः पुनः॥२६४॥
विलक्षाः पार्थिवाः सर्वे जग्मुः स्थानं यथायथं। अस्थुश्च विकथाशक्त्या बंधुवर्गसमागमे॥२६५॥
यादृक् येन कृतं कर्म भुंक्ते तादृक् स तत्फलं। नह्युप्तान् कोद्रवान् कश्चिदश्नुते शालिसंपदं २६६॥
केतुतोरणमालाभिमंडितायां महाद्युतौ । अगुल्फकुसुमापूर्णा विशाला पण्यवर्त्मनि ॥ २६७ ॥
स शंखतूर्यनिस्वानपूरिताखिलवेश्मनि । मिथिलायां तयोश्चक्रे विवाहः परमोत्सवः ॥ २६८ ॥
द्रविणेन तथा लोकः सकलो परिपूरितः । महाप्रलयमायातं देहीति ध्वनितं यथा ॥ २६९ ॥
ये विवाहोत्सवं दृष्टुं स्थिता भूपाः सुचेतसः । परमं प्राप्य सन्मानं ययुस्ते स्वं स्वमालयं २७०

सकलविष्टपनिर्गतकीर्तयः । परमरूपपयोनिधिवर्तिनः ॥
पितृजनार्पितसंमदसंपदः । परमरत्नविभूषितविग्रहाः ॥ २७१ ॥
विविधयानसमाकुलसैनिकाः । जलनिधिस्वनतूर्यनिनादिताः ॥
विविशुरभ्युदयेन सुकोशलां । दशरथस्य सुता वधुके तथा ॥ २७२ ॥
समवलोकितुमुत्तमविग्रहे । पुरि तदा वधुके सकलो जनः ॥
रहितसामिकृतिस्वमनःक्रियः । श्रयति राजपथं भृशमाकुलः ॥ २७३ ॥
कृतसमस्तजनप्रतिमाननाः । पुरुगुणास्तवसन्नतमूर्तयः ॥
स्वनिलयेषु महासुखभोगिनो । दशरथस्य सुताः सुधियः स्थिताः ॥ २७४ ॥
समवगम्य जनाः शुभकर्मणः । फलमुदारमशोभनतोऽन्यथा ॥
कुरुत कर्म बुधैरभिनंदितं । भवत येन रवेरधिकप्रभाः ॥ २७५ ॥

इत्यार्षे रविषेणाचार्यप्रोक्ते पद्मचरिते रामलक्ष्मणरत्नमालाभिधानं नामाष्टाविंशतितमं पर्व ।

# एकोनत्रिंशत्तमं पर्व ।

आषाढधवलाष्टम्याः प्रभृत्यथ नराधिपः । महिमानं जिनेंद्राणां प्रयतः कर्तुमुद्यतः ॥ १ ॥
सर्वाः प्रियास्तदा तस्य तनया बांधवास्तथा । विधातुं जिनबिंबानामिति कर्तव्यमुद्यताः ॥ २ ॥
पिनष्टि पंचवर्णानि कश्चिच्चूर्णानि सादरः । कश्चिद्ग्रथ्नाति माल्यानि लब्धवर्णः सुभक्तिषु॥३॥
वासयत्युदकं कश्चिद्रवयत्यपरःक्षितिं । पिनष्टि परमान् गंधान् कश्चिद्बहुविधच्छवीन् ॥ ४ ॥
द्वारशोभां करोत्यन्यो वासोभिरतिभासुरैः । नानाधातुरसैः कश्चित्कुरुते भित्तिमंडनं ॥ ५ ॥
एवं जनः परां भक्तिं वहन् प्रमदपूरितः । जिनपूजासमाधानात्पुण्यमर्जयदुत्तमं ॥ ६ ॥
ततः सर्वसमृद्धीनां कृतसंभारसन्निधिः । चकार स्नपनं राजा जिनानां तूर्यनादितं ॥ ७ ॥
अष्टाहोपोषितं कृत्वाभिषेकं परमं नृपः । चकार महतीं पूजां पुष्पैः सहजकृत्रिमैः ॥ ८ ॥
यथा नंदीश्वरे द्वीपे शक्रः सुरसमन्वितः । जिनेंद्रमहिमानंदं कुरुते तद्वदेव सः ॥ ९ ॥
ततः सदनयातानां महिषीणां नराधिपः । प्रजिघाय महापूतं शांतगंधोदकं कृती ॥ १० ॥
तिसृणां तरुणीस्त्रीभिर्नीतं शांत्युदकं द्रुतं । प्रतीता मस्तके चक्रुस्ततो दुरितनोदनं ॥ ११ ॥

वृद्धकंचुकिनो हस्ते दत्तं जिनवरोदकं । अप्राप्य सुप्रभा कोपं शोकं च परमं गता ॥ १२ ॥
अचिंतयच्च नो साध्वी बुद्धिरेषा महीभृतः । यदेता मानिता नाहं शांतिवारिविसर्जनात् ॥१३॥
को वात्र नृपतेर्दोषः प्रायः पुण्यं पुरा मया । नार्जितं येन संप्राप्ता निकारमिदमीदृशं ॥ १४ ॥
पुण्यवत्य इमा श्लाघ्या महासौभाग्यसंयुताः । पूतं यासां जिनेंद्रांबु प्रीत्या प्रहितमुत्तमं ॥१५॥
अपमानेन दग्धस्य हृदयस्यास्य मेऽधुना । शरणं मरणं मन्ये तापः शाम्यति नान्यथा ॥ १६ ॥
विशारसंज्ञमाहूय भांडागरिकमेककं । जगाद भद्र नाख्येयं त्वयेदं वस्तु कस्यचित् ॥ १७ ॥
विषेणात्यंतपरमं मम जातं प्रयोजनं । तदानय द्रुतं भक्तिर्मयि चेत्तव विद्यते ॥ १८ ॥
गत्वा स यावदन्विष्यंश्चिरयत्यतिशंकितः । तावत्तल्पगृहं गत्वा सातिष्ठत्स्रस्तगात्रिका ॥ १९ ॥
नृपतिश्चागतो वीक्ष्य प्रियास्तिस्रस्तया विना । समन्विष्यागमत्तस्याः समीपं त्वरितक्रमः॥२०॥
अपश्यच्च मनश्चौरीमंशुकच्छन्नविग्रहां । अनादरेण सत्तल्पे शक्रयष्टिमिव स्थितां ॥ २१ ॥
गृहाण तदिदं देवि क्ष्वेडमित्यवदच्च सः । प्रेष्यो दशरथश्चैतं देशं प्राप्याशृणोद्ध्वनिं ॥ २२ ॥
हा देवि किमिदं मुग्धे प्रारब्धमिति च ब्रुवन् । स निराकरोद्व्रजिष्यंतं तत्तल्पे चोपविष्टवान् २३
राजानमागतं ज्ञात्वा सहसा सत्रपोत्थिता । क्षितावुपविविक्षंती कांतेनांके निवेशिता ॥ २४ ॥

अवाचि च प्रिये कस्मात्कोपं प्राप्ता त्वमीदृशं । सर्वतो दयिते येन जीवितेप्यासि निस्पृहा ॥२५॥
सर्वतो मरणं दुःखमन्यस्माद्दुःखतः परं । प्रतिकारस्तु यद्यस्य तद्दुःखं वद कीदृशं ॥ २६ ॥
त्वं मे हृदयसर्वस्वं दयिते वद कारणं । क्षणेनापनयं यस्य करिष्यामि वरानने ॥ २७ ॥
श्रुतं वेत्सि जिनेंद्राणां सदसद्गतिकारणं । तथापि मतमीदृक्ते धिक्कोपं ध्वांतमुत्तमं ॥ २८ ॥
प्रसीद देवि कोद्यापि कोपस्यावसरस्तव । प्रसादध्वनिपर्यंतप्रकोपा हि महास्त्रियः ॥ २९ ॥
तयोक्तं नाथ कः कोपस्त्वयि मे दुःखमीदृशं । समुत्पन्नं न यद्याति शांतिं पंचयता विना ॥३०॥
देवि तत्कतरं दुःखमित्युक्तैवमभाषत । शांत्यंबुदानमन्यासां मम नेति कुतो वद ॥ ३१ ॥
दृष्टेन केन कार्येण हीनाहं विदिता त्वया । यद्वंचितपूर्वास्मि वंचिता पंडिताधुना ॥ ३२ ॥
यावदेवं वदत्येषा तावदायाति कंचुकी । देवि जैनांबु नाथेन तुभ्यं दत्तमिति ब्रुवन् ॥ ३३ ॥
अत्रांतरे प्रियाः प्राप्ता इतरास्तामिदं जगुः । अयि मुग्धे प्रसादस्य स्थाने प्राप्तासि किं रुषा ३४
यस्यास्माकं जुगुप्साभिर्दासीभिर्जलमाहृतं । वरिष्ठेन पवित्रेण तव कंचुकिनामुना ॥ ३५ ॥
ईदृशी नाम नाथस्य संप्रीतिर्भवतीं प्रति । यतोयं जनितो भेदः किमकांडे प्रकुप्यसि ॥ ३६ ॥
प्रसीद दयितस्यास्य लग्नस्यैव प्रयत्नतः । प्रणयादपराधेऽपि ननु तुष्यंति योषितः ॥ ३७ ॥

दयिते क्रियते यावत्कोपो दारुणमानसे। तावत्संसारसौख्यस्य विघ्नं जानीहि शोभने ॥ ३८ ॥
विपादयितुमस्माकमात्मानमुचितं ननु। किंत्वत्र जिनचंद्राणां वारिणां नः प्रयोजनं ॥ ३९ ॥
सपत्नीभिरपि प्रीतमिति सांत्वितया तया। चक्रे शांत्युदकं मूर्ध्नि रोमांचांचितगात्रया ॥ ४० ॥
ततः प्रकुपितोऽवोचद्राजा कंचुकिनं तकं। व्याक्षेपः क्व नु ते जातो वदापसद कंचुकिन्॥४१॥
ततो भयाद्विशेषेण कंपिताखिलविग्रहः। कंचुकी कथमप्यूचे क्षितिजानुशिरोंजलिः ॥ ४२ ॥
हृदयस्थापिता कृच्छ्रादानीता वक्त्रगोचरं। ओष्ठे प्रणिहिता वर्णा व्यलीयंतेस्य भूरिशः ॥४३॥
सखत्कारं मुहुःकुर्वन् स्फुरयन्नधरं मुहुः। हृदयं संस्पृशन् कृच्छ्रादुपनीतेन पाणिना ॥ ४४ ॥
पश्चान्मस्तकभागस्थश्चंद्रांशुसितमूर्द्धजः। मंदवाताहतश्वेतचामरोपमकूर्चकः ॥ ४५ ॥
मक्षिकाच्छदनच्छातत्वक्तिरोहितकैकसः। धवलिभ्रुवलिच्छन्नशोणप्रभनिरीक्षणः ॥ ४६ ॥
अभिलक्ष्य शिराजालसंवेष्टितचलत्तनुः। असंपूरितपुस्ताभः कृच्छ्राद्वासोऽपि धारयन् ॥ ४७ ॥
हिमाहत इवात्यर्थं कपोलौ कंपयन् श्लथौ। विवक्षया मुहुर्जिह्वां स्थानानि स्खलितां नयन्॥४८॥
अप्येकाक्षरनिष्पत्तिं मन्यमानो महोत्सवं। वर्णांतराभिसंधानाद्वर्णमन्यं समुच्चरन् ॥ ४९ ॥
संधानवर्जितान् वर्णान् परमश्रमकारिणः। कंटकानिव कृच्छ्रेण मुमोच परिजर्जरात् ॥ ५० ॥

जराधीनस्य मे नाथो किमागो भृत्यवत्सलः । संप्राप्तोऽसि यतः कोपं देव विज्ञानभूषण ॥५१॥
पुरा करिकराकारभुजं कर्कशमुन्नतं । पीनोत्तुगं महोरस्कमालानसदृशोरुकं ॥ ५२ ॥
आसीन् मम वपुः शैलराजकूटसमाकृति । कर्मणामिति चित्राणां कारणं परमोदयं ॥ ५३ ॥
अभूतां चूर्णने देव शक्तौ हस्तकपाटयोः । करौ पार्ष्णिप्रहारश्च पर्वतस्यापि भेदकः ॥ ५४ ॥
उच्चावच्चां क्षितिं वेगात्पुराहं परिलंघयन् । राजहंस इवावाप्यं नाथ स्थानमभीप्सितं ॥ ५५ ॥
आसीत् दृष्टेरवष्टंभस्तादृशो मम पार्थिव । आमन्येऽपि क्षितेरीशं यादृशेन तृणोपमं ॥ ५६ ॥
अंगनाजनदृष्टीनां मनसां च महास्थिरं । आलानमेतदासीन्मे शरीरं चारुविभ्रमं ॥ ५७ ॥
लालितं परमैर्भोगैः प्रसादेन पितुस्तव । विसंघटितमेतन्मे कुमित्रमिव सांप्रतं ॥ ५८ ॥
अधत्त यः पुरा शक्तिं रिपुदारणकारिणीं । करेण यष्टिमालंब्य तेन भ्राम्यामि सांप्रतं ॥ ५९ ॥
विक्रांतपुरुषाकृष्टशरासनसमं मम । पृष्टास्थि स्थितमाक्रांते मूर्ध्नि मृत्योरिवांघ्रिणा ॥ ६० ॥
दंतस्थानभवा वर्णाश्चिरं क्वापि गता मम । ऊष्मवर्णोष्मणा तापमशक्ता इव सेवितुं ॥ ६१ ॥
आलंब यदि नो यष्टिमेतां प्राणगरीयसीं । क्षितौ पतेत्ततः पक्वामिदं हतशरीरकं ॥ ६२ ॥
वलीनां वर्तते वृद्धिरुत्साहस्य परिक्षयः । राजन् श्वसिमि देहेन यदेतेन तदद्भुतं ॥ ६३ ॥

अद्य स्वीनममुं कायं जरया जर्जरीकृतं । नाथ धर्तुं न शक्नोमि बाह्ये वस्तुनि का कथा ॥ ६४ ॥
नितांतपटुताभांजि हृषीकाणि पुरा मम । संप्रत्युद्देशमात्रेण स्थितानि जडचेतसः ॥ ६५ ॥
पदमन्यत्र यच्छामि पतत्यन्यत्र दुर्घटं । श्याममेवाखिलं दृष्टया पश्यामि धरणीतलं ॥ ६६ ॥
गोत्रक्रमसमायातमिदं राजकुलं मम । यत शक्नोपि न त्यक्तुमपि प्राप्येदृशीं दशां ॥ ६७ ॥
पक्वं फलमिवैतन्मे शरीरं क्वापि वासरे । नेष्यत्याहारतां मृत्युर्मर्मरच्छदनोपमां ॥ ६८ ॥
न तथासन्नमृत्योर्मे स्वामिन् संजायते भयं । भवच्चरणसंसेवाविरहाद्भाविनो यथा ॥ ६९ ॥
व्याक्षेपो मे कुतः कश्चिद्दधतस्तनुमीदृशीं । भवदाज्ञा प्रतीक्ष्यैव यस्य जीवितकारणं ॥ ७० ॥
स त्वं नाथ जराधीनं मम ज्ञात्वा शरीरकं । कोपमर्हसि नो कर्तुं धीर धत्स्व प्रसन्नतां ॥ ७१ ॥
निशम्य तद्वचो राजा गंडं कुंडलमंडितं । वामे करतले न्यस्य चिंतामेवमुपागमत् ॥ ७२ ॥
जलबुद्बुदनिस्सारं कष्टमेतच्छरीरकं । संध्याप्रकाशसंकाशं यौवनं बहुविभ्रमं ॥ ७३ ॥
सौदामिनीत्वरस्यास्य कृते देहस्य मानवाः । आरंभते न किं कृत्यं नितांतं दुःखसाधनं ॥७४॥
अतिमत्तांगनापांगभंगतुल्याः प्रतारकाः । भोगिभोगसमाभोगास्तापोपचयकारिणः ॥ ७५ ॥
विषयेषु यदायत्तं दुष्प्रापेषु विनाशिषु । दुखमेताद्विमूढानां सुखत्वेनावभासते ॥ ७६ ॥

आपातरमणीयानि सुखानि विषयादयः । किंपाकफलतुल्यानि चित्रं प्रार्थयते जनः ॥ ७७ ॥
पुण्यवंतो महोत्साहाः प्रबोधं परमं गताः । विषवद्विषयान् दृष्ट्वा ये तपस्यंति सज्जनाः ॥ ७८ ॥
कदा नु विषयांस्त्यक्त्वा निर्गतः स्नेहचारकात् । आचरिष्यामि जैनेंद्रं तपो निर्वृतिकारणं॥७९॥
सुखेन पालिता क्षोणी भुक्ता भोगा यथोचिताः । विक्रांता जनिता पुत्रा किमद्यापि प्रतीक्ष्यसे॥
अन्वयव्रतमस्माकमिदं यत्सूनवे श्रियं । दत्वा संवेगिनो धीराः प्रविशंति तपोवनं ॥ ८१ ॥
चिंतयित्वाप्यसावेवं राजा कर्मानुभावतः । भोगेषु शिथिला शक्तिर्गृह एव रतिं ययौ ॥ ८२ ॥
यत्प्राप्तव्यं यदा येन यत्र यावद्यतोऽपि वा । तत्प्राप्यते तदा तेन तत्र तावत्ततो ध्रुवं ॥ ८३ ॥
कियत्यपि ततोऽतीते काले मगधसुंदरः । पर्यटन् विधिना क्षोणीसंघेन महतावृतः ॥ ८४ ॥
सर्वभूतहितो नाम सर्वभूतहितो मुनिः । नगरीं तां समायासीन्मनःपर्ययवेदकः ॥ ८५ ॥
सरस्याश्च तटे कालं श्रांतं संघमतिष्ठिपत् । पितेव पालयन् न्यस्तकायवाङ्मानसाक्रियः ॥ ८६ ॥
प्राग्भावेषु स्थिताः केचिद्गुहास्वन्ये तपस्विनः । केचिद्विविक्तगेहेषु केचिज्जैनेंद्रवेश्मसु ॥ ८७ ॥
नगानां कोटरेष्वन्ये यथाशक्तिसमुद्यताः । तपांसि चक्रुराचार्यादधिगम्यानुमोदनां ॥ ८८ ॥
आचार्यस्तु विविक्तैषी पुर्या उत्तरपश्चिमां । तपः समुचितं क्षेत्रं विशालमतिसुंदरं ॥ ८९ ॥

उद्यानं स महावृक्षं सयूथ इव वारणः । प्रविवेशात्मदशमो महेंद्रोदयकीर्तनं ॥ ९० ॥
तस्मिन् शिलातले रम्ये विपुले निर्मले समे । पशूनामंगनानां च पंडुकानां च दुर्गमे ॥ ९१ ॥
द्वेषिलोकविमुक्तेऽसौ सूक्ष्मप्राणिविवार्जिते । दूरावष्टंभशाखस्य स्थितो नागतरोरधः ॥ ९२ ॥
मार्तंडमंडलच्छायो गंभीरः प्रियदर्शनः । वर्षाः क्षपयितुं तस्थौ कर्माणि च महामनाः ॥ ९३ ॥
संप्राप्तश्च महाकालः प्रवासिजनभैरवः । प्रस्फुरद्विद्युदुर्गोष्टक्रूरधाराधरध्वनिः ॥ ९४ ॥
तर्जयन्निव लोकस्य कृततापं दिवाकरं । भयात्पलायितं क्वापि स्थूलधारांधकारतः ॥ ९५ ॥
जातमुर्वीतलं सम्यक् कंचुकेन कृतावृतिः । वर्द्धते सुमहानद्यो वीचिपातितरोधसः ॥ ९६ ॥
जायते प्राप्तकंपानां चित्तोद्भ्रांतिः प्रवासिनां । असिधाराव्रतं जैनो जनो सक्तं निषेवते ॥ ९७ ॥
भूरिशोवग्रहांश्चक्रुर्मुनयः क्षितिगोचराः । स्वयानलब्धयश्चैते पांतु त्वा मगधाधिप ॥ ९८ ॥
अथ भेरीनिनादेन शंखनिस्वनशोभिना । दोषांते कोशलानाथो विबुद्धो भास्करो यथा ॥९९॥
ताम्रचूडाः खरं रेणुर्दंपतीनां वियोजकाः । सारसाश्चक्रवाकाश्च सरसीषु नदीषु च ॥ १०० ॥
भेरीपणववीणाद्यैर्गीतैश्च सुमनोहरैः । व्यावृतश्चैत्यगेहेषु जायते विपुलो जनः ॥ १०१ ॥
विघूर्णमाननयनः सकलारुणलोचनः । विमुंचते जनो निद्रां प्रियामिव ह्रियान्वितः ॥ १०२ ॥

प्रदीपाः पांडुरा जाता शशांकश्च गतप्रभः । विकासं यांति पद्मानि कुमुदानि निमीलनं ॥१०३॥
ध्वस्ता ग्रहादयः सर्वे दिवाकरमरीचिभिः । जिनप्रवचनज्ञस्य वचनैर्वादिनो यथा ॥ १०४ ॥
एवं प्रभातसमये संपन्नेत्यंतनिर्मले । कृत्वा प्रत्यंगकर्माणि नमस्कृत्वार्चितं जिनं ॥ १०५ ॥
आरुह्य वासितां भद्रां कुथापटविराजितां । शतैरवनिनाथानां सेव्यमानोऽमरत्विषां ॥ १०६ ॥
देशे देशे नमस्कुर्वन् मुनींश्चैत्यालयांस्तथा । महेंद्रोदयमुर्वीशो ययौ छत्रोपशोभितः ॥ १०७ ॥
विष्टपानंदजननीविभूतीस्तस्य भूभृतः । राजन् संवत्सरेणापि शक्या कथयितुं न सा ॥१०८॥
मुनिरायातमात्रः सन् गुणरत्नपयोनिधिः । श्रोत्रयोर्गोचरं तस्य संप्राप्तस्तत्र मंडले ॥ १०९ ॥
करेणोरवतीर्यासौ राजामितपरिच्छदः । महाप्रमोदसंपूर्णो विवेशोद्यानमेदिनीं ॥ ११० ॥
विन्यस्य भक्तिसंपन्नः पादयोः कुसुमांजलिं । सर्वभूतहिताचार्यं शिरसा स नमस्करोत् ॥१११॥
ततः सिद्धांवसंवद्धामश्रृणोद्गुरुतः कथां । अनुयोगान्यतीतानां भाविनां च महात्मनां ॥ ११२ ॥
लोकं द्रव्यानुभावांश्च युगानि च यथाविधि । स्थितिं कुलकराणां च वंशांश्च बहुधागतान् ११३
पदार्थान् सर्वजीवादीन् पुराणानि च सादरं । श्रुत्वा प्रणम्य संघेशं नगरं पार्थिवोऽविशत् ११४
दत्वा स्थानं क्षणमवनिभृन्मंत्रिणां स क्षितीशां । कृत्वा जैनीं गुणगणकथां विस्मयं चातिपूर्णः ॥

अंतर्गेहं प्रविशति तदा मज्जनादि क्रियाश्च । प्रीतश्चक्रे विपुलविभवः स प्रजापत्यभिख्यः ११५
संपूर्णानां परममहसा चंद्रकांताननानां । चक्षुश्चेतोहरणनिपुणैर्विभ्रमैर्मंडितानां ॥
श्रीतुल्यानां परमविनयं बिभ्रतीनां प्रियाणां । पद्मालीनां रविरिव रतिं तत्र कुर्वन् स तस्थौ ११६

इत्यार्षे रविषेणाचार्यप्रोक्ते पद्म-चरिते दशरथवैराग्यसर्वभूतहितागमाभिधानं नाम एकोनत्रिंशत्तमं पर्व।

---

# अथ त्रिंशत्तमं पर्व ।

ततः कालो गतः क्वापि घनौघडमरो नृपः। प्रोद्यद्युपुष्करं धौतमंडलाग्रसमप्रभं ॥ १ ॥
पद्मोत्पलादिजलजपुष्पमुन्मादकृद्बभौ । साधूनां हृदयं यद्वद्बभूव विमलं जलं ॥ २ ॥
शरत्कालः परिप्राप्तः प्रकटं कुमुदैर्हसन् । नष्टमिंद्रधनुर्जाता धरणी पंकवर्जिता ॥ ३ ॥
विद्युत्संभावनायोग्यास्तूलराशिसमत्विषः । क्षणमात्रमदृश्यंत घनलेश्या क्वचित्क्वचित् ॥ ४ ॥
संध्यालोकललामोष्ठी ज्योत्स्नातिविमलांबरा । निशानववधूर्भाति चंद्रचूडामणिस्तदा ॥ ५ ॥
चक्रवाककृतच्छाया मत्तसारसनादिताः । वाप्यः पद्मवनभ्राम्यद्राजहंसैर्विराजिरे ॥ ६ ॥

भामंडलकुमारस्य सीतां चिंतयतस्तु तत् । क्रतुनाचिंतमप्येवं जातमग्निसमं जगत् ॥ ७ ॥
अरत्याकर्षितांगोसौ परित्यज्यान्यदा त्रपां । पितुः पुरः परं मित्रं वसंतध्वजमब्रवीत् ॥ ८ ॥
दीर्घसूत्रो भवानेवं परकार्येषु शीतलः । गणरात्रमिदं दुःखं तस्यां मे गतवेगतः ॥ ९ ॥
उद्वेगविपुलावर्ते प्रत्याशाजलधौ मम । निसर्गतः सखे कस्माद्दीयते नावलंबनं ॥ १० ॥
इत्यार्तध्यानयुक्तस्य निषम्य गादितं बुधाः । सर्वे गतप्रभाभूता विषादं परमं ययुः ॥ ११ ॥
तान् वीक्ष्य शोकसंतप्तान्वारणानिव शुष्यतः । आवर्जितशिरोव्रीडां क्षणं भामंडलोऽगमत् ॥१२॥
वृहत्केतुस्ततोऽवोचत्किमद्याप्युपगुह्यते । निवेद्यतां कुमारस्य निराशो येन जायते ॥ १३ ॥
ततस्ते कथयांचक्रुस्तस्मै सर्वं यथाविधि । चंडयानं पुरस्कृत्य कथमप्युज्झिताक्षराः ॥ १४ ॥
जनको बालकन्यायादिहैवास्माभिराहृतः । याचितश्चातियत्नेन पद्मस्योचे प्रकल्पितां ॥ १५ ॥
उक्तप्रत्युक्तमालाभिरस्माभिस्तेन निर्जितैः । धनूरत्नावधिश्चक्रे कृतसन्मंत्रणैः किल ॥ १६ ॥
धनूरत्नलता तस्य रामस्याक्लिष्टकर्मणः । शार्दूलस्य क्षुधार्तस्य मांसपेशी यथार्पिता ॥ १७ ॥
कन्या स्वयंवरा साध्वी कथाहृदयहारिणी । नवयौवनलावण्यपरिपूरितविग्रहा ॥ १८ ॥
अबालेंदुमुखी बाला मदनेन समर्पिता । वैदेही रामदेवस्य श्रीसमा वनिताभवत् ॥ १९ ॥

न चापे सांप्रतं जाते गदासीरादिसंयुते । अमराधिष्ठिते नापि कन्या त्रैलोक्यसुंदरी ॥ २० ॥
अपि द्रष्टुं न ये शक्ये सुपर्णोरगदानवैः । रामलक्ष्मणवीराभ्यामाकृष्टे ते शरासने ॥ २१ ॥
प्रसह्य साधुना हर्तुमशक्या त्रिदशैरपि । किमुतात्यंतमस्माभिर्निस्सारैर्धनुषी विना ॥ २२ ॥
पूर्वमेव हृता कस्मान्नेति चेन्मन्यते शिशो । यज्जामाता दशास्यस्य जनकस्य सुहृन्मधुः ॥२३॥
अवगम्य कुमारैवं विनीतः स्वस्थतां भज । शक्नोति न सुरेंद्रोऽपि विधातुं विधिमन्यथा ॥ २४ ॥
ततः स्वयंवरोदंतं श्रुत्वा भामंडलो ह्रिया । विषादेन च संपूर्णः कृच्छ्रं चिंतांतरं गतः ॥ २५ ॥
निरर्थकमिदं जन्म विद्याधरतया समं । यतः प्राकृतवत्कश्चिन्न संप्राप्तोऽस्मि तां प्रियां ॥ २६ ॥
ईर्ष्याक्रोधपरीतश्च सभामाह हसन्नसौ । वाचः खेचरताभीतिं भजतां भूमिगोचरात् ॥ २७ ॥
आनयाम्येष सत्कन्यां स्वयं निर्जित्य भूचरान् । न्यासापहारिणां कुर्वे पक्षाणां च विनिग्रहं २८
इत्युक्त्वासौ सुसन्नह्य विमानी वियदुद्गतः । पुरकाननसंपूर्णं पृथिवीतलमैक्षत ॥ २९ ॥
ततो दृष्टिर्गता तस्य विदग्धविषये क्रमात् । महीध्रसंकटे रम्ये नगरे चात्मसेविते ॥ ३० ॥
दृष्टं मया कदाप्येतदिति चिंतामुपागतः । जातिस्मरत्वमासाद्य समवाप्य स मूर्छनं ॥ ३१ ॥
पितुरंते ततो नीतः सचिवैराकुलात्मकैः । चंदनद्रवसिक्तांगः प्रमदाभिः प्रबोधितः ॥ ३२ ॥

अन्योन्यं दत्तनेत्रं च हसित्वा ताभिरौच्यत । कुमार युक्तमेतत्ते कातरत्वमनुत्तमं ॥ ३३ ॥
अदृष्ट्वावनिचर्यार्थं निश्शेषरहितं नयः । गुरूणामग्रतो मोहं यत्प्राप्तोऽसि विचक्षणः ॥ ३४ ॥
भज खेचरनाथानां कन्या देव्यधिकप्रभाः । जनजल्पनकं व्यर्थं वृत्तं सुंदर माकृथाः ॥ ३५ ॥
ततोसावब्रीदेवं व्रीडाशोकनताननः । धिग्मया घनमोहेन विरुद्धं चिंतितं महत् ॥ ३६ ॥
नीचानामपि नात्यंतमीदृशं कर्म युज्यते । अहो कर्मभिरत्यर्थमशुभैरभिचेष्टितः ॥ ३७ ॥
एकस्मिन्नुषितः कुक्षौ क्वापि सार्धमहं तया । दुष्कर्मविगमाज्ज्ञाता कथंचित्साधुना मया ॥३८॥
ततस्तं शोकभारेण पीडितं चंद्रविक्रमः । अंकमारोप्य चुंबित्वा पप्रच्छ पुरुविस्मयः ॥ ३९ ॥
वद पुत्रक किंत्वेत्वदीदृशं भाषितं त्वया । सोवोचत्तात वक्तव्यं चरितं श्रृणु मामकं ॥ ४० ॥
पूर्वजन्मनि वास्येऽस्मिन् विदग्धनगरे नृपः । अभूवं परराष्ट्राणां ध्वंसको मंडितध्वनिः ॥ ४१ ॥
सर्वस्यामवनौ ख्यातः सततं विग्रहप्रियः । पालको निजलोकस्य महाविभवसंयुतः ॥ ४२ ॥
हृता तत्र मया जाया विप्रस्याशुभकर्मणा । मायया‍ऽपाकृतश्चासौ गतः क्वाप्यतिदुःखितः ॥४३॥
ततोनरण्यसेनान्या गमितस्तुषशेषतां । पर्यटन् धरणीं क्वापि प्राप्तोऽस्मि मुनिसंश्रयं ॥ ४४ ॥
तत्र त्रिलोकपूज्यानां सर्वज्ञानां महात्मनां । मतं भगवतां प्राप्तमर्हतां पावनं मया ॥ ४५ ॥

तत्र बांधवभूतस्य गुरोः शासनतो मया । अनामिषं व्रतं शुद्धं गृहीतं क्षुद्रशक्तिना ॥ ४६ ॥
शासनस्य जिनेंद्राणामहो माहात्म्यमुत्तमं । तथापि यन्महापापो नावतीर्णोऽस्मि दुर्गतिं ॥४७॥
अनन्यशरणत्वेन व्रतेन नियमेन च । स ममान्येन जीवेन विदेहाकुक्षिमागमत् ॥ ४८ ॥
सुखेन च प्रसूता सा कन्यया सहितं तु कं । केनाप्यपहृतश्चायं गृध्रेण पिशितं यथा ॥ ४९ ॥
नक्षत्रगोचरातीतं तेन नीतोऽस्मि पुष्करं । असौ नूनं स यस्यासौ हृता जाया मया पुरा ॥५०॥
मारयामीति तेनोक्त्वा भूयः कृत्वानुकंपनं । शनैरस्मि विमुक्तः खात् कुंडलाभ्यामलंकृतं ॥५१॥
पतद्वीक्ष्य तदा रात्रावुद्याने परमे त्वया । गृहीत्वा तात दत्तोस्मि जायायै करुणावता ॥ ५२ ॥
सोहं भवत्प्रसादेन तदंके वृद्धिमागतः । परं विद्याधरत्वं च कृतदुर्लडितक्रियः ॥ ५३ ॥
इत्युक्त्वा विररामासौ विस्मयं च जनो गतः । हाकारबहुलं शब्दं कुर्वन् कंपितमस्तकः ॥५४॥
इमं चंद्रगतिः श्रुत्वा वृत्तांतमतिचित्रितं । लोकधर्मतरुं वध्यं विदित्वा भवबंधनं ॥ ५५ ॥
भूतमात्रमतिं त्यक्त्वा सुनिश्चित्यात्मकर्मणां । परं प्रबोधमायातः संवेगं च सुदुर्लभं ॥ ५६ ॥
आत्मीयं राज्यमाधाय तत्र पुत्रे यथाविधि । सर्वभूतहितस्यागात्पादमूलं त्वरान्वितः ॥ ५७ ॥
भगवान् स हि सर्वत्र विष्टपे प्रथितात्मकः । गुणरश्मिसमूहेन भव्यानंदविधायिना ॥ ५८ ॥

महेंद्रोदययातं तमभ्यर्च्य प्रणिपत्य च । स्तुत्वा च भावतोवादीदेवं मूर्धाहितांजलिः ॥ ५९ ॥
भगवंस्त्वत्प्रसादेन संप्राप्य जिनदीक्षणं । तपोविधातुमिच्छामि निर्विण्णो गृहवासतः ॥ ६० ॥
एवमस्त्विति तेनोक्तेनारंभे स समाहिताः । भामंडलः परं चक्रे महिमानं च भावतः ॥ ६१ ॥
कलं प्रवरनारीभिर्गीतं वंशस्वसानुगं । जगर्ज तूर्यसंघाताः करतालसमन्विताः ॥ ६२ ॥
श्रीमान् जनकराजस्य तनयो जयतीति च । इत्युच्चैर्वंदिनां नादः संजज्ञे प्रतिनादवान्॥६३॥
तेनोद्यानसमुत्थेन नादेन श्रोत्रहारिणा । नक्तं कृतो विनीतायां कृतनिद्रोऽखिलोजनः ॥ ६४ ॥
ऋषिसंबंधमुद्धानं श्रुत्वा जैनाः प्रमोदिनः । जाता जाना विपन्नाश्च मिथ्यादर्शनपूरिताः ॥६५॥
रोमांचार्चितसर्वांगा विस्फुरद्वामलोचना । सीता सिक्तामृतेनैव बुबुधे ध्वनिनामुना ॥ ६६ ॥
अचिंतयच्च कोन्वेष जनको यस्य नंदनः । जयतीति मुहुर्नादः श्रूयतेत्यंतमुन्नतः ॥ ६७ ॥
कनकस्याग्रजो राजा ममापि जनकः पिता । जातमात्रश्च मे भ्राता हृतो यः किंत्वसौ भवेत्६८
ध्यात्वेति सोदरस्नेहसंप्लावितमानसा । मुक्तकंठं रुरोदासौ परिदेवनकारिणी ॥ ६९ ॥
ततो रामोभिरामांगः प्रोवाच मधुराक्षरं । कस्माद्रोदिषि वैदेहि भ्रातृशोकेन कर्षिता ॥ ७० ॥
भवत्या यद्यसौ भ्राता स्वो ज्ञातास्मो न संशयः । अथवान्यः क्वचित्कोऽपि पंडिते शोचितेन किं॥

कारणं यदतिक्रांतं मृतमिष्टं च बांधवं । हृतं विनिर्गतं नष्टं न शोचंति विचक्षणाः ॥ ७२ ॥
कातरस्य विषादोऽस्ति दयिते प्राकृतस्य च । न कदाचिद्विषादोऽस्ति विक्रांतस्य बुधस्य च ७३
एवं तयोः समालापं दंपत्त्योः कुर्वतोः क्षपा । कृपयैव गता शीघ्रं जातमंगलनिस्वना ॥ ७४ ॥
ततो दशरथः कृत्वा प्रत्यंगवस्तु सादरः । नगरीतो विनिष्क्रांतः ससुतः सांगनाजनः ॥ ७५ ॥
इतश्चेतश्च विस्तीर्णां पश्यन् खेचरवाहिनीं । ययौ स विस्मयापन्नः सामंतशतपूरितः ॥ ७६ ॥
ईक्षांचक्रे च देवेंद्रपुरतुल्यं विनिर्मितं । क्षणाद्विद्याधरैः स्थानं तुंगप्राकारगोपुरं ॥ ७७ ॥
पताकातोरणैश्चित्रं रत्नैश्च कृतमंडनं । प्रविवेश तदुद्यानं साधुलोकसमाकुलं ॥ ७८ ॥
नत्वा स्तुत्वा च तत्रासौ गुरुं गुणगुरुं नृपः । ददर्शोदयने भानोश्चंद्रयानस्य दीक्षणं ॥ ७९ ॥
नभश्चरैः समं पूजां कृत्वा सुमहतीं गुरोः । एकपार्श्वे निविष्टोसौ सर्वबांधवसंगतः ॥ ८० ॥
श्रीप्रभामंडलोप्येकं पार्श्वमाश्रित्य खेचरैः । समस्तैः सहितस्तस्थौ किंचिच्छोकमिवोद्वहन् ८१
खेचरा भूचराश्चैते मुनयश्चांतिकं स्थिता । शुश्रुवुर्गुरुतो धर्ममनगारं तथेतरं ॥ ८२ ॥
चरितं निरगाराणां शूराणां शांतमीहितं । शिवं सुदुर्लभं सिद्धं सारं क्षुद्रभयावहं ॥ ८३ ॥
भव्यजीवा यमासाद्य लभंते संशयोज्झितं । सम्यग्दर्शनसंपन्ना गीर्वाणेंद्रसुखं महत् ॥ ८४ ॥

केचित्केवलमासाद्य लोकालोकप्रकाशनं । लोकप्राग्भारमारुह्य भजंते नैर्वृतं सुखं ॥ ८५ ॥
तिर्यग्नरकदुःखाग्निज्वालाभिः परिपूरितः । संसारो मुच्यते येन तं पंथानं महोत्तमं ॥ ८६ ॥
सर्वप्राणिहितोवोचन्मंद्रगार्जितनिस्वनः । प्रह्लादं सर्वचित्तानां जनयन्विदिताखिलः ॥ ८७ ॥
संदेहतापरिच्छेदि तद्वचोंबु मुनींद्रजं । कर्णांजलिपुटैः पीतं प्राणिभिः प्रीतमानसैः ॥ ८८ ॥
ततो दशरथोऽपृच्छत्संजाते वचनांतरे । चंद्रकीर्तेः खगेंद्रस्य वैराग्यं नाथ किं कृतं ॥ ८९ ॥
सीता तत्र विशुद्धाक्षी ज्ञातुमिच्छुः सहोदरं । शुश्रूषया मनश्चक्रे विनीतात्यंतानिश्चलं ॥ ९० ॥
शुद्धात्मा भगवानूचे शृणु राजन् विचित्रतां । जीवानां निर्मितामेकां कर्मभिः स्वयमर्जितैः॥९१॥
संसारे सुचिरं भ्रांत्वा जीवोयमतिदुःखितः । कर्मानिलेरितः प्राप्तश्चंद्रेण द्युतिमंडलः ॥ ९२ ॥
अर्पितः पुष्पवत्यै च स्त्रीचिंताकुलतारकः । स्वसारं च समालोक्य गाढाकल्पकमागतः ॥ ९३ ॥
जनकः कृत्रिमाश्वेन हृतश्चापस्वयंवरा । जाता विदेहजा चिंतां परां भामंडलोऽगमत् ॥ ९४ ॥
अस्मरच्च भवं पूर्वं मूर्छितः पुनरश्वसीत् । पृष्टश्चंद्रेण चावोचादिति पूर्वभवाक्रियां ॥ ९५ ॥
भरतस्थे विदग्धाख्ये पुरं कुंडलमंडितः । अधार्मिकोऽहरत्कांतां पिंगलस्य मनःप्रियां ॥ ९६ ॥
बालेंदुहृतसर्वस्वो विषयात्स निराकृतः । श्रमणाश्रममासाद्य प्राप व्रतमनाभिषं ॥ ९७ ॥

धर्म्यध्यानगतः कृत्वा कालं कलुषवर्जितः । जनकस्य विदेहायाः स सहायस्तनुश्रितः ॥ ९८ ॥
अरण्यार्तिंपगलः प्राप्तो दृष्ट्वा शून्यकुटीरकं । कोटरानलजीर्णांगदाहदुःखं समाप्तवान् ॥ ९९ ॥
यदर्थं दुःखितो प्राक्षीन्नेत्रांबुकृतदुर्दिनः । दृष्टा स्यात्पुंडरीकाक्षी रामेत्युन्मत्तविभ्रमः ॥ १०० ॥
हा कांत इति कूटांश्च विलापमकरोदिति । प्रभावती सवित्रीं तां तातं चक्रध्वजं च तं ॥१०१॥
विभूतिमातितुंगांश्च बाधवांश्च सुमानसान् । परित्यज्य मयि प्रीत्या विदेशमपि संगता ॥१०२॥
रूक्षाहारकुवस्त्रत्वं मदर्थं सेवितं त्वया । मामुत्सृज्य क्व यातासि सर्वावयसुंदरि ॥ १०३ ॥
खिन्नोऽसौ धरणीं दुःखं भ्रांत्वा स गिरिकाननान् । वियोगवह्निना दग्धः सोत्कंठस्तपसि स्थितः॥
ततो देवत्वमासाद्य चिंतामेवमुपागमत् । तिर्यग्योनिं किमेता सा कांता सम्यक्त्ववर्जिता ॥१०५॥
स्वभावार्जवसंपन्ना भूयो वा मानुषी भवेत् । जीवितांते जिनं स्मृत्वा किं वा देवत्वमागता ॥
इति ध्यायन् विनिश्चित्य श्रब्धदृष्टिप्रकोपवान् । क्वासौ शत्रुर्दुरात्मेति ज्ञात्वा कुक्षिसमाश्रितं ॥
प्रसूतमेककं कृत्वा शांतः कर्मानियोगतः । बालं मुमोच जीवेति वदन् विद्यालघूकृतं ॥ १०८ ॥
ज्योत्स्नाकृताट्टहासायां रात्रौ प्राप्तः पतंस्त्वया । तदा स्मरसि किं नेदं पुष्पवत्यै समर्पितः १०९
प्राप्तो भवत्प्रसादेन विद्याधराविधिर्मया । नूनं माता विदेहा मे सा च सीता सहोदरी ॥ ११० ॥

इत्युक्ते विस्मयं प्राप्ता सर्वा वैद्याधरी सभा । चंद्रायणश्च संविग्नो न्यस्य भामंडले श्रियं ॥१११॥
माता पिता च ते वत्स दुःखं शोकेन तिष्ठति । तयोर्नेत्रोत्सवं यच्छेत्येवमुक्त्वा समागतः ॥११२॥
जातस्य नियतो मृत्युस्ततो गर्भास्थितिः पुनः । इति भीतो भवादेष चंद्रः प्राव्रज्यमाप्तवान् ११३
अत्रांतरे विदेहाजः संशयं परिपृच्छति । स्नेहश्चंद्रायणादीनां मयि कस्मात्परः प्रभो ॥ ११४ ॥
ततः सर्वहितोऽवोचन्निबोध द्युतिमंडलः । यथा पिता च माता च तव पूर्वभवे स्थितौ ॥११५॥
दारुग्रामे तु विप्रोभूद्विमुचिस्तस्य भामिनी । अनुकोशातिभूतिश्च तनयः सारिसा स्नुषा ॥११६॥
ऊर्या मात्रा सहप्राप्तः कयानाख्योऽन्यदा द्विजः । अहरत्सरसां सारं धनमंतर्गतं च यत् ११७
अतिभूतिश्च तद्धेतोः शोकी बभ्राम मेदिनीं । ततो निष्पुरुषे गेहे शेषं स्वमपि लुंठितं ॥११८॥
विमुचिर्दक्षिणाकांक्षी देशांतरगतः पुरा । श्रुत्वा कुलकुटं भग्नं निवृत्तस्त्वरयान्वितः ॥ ११९ ॥
तीर्णवस्त्रावशेषांगामनुकोषां सुविह्वलां । सांत्वयित्वा तया सार्धमुर्या चान्वेष्टुमुद्यतः ॥ १२० ॥
प्रजाभिः पृथिवीपृष्टे कथ्यमानं समंततः । अवधिज्ञानकरणैर्जगद्येनावभासितं ॥ १२१ ॥
तमाचार्यं परिप्राप्तः पुरे सर्वारिनामनि । प्रष्टुं किल महाशोको नष्टचित्तस्तुषात्मजः ॥ १२२ ॥
दृष्ट्वा गणेश्वरीमृद्धिं श्रुत्वा च विविधां स्थितिं । तीव्रं संवेगमासाद्य विमुचिर्मुनितां गतः १२३

पार्श्वे कमलकांताया आर्याया सुसमाहिता । सममूर्यानुकोशापि प्रव्रज्य तपसि स्थिता ॥१२४॥
त्रयोऽपि ते शुभध्यानाः कृत्वाकालमलोलुपाः । लौकांतिकं गता लोकं नित्यलोकमनाकुलं ॥
अतिभूतिप्रभृतयो हिंसावादस्य शंसकाः । द्वेषकाः संयतानां च कुध्याना दुर्गतिं गता ॥१२६॥
मृगीत्वं सरसा प्राप्ता वलाहकनगोरसि । व्याघ्रभीता च्युता यूथान्मृता दावानलाहता ॥१२७॥
जाता मनस्विनीदेव्याः सुता चित्तोत्सवाह्वया । दुःखदानप्रवीणस्य प्रशमात्पापकर्मणः ॥१२८॥
कयानः क्रमशो भूत्वा पारसीकः क्रमेलकः । मृत्वा पिंगलनामाभूद्धूमकेशस्य नंदनः ॥ १२९ ॥
हंसस्ताराक्षसरसि सोतिभूतिः क्रमादभूत् । श्येनैर्विलुप्तसर्वांगश्चैत्यस्य पतितोऽतके ॥ १३० ॥
अध्याप्यमानं गुरुणा यशोमित्रं पुनः पुनः । अश्रौषीदर्हतां स्तोत्रं मुक्तवानथ जीवितं ॥१३१॥
दशवर्षसहस्रायुः किंनरोभून्नगोत्तरे । विदग्धनगरे च्युत्वा जातः कुंडलमंडितः ॥ १३२ ॥
अहरतिंपगलः कन्यां तथा कुंडलमंडितः । यदत्रायं पुरावृत्तः संबंधः परिकीर्तितः ॥ १३३ ॥
योसौ विमुंचिरित्यासीत्सोयं चंद्रगतिर्नृपः । अनुकोशा तु जायास्य जाता पुष्पवती पुनः १३४
कयानोयं सुरो हर्ता सरसा हृदयोत्सवा । ऊरी जाता विदेहा तु सोतिभूतः प्रभाह्वयः ॥१३५॥
ततो दशरथः श्रुत्वा तं वृत्तांतमशेषतः । भामंडलं समाश्लिष्य वाष्पपूर्णनिरीक्षणः ॥ १३६ ॥

अद्भुतैर्जिनमूर्धानो जातरोमोद्गमा भृशं । आनंदवाष्पलोलाक्षा सभायामभवञ्जनाः ॥ १३७ ॥
उद्गीर्णमाननेनेव प्रीत्या तं वीक्ष्य सोदरं । मृगीव रुदती स्नेहाद्धावोद्धृतबाहुका: ॥ १३८ ॥
हा भ्रातः प्रथमं दृष्टो मयाद्यासीतिशब्दिनी । तमाश्लिष्य चिरं सीता रुदित्वा धृतिमागता ॥
संभाषितः स रामेण संभ्रमालिंगितश्चिरं । लक्ष्मणेन तथान्येन बंधुलोकेन सादरं ॥ १४० ॥
नमस्कृत्य मुनिं श्रेष्ठं ततः खेचरभूचराः । उद्यानात्प्रमदापूर्णा निरीयुः सुविराजिताः ॥ १४१ ॥
भामंडलेन संमंत्र्य द्रुतं दशरथो ददौ । लेखं जनकराजस्य नीतं गगनयायिना ॥ १४२ ॥
प्रेषितं भानुमार्गेण तस्य हंसधृतं वरं । यानं विद्याधरैर्वीरैर्भूरिभिः परिवारितं ॥ १४३ ॥
प्रभामंडलमादाय ततो भूत्यातिकांतया । तुष्टो दशरथोऽयोध्यां सुत्रामसदृशोऽविशत् ॥ १४४ ॥
अक्षीणसर्वकोशोसावुपचारं परं नृपः । प्रीतो भामंडले चक्रे सर्वलोकसमन्वितः ॥ १४५ ॥
रम्ये सुविपुले तुंगे वाप्युद्यानविभूषिते । गृहे दशरथोद्दिष्टे तस्थौ भामंडलः सुखं ॥ १४६ ॥
दारिद्र्यान्मोचितो लोकः परमोत्सवजन्मना । दानेन वांछिताधिक्यं प्राप्तेन धरणीतले ॥१४७॥
गत्वा पवनवेगेन जनको लेखहारिणा । सहसा वर्द्धितो दिष्ट्या पुत्रागमनजन्मना ॥ १४८ ॥
प्रवाच्य चार्पितं लेखं सुहृदः प्रत्ययः परं । प्रमोदं जनकः प्राप रोमांचार्चितविग्रहः ॥ १४९ ॥

भद्र किं किमयं स्वप्नः स्याज्जाग्रत्प्रत्ययोथवा । एहि ढौकस्व ढौकस्व तावन्वाद्य परिष्वजे १५०
इत्युक्त्वानंदवाष्पेण तरत्तारकलोचनः । साक्षात्पुत्रमिव प्राप्तं लेखहारं स सष्वजे ॥ १५१ ॥
नग्नतापरिहारेण देहस्थं वस्त्रभूषणं । ससंभ्रमं ददौ तस्मै मुदा वृत्तामिवाचरन् ॥ १५२ ॥
समेति बंधुलोकोस्य यावद्विद्याभिवर्द्धकः । तावत्तद्यानमायातं छादयद्गगनं रुचा ॥ १५३ ॥
अपृच्छत्तस्य वृत्तांतमतृप्तश्च पुनः पुनः । उक्तं विद्याधरैस्तस्य यथावदतिविस्तरं ॥ १५४ ॥
ततो यानं समारुह्य समस्तैर्बंधुभिः समं । निमेषेण परिप्राप्तो विनीतां तूर्यनादितां ॥ १५५ ॥
अवतीर्यांवरादाशु पुत्रमालिंग्य निर्भरं । सुखमीलितनेत्रोसौ क्षणं मूर्छामुपागतः ॥ १५६ ॥
प्रबुध्य च विशालेन चक्षुषा वाष्पवारिणा । आचेचनकमौक्षिष्ट तनयं पाणिना स्पृशन् ॥१५७॥
माता तं मूर्छिता दृष्ट्वा परिष्वज्य प्रबोधिनी । आचक्रंद सुकारुण्यं तिरश्चामपि कुर्वती ॥१५८॥
परिदेवनमेवं च चक्रे पुत्रक हा कथं । हतोऽसि जातमात्रस्त्वं केनाप्युत्तमवैरिणा ॥ १५९ ॥
त्वदीक्षाचिंतया देहो दग्धोऽयं वह्नितुल्यया । भवद्दर्शनतो येन चिरान्निर्वापितोऽद्य मे ॥ १६० ॥
धन्या पुष्पवती सुस्त्री यया तेंऽगानि शैशवे । क्रीडया धूसराण्यंके निहितानि सुचुंबितं ॥१६१॥
चंदनेन विलिप्तस्य कुंकुमस्थासकांचितं । दधतः शैशवं दृष्टं कौमारं ते तया वपुः ॥ १६२ ॥

नेत्राभ्यामस्त्रमुत्सृज्य स्तनाभ्यां च पयश्चिरं । सुपुत्रसंगमानंदं विदेहा परमं गता ॥ १६३ ॥
अर्हच्छासनदेवीव जृंभैशावतनामनि । सा तत्र लोचने कृत्वा तस्थौ मग्ना सुखांबुधौ ॥१६४॥
मासमात्रमुषित्वातो बंधुसंगममोदिना । पद्मो भामंडलेनोचे विनयं बिभ्रतं परं ॥ १६५ ॥
वैदेह्याः शरणं देव त्वमेवोत्तमबांधवः । छंदेऽस्या वर्ततां येन नो यात्युद्वेगमेषका ॥ १६६ ॥
स्वसारं च समालिंग्य स्नेहार्दनां सुवेष्टितं । उपादिवादसौ भूयो भूयः प्रवरमानसः ॥ १६७ ॥
मातालिंग्यागदत्सीतां सुते श्वसुरयोः प्रिये । परिवर्गे च तत्कुर्याः श्लाघ्यतां येन गच्छसि १६८
सर्वानामंत्र्य विन्यस्य कनके मिथिलेशितां । गृहीत्वा पितरौ यातः स्थानं भामंडलो निजं १६९

वीक्ष्यस्व माहात्म्यमिदं कृतस्य । धर्मस्य पूर्वं मगधाधिराज ॥
विद्याधरेंद्रो यदवापि बंधुः । सीता च पत्नी गुणरूपपूर्णा ॥ १७० ॥
अधिष्ठिते देवगणैश्च चापे । सकंकटे सीरगदादियुक्ते ॥
लब्धे सुरैरप्यतिदुर्लभे ये । पद्मेन लक्ष्मीनिलयश्च भृत्यः ॥ १७१ ॥
इदं जनो यः सुविशुद्धचेताः । शृणोति भामंडलबंधुयोगं ॥
अभीष्ट योगानरुजश्चिराय । रविप्रभोसौ लभते शुभात्मा ॥ १७२ ॥

इत्यार्षे रविषेणाचार्यप्रोक्ते पद्मचरिते भामंडलसमागमाभिधानं नाम त्रिंशत्तमं पर्व ।

# अथैकत्रिंशत्तमं पर्व ।

उवाच श्रेणिको भूपः सर्वंधुरनरण्यजः । इमां विभूतिं संप्राप्य चक्रे किं गणनायक ॥ १ ॥
पुरातनं च वृत्तांतं रामलक्ष्मणयोस्तयोः । तवैव विदितं सर्वं तन्नो ब्रूहि महायशः ॥ २ ॥
इति पृष्टो महातेजा जगाद मुनिपुंगवः । निरवद्यं तया तत्त्वं यथा सर्वज्ञभाषितं ॥ ३ ॥
स्वसंशयमशेषज्ञं राजा दशरथोन्यदा । प्रणम्य साधुमप्राक्षीत्सर्वभूतहितं हितं ॥ ४ ॥
मया जन्मानि भूरीणि परिप्राप्तानि यानि तु । वेद्म्येकमपि नो तेषां तत्सर्वं विहितं त्वया ॥५॥
तान्यहं ज्ञातुमिच्छामि भगवन्नुच्यतामिति । भवत्प्रसादतो मोहं निराकर्तुमहं यजे ॥ ६ ॥
श्रोतुं समुद्यतस्यैव भवान् दशरथस्य तु । सर्वभूतहितः साधुरिदं वचनमब्रवीत् ॥ ७ ॥
शृणु राजन् प्रवक्ष्यामि यन्मां पृच्छसि सन्मते । त्वया पर्यट्य संसारे मतिरासादिता यथा ॥८॥
न त्वयैकेन संसारो भ्रांतोन्यैरपि संसृतः । चिन्वानैः कर्मभिः कर्मदुःखसंजननो महान् ॥ ९ ॥
अस्मिन् जगत्रये राजन् जंतूनां स्वहितैषिणां । स्थितयस्तिस्र उद्दिष्टा उत्तमाधममध्यमा ॥१०॥
अभावी च तथा भावी सैहीं च गतिरुत्तमा । पुनरावृत्तिनिर्मुक्ता कल्याणी जिनदेशिता ॥११॥

सेयं सिद्धगतिः शुद्धा सनातनसुखावहा । इंद्रियव्रणरोगार्तैर्मोहेनांधैर्न दृश्यते ॥ १२ ॥
श्रद्धासंवेगहीनानां हिंसादिष्वनिवर्तिनां । चतुर्गतिकसंवर्ता गतिरुग्रतमो रजा ॥ १३ ॥
अभव्यानां गतिः क्लिष्टा विनाशपरिवर्जिता । भव्यानां तु परिज्ञेया गतिर्निर्वृतिभाविनी ॥१४॥
धर्मादिद्रव्यपर्यंतं लोकालोकमशेषतः । पृथिवी प्रभृतीन्कायानाश्रितांश्चेतनाभृतः ॥ १५ ॥
जीवराशिरनंतोयं विद्यते नास्य संक्षयः । दृष्टांतः सिकताकाशचंद्रादित्यकरादिकः ॥ १६ ॥
अनादिमंतनिर्मुक्तं त्रैलोक्यं स चराचरं । स्वकर्मनिचयोपेतं नानायोनिकृताटनं ॥ १७ ॥
सिद्धाःसिद्धयंति सेत्स्यंति कालेंतपरिवर्जिते । जिनदृष्टेन धर्मेण नैवान्येन कथंचन ॥ १८ ॥
यःसंदेहकलंकेन निचितः पापकर्मणा । अभावितस्य धर्मेण का तस्य श्रद्धानता ॥ १९ ॥
कुतःश्रद्धाविमुक्तस्य धर्मो धर्मफलानि च । अत्यंतदुःखविज्ञानं सम्यक्त्वरहितात्मनां ॥ २० ॥
अत्युग्रकर्मनिर्मोके वेष्टितानां समंततः । मिथ्याधर्मानुरक्तानां स्वहिताद्दुःखवर्तिनां ॥ २१ ॥
सेनापुरेऽथ दीपिन्या उपास्तिर्नाम भावना । सा च मिथ्याभिमानेन परिपूर्णा निरर्गलं ॥२२॥
अश्रद्धानात्संरंभमत्सरक्ष्वेडधारिणी । दुर्भावा सततं साधुनिंदनासक्तशब्दिका ॥ २३ ॥
प्रयच्छति स्वयं नान्नं यच्छंतं नानुमन्यते । निवारयति यत्नेन विद्यमानं सुभूर्यपि ॥ २४ ॥

एवमादिमहादोषा कुतीर्थपरिभाविता । कालमेत्याभ्रमद्भीमे निष्पारे भवसागरे ॥ २५ ॥
उपास्तिर्देहि देहीति समभ्यस्याक्षरद्वयं । पुण्यकर्मानुभावेन पुरे चंद्रपुराह्वये ॥ २६ ॥
सुतोभूद्भद्रधारिण्योर्भाग्यवान् बहुबांधवः । धारणो नामतस्तस्य पत्नी नयनसुंदरी ॥ २७ ॥
देशकालप्रयत्नेभ्यः साधुभ्यः शुद्धभावतः । दत्वासौ पारणां सम्यक्काले संत्यज्य विग्रहं ॥२८॥
विदेहे धातकीखंडे मेरोरुत्तरतः कुरौ । भुक्त्वा पल्यत्रयं भोगं समारूढं त्रिविष्टपं ॥ २९ ॥
च्युतातः पुष्कलावत्यां नगर्यां नंदिघोषतः । वसुधायां समुत्पन्नो नामतो नंदिवर्धनः ॥ ३० ॥
नंदिघोषोन्यदा धर्मं श्रुत्वोद्यानं प्रबुद्धवान् । नंदिवर्धनमाधाय पृथिवीपरिपालने ॥ ३१ ॥
यशोधरमुनेः पार्श्वे प्रव्रज्य सुमहत्तपः । कृत्वा स्वर्गं समारूढस्तनुं त्यक्त्वा यथाविधि ॥ ३२ ॥
गृहिधर्मसमासक्तो नमस्कारपरायणः । पूर्वकोटिमहाभोगान् भुक्त्वा श्रीनंदिवर्धनः ॥ ३३ ॥
सन्यासेन तनुं त्यक्त्वा प्रयातः पंचमं दिवं । ततश्च्युतो विदेहेऽस्मिन् गिरिराजस्य पश्चिमे ॥३४॥
ख्याते शशिपुरे स्थाने विजयार्द्धनगोत्तमे । सूर्यंजयोऽभवद्विद्युल्लतायां रत्नमालिनः ॥ ३५ ॥
अन्यदा सिंहनगरं रत्नमाली महाबलः । प्रस्थितो विग्रहं कर्तुं यत्रासौ वज्रलोचनः ॥ ३६ ॥
रथैः प्रभास्वरैर्दिव्यैः पदातिगजवाजिभिः । नानाशस्त्रकृतध्वांतैःसामंतैः सुमहाबलैः ॥ ३७ ॥

तं दष्टोष्ठं धनुःपाणिं कवचावृतविग्रहं । दग्धकाममरिस्थानं क्रोधादाग्नेयविद्यया ॥ ३८ ॥
रथाग्रारूढमायांतं वेगिनं भीषणाकृतिं । नभस्थं सहसा कश्चिदमरोऽभिदधाविति ॥ ३९ ॥
रत्नमालिन् किमारब्धमिदं संरंभमुत्सृज । विबुध्यस्व वदाम्येष वृत्तांतं तव पूर्वकं ॥ ४० ॥
इहासीद्भारते वास्ये मांसादोऽधमकर्मकृत् । गांधार्यां भूतिरुच्चीभूदुपमन्युः पुरोहितः ॥ ४१ ॥
साधोः कमलगर्भस्य श्रुत्वा व्याकरणं च सः । नाचरामि पुनः पापमिति व्रतमुपाददे ॥ ४२ ॥
पंचपल्योपमं स्वर्गे तेनायुः समुपार्जितं । उपमन्यूपदेशेन भस्मसाद्भावमाहृतं ॥ ४३ ॥
मुंचते सुकृतं चासाववस्कंदेन चारिभिः । प्रपत्य हिंसितः साकमुपमन्युः पुरोधसा ॥ ४४ ॥
पुरोहितो गजो जातो युद्धेसौ जर्जरीकृतः । संप्राप्य जय्यमप्राप्यमितरैर्दुःखभाजनैः ॥ ४५ ॥
पुनस्तत्रैव गांधार्या भूतिपुत्रस्य धीमतः । देव्यां योजनगंधायां पुत्रोभूदरिसूदनः ॥ ४६ ॥
दृष्ट्वा कमलगर्भं च पूर्वजन्म समस्मरत् । प्रव्रज्यासौ ततो मृत्वा शतारेहं सुरोऽभवं ॥ ४७ ॥
स त्वं भूतिमृगो जातो मंदारण्ये दुराकृतिः । अकामनिर्जरा तस्य दावदग्धोस्य भूकुना ॥४८॥
कंबोजेन सताकारि यत्त्वया कर्म दारुणं । किंलजाख्येन तदासी (?) च्छर्करानरकं गतः ४९
महास्नेहानुबंधेन ततस्त्वं संप्रबोधितः । अयमुद्धृत्य जातोऽसि रत्नमाली खगेश्वरः ॥ ५० ॥

पर्याप्तानि न किं तानि दुःखानीत्युदितश्च सः । सूर्यंजयसुतं राज्ये निधाय कुलनंदनं ॥ ५१ ॥
वृत्तांतश्रवणात्तस्मात्परं निर्वेदमीयुषा । सूर्यंजयेन सहितं सत्कर्मोदयचेतसा ॥ ५२ ॥
रत्नमाली पुनर्नानादुर्गतित्रस्तमानसः । ययौ शरणमाचार्यं सौम्यं तिलकसुंदरं ॥ ५३ ॥
सूर्यंजयस्तपः कृत्वा महाशुक्रमुपागमत् । च्युतोऽनरण्यराजर्षेः सुतो दशरथोऽभवत् ॥ ५४ ॥
स्वल्पेन सुकृतेन त्वमुपास्तिप्रमुखैर्भवैः । न्यग्रोधवीजवद्वृद्धिं संप्राप्तोऽसि शुभोदयात् ॥ ५५ ॥
नंदिवर्धनकालेन नंदिघोषपिता च यः । सोहं ग्रैवेयकाद्भ्रष्टः सर्वभूतहितोऽभवं ॥ ५६ ॥
यो भूतिरुपमन्युश्च तावंतौ तद्वशानुगौ । जनको कनकश्चेति जातौ सुकृतचेतसा ॥ ५७ ॥
संसारे न परः कश्चिन्नात्मीयः कश्चिदंजसा । सैषा शुभाशुभैर्जंतोरुद्वर्तपरिवर्तना ॥ ५८ ॥
उदाहृतमिदं श्रुत्वा विनीतो वीतसंशयः । अनरण्यसुतो जातः प्रबुद्धः संयमोन्मुखः ॥ ५९ ॥
सर्वादरसमेतश्च संपूज्य चरणौ गुरोः । प्रणम्य च विशुद्धात्मा प्रविवेश सुकोशलं ॥ ६० ॥
एवं च मानसे चक्रे सार्वभूमीश्वरं पदं । पद्माय सुधिये दत्वा माधवीयां श्रये गतिं ॥ ६१ ॥
धर्मात्मा सुस्थिरो रामस्त्रिसमुद्रां वसुंधरां । अनुपालयितुं शक्तो भ्रातृभिः परिवारितः ॥ ६२ ॥
चिंतयत्येवमेवास्मिन् राज्यमोहपरांमुखे । मुक्त्यर्थाहितचेतस्के श्रीमद्दशरथे नृपे ॥ ६३ ॥

तिरोधानं गता क्वापि स्वच्छज्योत्स्नापटा शरत् । चंद्रास्याहिमभीतेव सरोसहनिरीक्षणा ॥६४॥
प्राप्तः प्रालेयसंघातो विच्छायीकृतनीरजः । हेमंतो जडवातेन व्याकुलीकृतविष्टपः ॥ ६५ ॥
स्फुटिताधरपादांतः पृष्टन्यस्तपटच्चराः । दंतवीणाकृतस्वाना रूक्षव्याकुलमूर्धना ॥ ६६ ॥
तित्तिरच्छदनच्छायक्रोडजंघा विभावसोः । सततात्सेवनात्कुक्षिपूरणाद्यूनचेतसः ॥ ६७ ॥
शरीरच्छायया तुल्या प्रपक्वत्रपुषत्वचः । दुर्गेहिनी वचःशस्त्रैरत्यन्तं तष्टमानसाः ॥ ६८ ॥
काष्ठादानयनाशक्त्या दिवाभास्करतापिताः । कुठारादिधराः स्कंधौ दधानाः किणकर्कसौ॥६९॥
शाकाम्लखलकाद्यंतपरिपूरितकुक्षयः । दुःखं नयंति तत्कालं दुष्कुटीषु धनोज्झिताः ॥ ७० ॥
वरप्रासादयातास्तु शीतसंगमहारिभिः । संवातांगा वरैर्वस्त्रैर्धूपामोदानुबंधिभिः ॥ ७१ ॥
षड्रसं स्वादुसंपन्नं हेमरुक्मादिपात्रगं । भुंजानाः सुरभिस्निग्धमाहारं निजलीलया ॥ ७२ ॥
कुंकुमप्रविलिप्तांगा असितागुरुधूपिताः । अक्षीणघननिश्चिंता गवाक्षकृतवीक्षणाः ॥ ७३ ॥
गीतनृत्यादिसंप्राप्ता विनोदं परमं सदा । माल्यभूषणसंपन्नाः सुभाषितकथोद्यताः ॥ ७४ ॥
विनीताभिः कलाज्ञाभिः सरूपाभिः समं नराः । क्रीडंति वरनारीभिः तदा पुण्यानुभावतः ७५
पुण्येन लभ्यते सौख्यमपुण्येन च दुःखिता । कर्मणामुचितं लोकः सर्वं फलमुपाश्नुते ॥ ७६ ॥

तदा दशरथो भीतो भृशं संसारवासतः । निर्वृत्यालिंगनाकांक्षी विरक्तो भोगवस्तुतः ॥ ७७ ॥
द्वास्थमाज्ञायपयद्भूमिन्यस्तजानुकरं द्रुतं । भद्राह्वय स्वसामंतान् मंत्रिभिः सहितानिति ॥ ७८ ॥
नियुज्यात्मसमं द्वारे शासनं तेन तत्कृतं । आगतास्ते नमस्कृत्य यथास्थानमवस्थिताः ॥ ७९ ॥
नाथाज्ञापय किं कृत्यमिति चोक्तेन भूभृता । विनीता जगदे शंसत्प्रव्रजामीति निश्चितं ॥ ८० ॥
ततस्तन्मंत्रिणोवोचन् गण्यमानाश्च पार्थिवाः । नाथ किं कारणं जातं मतावस्यां तवाधुना ॥ ८१ ॥
जगादासौ समक्षं भो नत्वेतत्सकलं जगत् । शुष्कं तृणमिवाजस्रं दह्यते मृत्युवह्निना ॥ ८२ ॥
अग्राह्यं यदभव्यानां भव्यानां ग्रहणोचितं । सुरासुरनमस्कार्यं प्रशस्यं शिवसौख्यदं ॥ ८३ ॥
त्रिलोके प्रकटं सूक्ष्मं विशुद्धमुपमोज्झितं । श्रुतं तन्मुनितो जैनं श्रुतमद्य मयाचिरात् ॥ ८४ ॥
परमं सर्वभावानां सम्यक्त्वमतिनिर्मलं गुरुपादप्रसादेन प्राप्तोहं वर्त्म निर्वृतेः ॥ ८५ ॥
नानाजन्ममहावर्तां मोहपंकसमाकुलां । कुतर्कग्राहसंपूर्णां महादुःखोर्मिसंततां ॥ ८६ ॥
मृत्युकल्लोलसंयुक्तां कुदृष्टिजलनिर्भरां । समाक्रंदमहारावां विधर्मजववाहिनीं ॥ ८७ ॥
भवापगां मम स्मृत्वा नरकांभोधिगामिनीं । पश्यतांगानि कंपंते वित्रासेन समंततः ॥ ८८ ॥
वृथावोचत मां किंचिदात्मानं मोहिता भृशं । तमसः प्रकटे देशे कुतः स्थानं रवौ सति ॥ ८९ ॥

अभिषिंचत मे पुत्रं प्रथमं राज्यपालने । त्वरितं येन निर्विघ्नं प्रविशामि तपोवनं ॥ ९० ॥
इत्युक्ते निश्चितं ज्ञात्वा महाराजस्य मंत्रिणः । सामंताश्च परं शोकं प्राप्ता विनतमस्तकाः ॥९१॥
लिखंतो भूमिमंगुल्या वाष्पाकुलनिरीक्षणाः । क्षणेन निष्प्रभीभूतास्तस्थुर्मौनं समाश्रिताः ॥९२॥
प्राणेशं निश्चितं ज्ञात्वा निर्ग्रंथव्रतसंश्रयं । एकीभूतं शुचं प्राप्तं सर्वमंतःपुरं परं ॥ ९३ ॥
विनोदान् प्रस्तुतान्मुक्त्वा वाष्पपूरितलोचनाः । भूषणस्वनभूयिष्ठं रुरुदुः प्रमदांगनाः ॥ ९४ ॥
पितरं तादृशं दृष्ट्वा भरतः प्रतिबुद्धवान् । अचिंतयदहो कष्टं दुश्छेद्यं स्नेहबंधनं ॥ ९५ ॥
अव्यापारेण तावस्य किमेतेन प्रबोधिनः । चिंता राज्यगता कास्य प्रव्रज्यां कर्तुमिच्छतः ॥९६॥
आपृच्छया न मे किंचित्कार्यमाशु विशाम्यहं । तपोवनं महादुःखसंसारक्षयकारणं ॥ ९७ ॥
देहेनापि किमेतेन व्याधिगेहेन नाशिना । बांधवेषु तु कावस्था स्वकर्मफलभोगिषु ॥ ९८ ॥
जंतुरेककया वायं भवपादपसंकुले । मोहांधो दुःखविपिने कुरुते परिवर्तनं ॥ ९९ ॥
ततः कलाकलापज्ञा भरतस्येंगितादिभिः । केकया चिंतितं ज्ञात्वा दधाना शोकमुत्तमं ॥ १०० ॥
कथं मे न भवेद्भर्त्ता न च पुत्रो गुणालयः । एतयोर्वारणे कुर्वे कमुपायं सुनिश्चितं ॥ १०१ ॥
एवं चिंतामुपेतायाः परमं व्याकुलात्मनः । तस्या वरोऽभवच्चित्ते गत्वा च त्वरितं ततः ॥१०२॥

प्रीत्या परमया दृष्ट्वा सावष्टंभं नराधिपं । जगादार्धासने स्थित्वा तेजसा पुरुणान्विता ॥१०३॥
सर्वेषां भूभृतां नाथ पत्नीनां च पुरस्त्वया । मनीषितं ददामीति यदुक्ताहं प्रसादिना ॥१०४॥
वरं संप्रति तं यच्छ मह्यं कीर्तिसमुज्ज्वला । दानेन तेऽखिलं लोकं कीर्तिर्भ्रमति निर्मला १०५
ततो दशरथोऽवोचद्ब्रूहि त्वं दक्षिणां प्रिये । प्रार्थयस्व यदिष्टं ते यच्छाम्येष वराशये ॥ १०६ ॥
इत्युक्ते मुंचती वाष्पमवोचज्ज्ञातनिश्चया । कथं नाथ त्वया चेतः कृतं निष्ठुरमीदृशं ॥ १०७ ॥
वद किं कृतमस्माभिर्येनासि त्यक्तुमुद्यतः । ननु जीवितमायातमस्माकं त्वयि पार्थिव ॥१०८॥
अत्यंतं दुर्धरोद्दिष्टा प्रव्रज्या जिनसत्तमैः । कथमाश्रयितुं बुद्धिस्तामद्य भवता कृता ॥ १०९ ॥
देवेंद्रसदृशैर्भोगैरिदं ते लालितं वपुः । कथं चक्ष्यति जीवेश श्रामण्यं विविधं परं ॥ ११० ॥
एवमुक्तो जगादासौ कांते सत्वस्य को भरः । वांछितं वद कर्तव्यं स्वयं यास्यामि सांप्रतं१११
इत्युक्त्वा लिखितं क्षोणीं प्रदेशिन्या नतानना । जगाद नाथ पुत्राय मम राज्यं प्रदीयतां ११२
ततो दशरथोऽवोचत्प्रिये कास्मिन्नपत्रपा । न्यासस्त्वया मयि न्यस्तः सांप्रतं गृह्यतामसौ ११३
एवमस्तु शुचं मुंच निर्ऋणोऽहं त्वया कृतः । किं वा कदाचिदुक्तं ते मया जनितमन्यथा ११४
पद्मं लक्षणसंयुक्तमाहूय च कृतानतिं । ऊचे विनयसंपन्नं किंचिद्विगतमानसः ॥ ११५ ॥

वत्स पूर्वं रणे घोरे कलापारगयानया । कृतं केकयया साधु सारथ्यं मम दक्षया ॥ ११६ ॥
तदा तुष्टेन पत्नीनां भूभृतां च पुरो मया । मनीषितं प्रतिज्ञातं नीतं न्यासत्वमेतया ॥ ११७ ॥
देहि पुत्रस्य मे राज्यमिति तं याचतेऽधुना । किमप्याकूतमापन्ना निरपेक्षा मनस्विनी ॥११८॥
प्रतिज्ञाय तदेदानीं ददाम्यस्यै न चेन्मतं । प्रव्रज्यां भरतः कुर्यात्संसारालंबनोज्झितः ॥ ११९ ॥
इयं च पुत्रशोकेन कुर्यात्प्राणविवर्जनं । भ्रमेच्च मम लोकेस्मिन्नकीर्तिर्वितथोद्भवा ॥ १२० ॥
मर्यादा नच नामेयं यद्विधायाग्रजं क्षमं । राज्यलक्ष्मीवधूसंगं कनीयान् प्राप्यते सुतः ॥१२१॥
भरतस्याखिले राज्ये दत्ते स त्वं सलक्ष्मणः । क्व गच्छेत्परमं तेजो दधानः क्षत्रगोचरं ॥१२२॥
तदहं वत्स नोवेद्मि किं करोमीति पीडितं । अत्यंतदुःखवेगोरुचिंतावार्तांतरस्थितः ॥ १२३ ॥
ततः पद्मो जगादैवं विभ्रद्विनयमुत्तमं । सद्भावप्रीतिचेतस्कः पादन्यस्तनिरीक्षणः ॥ १२४ ॥
तात रक्षात्मनःसत्यं त्यजास्मत्परिचिंतनं । शक्रास्यापि श्रिया किं मे त्वय्यकीर्तिमुपागते॥१२५॥
जातेन ननु पुत्रेण तत्कर्तव्यं गृहैषिणा । येन नो पितरौ शोकं कनिष्ठमपि गच्छतः ॥ १२६ ॥
पुनाति त्रायते चायं पितरं येन शोकतः । एतत्पुत्रस्य पुत्रत्वं प्रवदंति मनीषिणः ॥ १२७ ॥
सभानुरंजनी यावत्कथेयं वर्तते तयोः । तावद्ब्रवंति हन्मीति कठोरीकृतमानसः ॥ १२८ ॥

सौधादवतरद्वेगाच्छोकहाकारनादितः । निरुद्धो भरतः पित्रा स्नेहविक्लवचेतसा ॥ १२९ ॥
उपविश्यांकमारोप्य परिश्वज्य सुचुंबितं । इति चाभिदधे भूमौ तिष्ठासुर्वशगः पितुः ॥ १३० ॥
राज्यं पालय वत्स त्वमहं यामिं तपोवनं । स जगौ न भजे राज्यं प्राव्राज्यं तु करोम्यहं१३१
भज तावत्सुखं पुत्र सारं मनुजजन्मनः । नवेन वयसा कांतः वृद्धः संप्रव्रजिष्यसि ॥ १३२ ॥
इत्युक्तेऽभिदधे तात किं मोहयसि मां वृथा । मृत्युः प्रतीक्षते नैव बालं तरुणमेव वा ॥१३३॥
गृहाश्रमे महावत्स श्रूयते धर्मसंचयः । अशक्यः कुनरैः कर्तुं कुरुते राज्यसंगतः ॥ १३४ ॥
इत्युक्तेभिदधे तात हृषीकवशवर्तिनः । कामक्रोधादिपूर्णस्य का मुक्तिर्गृहसेविनः ॥ १३५ ॥
मुनीनां वत्स केषांचिद्भवेनैकेन जायते । नैव मुक्तिस्ततो धर्मं कुरु सद्मन्यवास्थितः ॥ १३६ ॥
इत्युक्तोऽभिदधे तात यद्यप्येवं तथापि किं । गृहधर्मेण तस्मिन् हि मुक्त्यभावः सुनिश्चितः १३७
अपि चानुक्रमान्मुक्तिर्न ममान्यस्य शोचिता । गरुडः किं पतंगानां वेगेन सदृशो भवेत्॥१३८॥
कामार्चिषा परं दाहं व्रजंतः कुत्सिता वराः । जिह्वाधमांगकार्याणि कुर्वते न च निर्वृतिः॥१३९॥
निक्षिप्यते हि कामाग्नौ भोगसर्पिर्यथा यथा । नितरां वृद्धिमायाति तापकृत्स तथा तथा॥१४०॥
भुक्त्वा भोगान् दुरुत्पादान् दुरक्षान् क्षणभंगिनः । नियतं दुर्गतिं याति पापात्परमदुःखदं१४१

अनुमन्यस्य मां तात नितांतं जन्मभीरुकं । करोमि विधिनारण्ये तपोनिर्वृतिकारणं ॥ १४२ ॥
अथ गेहेऽपि लभ्येत श्रेयो जनकनैर्वृतं । त्वमेव कुरुषे कस्मादस्य त्यागं महामति ॥ १४३ ॥
तार्यते दुःखतो यस्मात्तपश्चाभ्यनुमोदते । एतत्तातस्य तातत्वं प्रवदंति विचक्षणाः ॥ १४४ ॥
जीवितं वनितामिष्टं पितरं मातरं धनं । भ्रातरं च परित्यज्य याति जीवोयमेककः ॥ १४५ ॥
सुचिरं देवभोगेऽपि यो न तृप्तो हताशकः । स कथं तृप्तिमागच्छेन्मनुष्यभवभोगकैः ॥ १४६ ॥
पिता तद्वचनं श्रुत्वा हृष्टरोमा प्रमोदतः । जगाद वत्स धन्योऽसि विबुद्धो भव्यकेसरी ॥१४७॥
तथापि धीर नो भंगः कदाचित्प्रणयस्य मे । त्वया कृतो विनीतानां भवान् हि शिरसि स्थितः॥
शृणु सारथ्यतुष्टेन मयासौ जीवसंशये । प्रतिज्ञातं जनन्यास्ते वांछितं नृपसाक्षिकं ॥ १४९ ॥
ऋणतां तच्चिरं नीतमद्याहं प्रापितोऽनया । राज्यं प्रयच्छ पुत्रस्य ममेति बहुमानतः ॥ १५० ॥
स त्वं निष्कंटकं तात राज्यं शक्रोपमं कुरु । असत्यसंधानकीर्तिर्मे माभ्रमीन्निखिलं जगत् १५१
इयं च तव शोकेन परमेणाभितापिता । माता म्रियेत सौख्येन सततं लालितांगिका ॥ १५२ ॥
न करोति यतः पातं पित्रोः शोकमहोदधौ । अपत्यत्वमपत्यस्य तद्वदंति सुमेधसः ॥ १५३ ॥
ततः पद्मोऽपि तत्पाणौ गृहीत्वैवमभाषत । प्रेमनिर्भरया पश्यन् दृष्ट्या मधुरनिस्वनः ॥१५४॥

तातेन भ्रातरुक्तं यत्कोन्यस्तद्वदितुं क्षमः । नहि सागररत्नानामुपपत्तिः सरसो भवेत् ॥१५५॥
वयस्तपोऽधिकारे ते जायतेऽद्यापि नोचितं । कुरु राज्यं पितुः कीर्तिरुद्यातु शशिनिर्मला १५६
इयं च शोकतप्तांगा माता यद्याति पंचतां । न तद्युक्तं महाभागे नंदने त्वादृशे सति ॥ १५७॥
पितुः पालयितुं सत्यं त्यजामोऽपि वयं तनुं । कथं त्वं तु कृतं प्राज्ञः श्रियं न प्रतिपद्यसे ॥१५८॥
नद्यां गिरावरण्ये वा तत्र वासं करोम्यहं । यत्र कश्चिन्न जानाति कुरु राज्यं यथेप्सितं ॥१५९॥
भोगं सर्वं परित्यज्य पंथानमपि संश्रितः । न करोमि पृथिव्यां ते कांचित्पीडां गुणालय १६०
माश्वसीद्दीर्घमुष्णं च मुंच तावद्भवाद्भयं । कुरु वाक्यं पितुः क्षोणीं रक्ष न्यायपरायणः ॥१६१॥
इक्ष्वाकूणां कुलं श्रीमद्भूषयामलविभ्रमं । अत्यंतविपुलं भ्रातः शशी गृहकुलं यथा ॥ १६२ ॥
भ्राजते त्रायमानः सन् वाक्यं तत्पितृकस्य यत् । लब्धवर्णैरिदं भ्रातुर्भ्रातृत्वं परिकीर्तितं १६३
इत्युक्त्वा भावतः पादौ शिरसा भूतलस्पृशा । पितुः प्रणम्य तत्पार्श्वान्निर्गतो लक्ष्मणान्वितः ॥
अत्रांतरे नृपो मूर्छां संप्राप्तोऽपि न केनाचित् । ज्ञातः स्तंभसमायुक्तवपुः पुस्तसमाकृतिः ॥१६५॥
स तूर्णं धनुरादायगत्वा नत्वा च मातरं । आपृच्छ्यतां च गच्छामि तावदन्यमहीमिति १६६
सखीत्वं मूर्छया तस्या दुःखज्ञाननिवारणात् । क्षणं कृतं परिप्राप्तसंज्ञाचास्राकुले क्षणा ॥१६७॥

ऊचेऽपराजिता हा त्वं वत्स क्व प्रस्थितोऽसि मां । कस्मात्त्यजसि सच्चेष्ट क्षिप्त्वा शोकमहोदधौ १६८
मनोरथशतैः पुत्र त्वं प्राप्तो दुर्लभो मया । प्रारोह इव शाखाया मातुरालंबनं सुतः ॥ १६९ ॥
परिदेवनमेवं तां कुर्वतीं हृदयंगमं । जगाद प्रणतः पद्मो मातृभक्तिपरायणः ॥ १७० ॥
अंब मागाद्विषादं त्वं दक्षिणस्यामहं दिशि । निरूप्य संश्रयं योग्यं नेष्यामि त्वां विसंशयं १७१
तातेन पृथिवी दत्ता जननीवरदानतः । भरतायेति ते कर्णजाहं नूनमुपागतं ॥ १७२ ॥
अंते तस्या महारण्ये विंध्याद्रौ मलयेऽथवा । अन्यस्मिन् चार्णवस्यांते पश्य मातः कृतं पदं १७३
मयि स्थिते समीपेऽस्मिन् लोके भास्करसंमते । आज्ञैश्वर्यमयी कांतिर्भरतेंदोर्न जायते ॥ १७४ ॥
ततः प्ररुदती माता जगादात्यंतदुःखिता । पुत्रं विनतमाश्लिष्य स्नेहकातरलोचना ॥ १७५ ॥
तनयाद्यैव मे गंतुमुचितं भवता समं । कथं त्वाहमपश्यंती प्राणान् धारयितुं क्षमा ॥ १७६ ॥
पिता नाथोऽथवा पुत्रः कुलस्त्रीणां त्रयी गतिः । पितातिक्रांतकालो मे नाथो दीक्षासमुत्सुकः ॥
जीवितस्य त्वमेवैकः सांप्रतं मेऽवलंबनं । त्वयापि रहिता साहं वद गच्छामि कां गतिं ॥१७८॥
सोवोच्चदुपलैरंब क्षितिरत्यंतकर्कशा । भवत्या विषमा पद्भ्यां गंतुं सा शक्यते कथं ॥ १७९ ॥
तस्मादेकक एवाहं विधाय सुखमाश्रयं । यानेन केनचिन्नेष्ये भवंतीं त्यजनं कुतः ॥ १८० ॥

यथा स्पृशामि ते मातः पादावेष तथा ध्रुवं । आगमिष्यामि नेतुं त्वं मुंच कार्यविचक्षणे ॥१८१॥
एवमुक्ते विमुक्तः सन् परिसांत्वा सुभाषितैः । पुनश्च पितरं प्राप्तप्रबोधं प्रणिपत्य सः ॥ १८२ ॥
शेषं मातृजनं गत्वा परिसांत्व्य सुभाषितैः । अविषण्णमहाचेताः सर्वन्यायविचक्षणः ॥ १८३ ॥
भ्रातृबंधुपरिष्वंगं कृत्वा संभाषणं तथा । सीतायाः सदनं प्राप्तः प्रेमानिर्भरमानसः ॥ १८४ ॥
प्रिये त्वं तिष्ठ चात्रैव गच्छाम्यहं पुरांतरं । ततो जगाद साध्वीसा यत्र त्वं तत्र चाप्यहं॥१८५॥
मंत्रिणो नृपतीन् सर्वान् परिवर्गं च सादरं । आपृच्छच्छेषवर्गेऽपि भीषणोह्लापताकुलः ॥१८६॥
प्रीत्या संवर्धितं भूयः कृतालिंगनमारतं । मित्रवर्गं सत्राष्पाक्षं पुनरुक्तं न्यवर्तयत् ॥ १८७ ॥
स्निग्धेन चक्षुषा पश्यन् प्रधानान्वाजिवारणान् । निरगच्छत्पितुर्गेहान्मंदरास्थिरमानसः ॥१८८॥
आडुढौकन् द्रुतं चारून् सामंतान् वाजिवारणान् । पद्मेन न गृहीतास्ते परमन्यायवेदिना ॥१८९॥
विदेशगमनोद्युक्तं दृष्ट्वा तं जानकी भृशं । श्रीमदंशुकसंवीता विकसत्पद्मलोचना ॥ १९० ॥
प्रणम्य श्वसुरं श्वश्रूराच्छच च सुहृज्जनं । विनीतानुययौ नाथं पौलोमीव सुराधिपं ॥ १९१ ॥
दृष्ट्वा तमुद्यतं गंतुं स्नेहनिर्भरमानसः । लक्ष्मणोऽचिंतयत्क्रोधं वहन्नयनलक्षणं ॥ १९२ ॥
अन्यायमीदृशं कर्तुं कथं तातेन वांछितं । स्वार्थसंसक्तानित्याशं धिक् स्त्रैणमनपेक्षितं ॥ १९३ ॥

अहो महानुभावोयं ज्यायान् पुरुषसत्तमः । मुनेरपीदृशं स्वांतं दुष्करं जातु जायते ॥ १९४ ॥
किमद्यैव करोम्यन्यां सृष्टिमुत्सृज्य दुर्जनात् । भरतस्य बलादाहो करोमि विमुखां श्रियं ॥१९५॥
विधातुमथ सामर्थ्यं भनज्मि चिरमूर्जितं । निरुद्ध्यापादयोर्ज्येष्ठं करोमि श्रीसमुत्सुकं ॥ १९६ ॥
न युक्तमथवा चित्तं जातक्रोधानुगस्य मे । क्रोधः करोति मोहांधमपि दीक्षामुपाश्रितं ॥ १९७ ॥
किमनेन विचारेण कृतेनानुचितेन मे । ज्येष्ठस्तातश्च जानाति सांप्रतासांप्रतं बहु ॥ १९८ ॥
सितकीर्तिसमुत्पत्तिर्विधातव्या हि नः पितुः । तूष्णीमेवानुगच्छामि ज्यायसं साधुकारिणं ॥१९९॥
प्रशमय्य स्वयं कोपमित्यादाय शरासनं । प्रशाम्यापृच्छ्य चाशेषं जनं गुरुपुरस्सरं ॥ २०० ॥
महाविनयसंपन्नौ मार्गयोग्यकृताकृतिः । लक्ष्मीनिलयवक्षस्कः पद्मस्यानुपदं ययौ ॥ २०१ ॥
पितरौ परिवर्गेण सहितौ तनयान्वितौ । वर्षेव कुर्वाणौ तौ धाराभिर्नयनांभसा ॥ २०२ ॥
परिसांत्वनसद्धरिभ्यां प्राप्ताभ्यां निश्चयं परं । कृच्छ्रान्निवर्तितौ ताभ्यां प्राणिपत्य पुनः पुनः॥२०३॥
निर्वृत्यमानबंधूनां समूहेनान्वितााविमौ । राजगेहाद्विनिक्रांतौ देवाविव सुरालयात् ॥ २०४ ॥
वर्तते किमिदं मातः कस्येदं व्रतमीदृशं । अभाग्येयं पुरी कष्टमथवा सकला मही ॥ २०५ ॥
यामोऽनेन समं दुःखमेताभ्यां सह गम्यते । महाशक्ताविमौ कृच्छ्राद्धरणीधरगह्वरात् ॥ २०६ ॥

पश्य सीता कथं याति नाथेनानुमोदिता । अस्या सुविहितं सर्वं पतिभ्राता करिष्यति ॥२०७॥
अहो परमधन्येयं जानकी रूपशालिनी । विनयांशुकसंवीता भर्तारं यानुगच्छति ॥ २०८ ॥
अस्माकमपि नारीणामेषैव भवताद्गतिः । उदाहरणभूतेयं भर्तृदैवतयोषिताम् ॥ २०९ ॥
पश्य मातरमुज्झित्वा नेत्रांबुप्लावितानना । एष लक्ष्मीधरो गंतुमुद्युक्तो ज्यायसा समं ॥ २१० ॥
अहो प्रीतिरहो भक्तिरहो शक्तिरहो क्षमा । अहो विनयसंभारः श्रीमतोऽस्य विराजते ॥२११॥
भरतस्य किमाकूतं कृतं दशरथेन किं । रामलक्ष्मणयोरेषा का मनीषा व्यवस्थिता ॥ २१२ ॥
कालः कर्मेश्वरो दैवं स्वभावः पुरुषः क्रिया । नियतिर्वा करोत्येवं विचित्रकसमीहितं ॥ २१३ ॥
वर्ततेनुचितं बाढं क्व गता स्थानदेवताः । एवमादिस्तदा जज्ञे ध्वनिर्जनसमूहतः ॥ २१४ ॥
कुमाराभ्यां समं गंतुमुत्सुके सकले जने । पुरी शून्यगृहा जाता नष्टाशेषसमुत्सवा ॥ २१५ ॥
पुष्पप्रकरसंपूर्णाः समस्ता द्वारभूमयः । पिच्छलत्वं समानीताः शोकपूर्णाजनाश्रुभिः ॥ २१६ ॥
जनस्योत्सार्यमाणस्य विरूपिण्यो नरोत्तमैः । वीचयः सागरस्येव विक्षोभ्यंते महानिलैः ॥२१७॥
भक्तिभिः पूज्यमानोऽपि संभाषणसमुद्यतः । दाक्षिण्यपरमः पद्मो मेने विघ्नं पदे पदे ॥ २१८ ॥
प्रसक्त इव तं द्रष्टुमसमंजसमीदृशं । मंदं मंदांशुसंघातो रविरस्तमुपागमत् ॥ २१९ ॥

रविणा दिवसस्यांते त्यक्ताः सर्वमरीचयः । ज्येष्ठचक्रधरेणेव संपदो मुक्तिमिच्छता ॥ २२० ॥
दधाना परमं रागमुचितांबरयोगिनी । अन्वियाय रविं संध्या सीता दाशरथिं यथा ॥ २२१ ॥
ततो विशेषविज्ञानविध्वंसनविधायिना । रामव्रज्योद्भवेनेव तमसा व्याततं जगत् ॥ २२२ ॥
अनुप्रयातुकामस्य कर्तुं लोकस्य वंचनं । ससीतौ तावरेशस्य स्थानं प्राप्तौ क्षपामुखे ॥ २२३ ॥
भवांतकस्य भवनं नित्यालंकृतपूजितं । चंदनाम्भोजलिप्तक्ष्मं त्रिद्वारं तुंगतोरणं ॥ २२४ ॥
दर्पणादिविभूषं तत्ससीतौ सप्रदक्षिणं । प्रविष्टावनपेक्षौ तौ यथाविधि विशारदौ ॥ २२५ ॥
तृतीये तु जनो द्वारे प्रतिहारेण रुध्यते । कर्मणा मोहनीयेन शिवमिच्छन् कुदृष्टिवत् ॥ २२६ ॥
स्थापयित्वा धनुर्वर्म पुंडरीकनिभेक्षणौ । जिनेंद्रवदनं दृष्ट्वा तौ परां धृतिमागतौ ॥ २२७ ॥
मणिपीठस्थितं सौम्यं प्रलंबितभुजद्वयं । श्रीवत्सभासुरोरस्कं व्यक्तनिश्शेषलक्षणं ॥ २२८ ॥
संपूर्णचंदवदनं विबुद्धकमलेक्षणं । अस्मर्यमाणनिर्माणं विंबमष्टादशं जिनं ॥ २२९ ॥
प्रणम्य सर्वभावेन समर्च्य च सादरौ । स्थितौ तत्र विभावर्यां चिंतयंतौ सुहज्जनं ॥ २३० ॥
तत्र तावुषितौ ज्ञात्वा मातरः पुत्रवत्सलाः । एत्य वाष्पाकुलाः स्नेहात्परिष्वज्य पुनः पुनः २३१
पुत्राभ्यां सह संमंत्र्य दर्शने तृप्तिवर्जिताः । दोलारूढमिवात्मानो जग्मुर्दशरथं पुनः ॥ २३२ ॥

सर्वासामेव शुद्धीनां मनःशुद्धिः प्रशस्यते । अन्यथालिंग्यतेऽपत्यमन्यथालिंग्यते पतिः ॥२३३॥
ततस्ता गुणलावण्यरूपवेषमहोदयाः । जग्मुर्मधुरवादिन्यः प्रियं मंदरनिश्चलं ॥ २३४ ॥
कुलपोतं निमज्जंतं प्रियशोकमहार्णवे । संधारयमसौमित्रिं विनिवर्तय राघवं ॥ २३५ ॥
सोवोचत्तमसा युक्तं जगद्धात्र विकारिकं । प्रमाणं चेन्मदीयेच्छा सुखमेवास्तु जंतुषु ॥ २३६ ॥
जन्ममृत्युजराव्याधैर्मास्म कश्चिद्विबाध्यतां । नाना कर्मस्थितौ त्वस्यां को नु शोचति कोविदः २३७
पर्याप्तिर्नास्ति मृष्टानामिष्टानां दर्शनेषु वा । बांधवानां सुखानां च जीवितस्य धनस्य च ॥२३८॥
असमाप्तेंद्रियसुखं कदाचित्स्थितिसंक्षये । पक्षी वृक्षमिव त्यक्त्वा देहं जंतुर्गमिष्यति ॥ २३९ ॥
पुत्रवंत्यो भवंत्योऽत्र निवर्तयत सत्सुतौ । उपयुक्तं सुविश्रब्धा पुत्रभोगोदयद्युतिं ॥ २४० ॥
त्यक्तराज्याधिकारोहं निवृत्तः पापचेष्टितात् । भवादुग्रं भयं प्राप्तः करोमि चरितं मुनेः ॥२४१॥
एवं निश्चिताचित्तो । दशरथनृपतिस्समग्रमौदासीन्यं ॥
भेजे रविसमतेजाः । सकलकुभावाभिलाषदोषविमुक्तः ॥ २४२ ॥

इत्यार्षे रविषेणाचार्यप्रोक्ते पद्मचरिते दशरथप्रव्रज्याभिधानं नामैकात्रिंशत्तमं पर्व ।

# अथ द्वात्रिंशत्तमं पर्व ।

अथ तत्र क्षणं नीत्वा निद्रांतौ धृतकंकटौ । अर्धरात्रे महाध्वांते निश्शब्दे शांतमानवे ॥ १ ॥
विधाय जानकीं मध्ये जिनं नत्वा सकार्मुकौ । सुवेषौ प्रस्थितौ दीपैः पश्यंताविव कामिनः॥२॥
कश्चित्सुरतखिन्नांगो बाहुपंजरवर्तिनीं । कृत्वा प्राणसमां निद्रामतिगाढां निषेवते ॥ ३ ॥
कृत्वापराधकः पूर्वं कोपिनीं कश्चिदंगनां । प्रत्याययत्यलीकेन शपथेन पुनः पुनः ॥ ४ ॥
अपरो मानमुत्सृज्य कांतया स्मरतप्तया । कृतकं कोपमायातः सुवाग्भिः परिसांत्व्यते ॥ ५ ॥
सुरतायासखिन्नांगा देहे कस्यचिदंगना । लीना तत्त्वमिव प्राप्ता गाढां निद्रां निषेवते ॥ ६ ॥
नवसंगमनां कश्चिज्जायां विमुखवर्तिनीं । कृच्छ्रात्प्रस्तावमानीय संभाषयति संमदी ॥ ७ ॥
कस्मैचित्पूर्ववैगुण्यं कथयत्यंगनाखिलं । अपरो वेदयत्यस्मै विस्रब्धः कृतमाननः ॥ ८ ॥
कश्चित्परगृहं प्राप्तो धूर्तः संकुचितांगकः । उद्वासयति मार्जारं वातायनकृतस्थितिं ॥ ९ ॥
अपरः कृतसंकेतां शून्यदेवकुलांतरे । कुलटामाकुलीभूतो मुहुरुत्थाय वीक्षते ॥ १० ॥
चिरादुपगतं कंचिद्ध्वनरोषाभिसारिका । ताडयत्युत्तरीयेण बध्वा मेखलया खलम् ॥ ११ ॥

अभिसारिकया साकमन्यः प्राप्यसमागमं । शुनोऽपि पदशब्देन याति त्रासमनुत्तमं ॥ १२ ॥
इति निर्यूददेशेषु मंडपेषु च कामिनां । शृण्वंतौ वीक्ष्यमाणौ च वृत्तांतौ जग्मतुः शनैः ॥ १३ ॥
अपहारेण निर्गत्य पुरीतः पश्चिमेन तौ । आश्रितौ मार्गयोगेन दाक्षिणौ दक्षिणां दिशं ॥ १४ ॥
त्रियामांते ततोऽस्पष्टे सामंता वेगवाहिनः । राघवेण समं गंतुमुत्सुका भक्तिनिर्भराः ॥ १५ ॥
यथाश्रुति परिज्ञाय बंधुवंचनकारिणः । समीपं रामदेवस्य प्रापुर्मंथरगामिनः ॥ १६ ॥
ते चक्षुर्गोचरीकृत्य समेतौ रामलक्ष्मणौ । महाविनयसंपन्नाः पद्भ्यामेव डुढौकिरे ॥ १७ ॥
प्रणिपत्ते च भावेन संक्रमे संबभाषिरे । यावत्तावन्महासैन्यं तद्गवेषार्थमाययौ ॥ १८ ॥
प्रशशंसुश्च ते सीतामितिनिर्मलचेतसः । वयमस्याः प्रसादेन राजपुत्रौ समागताः ॥ १९ ॥
अयास्यद्यदि नैताभ्यां सममेषा सुमंथरा । ततः कथमिव प्राप्स्यामेतौ पवनरंहसौ ॥ २० ॥
इयं नः सुसती माता परमप्रियकारिणी । एतस्याः सदृशा नान्या प्रशस्तास्ति क्षिताविह ॥२१॥
तौ सीतागतिचिंतत्वान्मंदमंदं नरोत्तमौ । गत्यूतमात्रमध्वानं सुखयोगेन जग्मतुः ॥ २२ ॥
सस्यानि बहुरूपाणि पश्यंतौ क्षितिमंडले । सरांसि कंजरम्याणि तरूंश्च गगनस्पृशः ॥ २३ ॥
आपूर्यमाणपर्यंतौ वेगवन्निर्जराधिपैः । घनागमेनदीगंगाकालिंदीप्रवहाविव ॥ २४ ॥

ग्रामखेटमटंबेषु घोषेषु नगरेषु च । लोकेन पूजितौ वीरौ भोजनादिभिरुत्तमौ ॥ २५ ॥
केचिद्ध्वजखेदेन सामंता व्रजतोस्तयोः । पश्चादज्ञापियत्वैव विवृत्ता ज्ञातनिश्चयाः ॥ २६ ॥
अपरे त्रपया केचिद्भीत्यान्ये भक्तितत्पराः । अव्रजन् विनयात्पद्भ्यां दत्त्वा दुःखस्य मानसं २७
ततो हरिगजव्रातसंकुलारावभैरवां । परियात्राटवीं प्राप्तौ लीलया रामलक्ष्मणौ ॥ २८ ॥
तस्यां बहुलशर्वर्यां तुल्यध्वांतां महानगैः । निम्नगां शर्वरीमेतौ शबराश्रितरोधसां ॥ २९ ॥
तस्या रोधसि विश्रम्य नानास्वादुफलोचिते । कांश्चित्प्रावर्तयद्भूपान् पद्मः सुप्रतिबोधनः ॥३०॥
महतापि प्रयत्नेन निवृत्ता नापरे नृपाः । पद्मेन सहितं गंतु किल संजातनिश्चयाः ॥ ३१ ॥
ततस्ते निम्नगां दृष्ट्वा महानीलावभासिनीं । चंडवेगोर्मिसंघातनिर्मितोदारनिश्चितां ॥ ३२ ॥
उन्मज्जत्प्रबलग्राहकृतकल्लोलसंकुलां । वीचीमालासमाघातनिपतन्मृदुरोधसां ॥ ३३ ॥
महींद्रकंदरास्फालप्रांते सूत्कारनादिनीं । उद्वर्तमानमीनांगस्फुरद्भास्कररोचिषां ॥ ३४ ॥
उद्वृत्तनक्रसूत्कारजात दूरगशीकरां । उड्डीयमाननिश्शेषभयपूर्णपतत्रगां ॥ ३५ ॥
संत्रासकंपमानांगा जगू रामं सलक्ष्मणं । समुत्तारय नाथास्मानपि पद्मप्रसादवान् ॥ ३६ ॥
भृत्यानां भक्तिपूर्णानां प्रसादं कुरु लक्ष्मण । देवि ते कुरुते वाक्यं जानकी ब्रूहि लक्ष्मणं ॥३७॥

एवमादिगदंतस्ते कृपणा बहु तां नदीं । ढुढौकिरे प्रसक्तुश्च नानाचेष्टाविधायिनः ॥ ३८ ॥
ततस्तान् राघवोऽवोचाद्विश्रब्धो रोधसि स्थितः । अधुना विनिवर्तध्वं भद्रा भीममिदं वनं ॥३९॥
अस्माभिः सह युष्माकमियानेषैव संगमः । एषा नद्यवधिर्जाता भवतौत्सुक्यवर्जिता ॥ ४० ॥
तातेन भरतः स्वामी सर्वेषां वो निवेदितः । विसाध्वसास्तमावृत्य तिष्ठत क्षितिपालिनः ॥ ४१ ॥
ततस्ते पुनरित्यूचुर्नाथास्माकं भवान् गतिः । प्रसादं कुरु मात्याक्षीरस्मान् कारुण्यकोविद ॥ ४२ ॥
त्रिराश्रयाकुलाभूता त्वयेयं रहिता प्रजा । वद कं शरणं यातु सदृशः कस्तवापरः ॥ ४३ ॥
व्याघ्रसिंहगजेंद्रादिव्यालजालसमाकुले । वसामो भवता सार्धमरण्ये न विना दिवि ॥ ४४ ॥
तनोति वर्तते चित्तं प्रतियामः कथं वयं । महत्तरत्वमेतेन हृषीकेष्वर्जितं ननु ॥ ४५ ॥
किं नो गृहेण किं भोगैः किं दारैः कि बंधुभिः । भवता नररत्नेन मुक्तानां पापकर्मणां ॥ ४६ ॥
क्रीडास्वपि त्वया देव वंचिता स्मो न जातुचित् । सम्मानेनाधुना कस्माज्जातोस्वत्यंतनिष्ठुरः ४७
कोपराधो वदास्माकं भवच्चरणरेणुना । परमां वृद्धिमेतानां भक्तानां भृत्यवत्सल ॥ ४८ ॥
अहो जानकि लक्ष्मीश रचितोयं शिरोंजलिः । प्रसादयितमीशं नः प्रसादी भवतोरयं ॥ ४९ ॥
सीता लक्ष्मीधरश्चैवमुच्यमानौ सुदाक्षिणौ । तस्थतुः पद्मपादाग्रन्यस्तनेत्रौ निरुत्तरौ ॥ ५० ॥

ततः पद्मो जगादेदं भवतामुत्तरं स्फुटं । निवर्तध्वमयं भद्रा यातोऽस्मि सुखमास्यतां ॥ ५१ ॥
इत्युक्त्वा निरपेक्षौ तौ परमोत्साहसंगतौ । अवतेरतुरत्यंतगंभीरां तां महापगां ॥ ५२ ॥
उत्तीर्णः सरितं पद्मो जानकीं विकचेक्षणां । करेण सुखमादाय पद्मिनीमिव दिग्गजः ॥ ५३ ॥
अंभोविहारविज्ञानबुधयोः सा तयोर्धुनी । नाभिदघ्नी बभूवोद्यां क्रीडामाचरतोश्चिरं ॥ ५४ ॥
तदातिशोभते सीता पद्महस्ततलस्थिता । सुधीरा श्रीरिवोत्तुंगशतपत्रगृहास्थिता ॥ ५५ ॥
पारगः सीतया सार्धं लक्ष्मणेन च स क्षणात् । वृक्षैरंतर्धिमायातश्चेतस्तंभनविग्रहः ॥ ५६ ॥
विप्रलापं ततः कृत्वा महांतं साश्रुलोचनाः । भवनाभिमुखीभूताः केचित्कृच्छ्रेण भूभृतः ॥ ५७ ॥
तदाशान्यस्तनेत्रास्तु केचित्पुस्तमया इव । तस्थुः प्राप्यापरे मूर्छां निपेतुर्धरणीतले ॥ ५८ ॥
विबोध्य केचिदत्रोचुर्धिक् संसारमसारकं । धिग्भोगान्भोगिभोगाभान् भंगुरान्भीतिभाविनः॥५९॥
ईदृशामपि शूराणां यत्रावस्थेयमीदृशी । तत्र ग्रहणमस्मासु किमेरंडप्रफल्गुषु ॥ ६० ॥
वियोगमरणव्याधिजराव्यसनभाजनं । जलबुद्बुदनिस्सारं कृतघ्नं धिक् शरीरकं ॥ ६१ ॥
भाग्यवंतो महासत्वास्ते नराः श्लाघ्यचेष्टिताः । कपिभ्रूभंगुरां लक्ष्मीं ये तिरस्कृत्य दीक्षिताः ६२
इति निर्वेदमापन्ना बहवो नरसत्तमाः । प्रव्रज्याभिमुखीभूता बभ्रमुस्तत्र रोधसि ॥ ६३ ॥

अथेक्षांचक्रिरे तुंगं विशालं शुभमालयं । परिवीतमतिश्याममहानोकहमालया ॥ ६४ ॥
अनुसस्रुश्च तं नानापुष्पजातिसमाकुलं । मकरंदरसास्वाद गुंजत्संभ्रांतषट्पदं ॥ ६५ ॥
ददृशुश्च विवेकेषु देशेषु समवस्थितान् । साधून् स्वाध्यायसंसक्तमानसान् पुरुतेजसः ॥ ६६ ॥
क्रमेण तान्नमस्यंतः शनैर्मस्तकपाणयः । विविशुर्जिननाथस्य भवनं भृशमुज्वलं ॥ ६७ ॥
रम्येष्वद्रिनितंबेषु काननेषु सरित्सु च । तत्र काले मही प्रायो भूषितासीज्जिनालयैः ॥ ६८ ॥
तत्र कृत्वा नमस्कारं जिनानां शुभ्रभावनाः । रत्नसंभवगंभीरं संयतेंद्रं ढुढौकिरे ॥ ६९ ॥
प्रणम्य शिरसा तस्य संवेगभरवादिनः । नाथोत्तारय संसारादस्मादिति बभाषिरे ॥ ७० ॥
सत्यकेतुगणीशेन तथास्त्विति कृतध्वनौ । जग्मुस्ते परमं तोषं निर्गताः स्मो भवादिति ॥ ७१ ॥
निदग्धो विजयो मेरुः क्रूरः संग्रामलोलुपः । श्रीनागदमनो धीरः शठः शत्रुदमो धरः ॥ ७२ ॥
विनोदः कंटकः सत्यः कठोरः प्रियवर्धनः । एवमाद्या नृपा धर्मं नैर्ग्रंथ्यं समाशिश्रयन् ॥ ७३ ॥
साधनानि भटास्तेषां गृहीत्वा नगरीं गताः । द्रुतमर्पयितुं दीनाः पुत्रादीनां त्रपाचिताः ॥ ७४ ॥
अणुव्रतानि संगृह्य केचिन्नियमधारिणः । आराधयितुमुद्युक्ता बोधिबुद्धिविभूषणाः ॥ ७५ ॥
सम्यग्दर्शनमात्रेण संतोषमपरे गताः । श्रुत्वातिविमलं धर्मं जिनानां जितजन्मनां ॥ ७६ ॥

सामंतैर्बहुभिर्गत्वा भरताय निवेदितः । वृत्तांतो सुस्थितश्चायं ध्यायन् किमपि दुःखितः ॥७७॥
अथानरण्यराजस्य तनयः सुप्रबोधनः । राज्याभिषिंचनं कृत्वा भरतस्य सुचेतसः ॥ ७८ ॥
किंचित्पद्मवियोगेन संतप्तं चित्तमुद्वहन् । शोकांभोधिनिमग्नेन परिवर्गेण वीक्षितः ॥ ७९ ॥
कृतसांत्वनमप्युच्चैर्विलपत्स समाकुलं । अंतःपुरं परित्यज्य नगरीतो विनिर्गतः ॥ ८० ॥
गुरुपूजां परां कृत्वा द्वासप्ततिनृपान्वितः । सर्वभूतहितस्यांते शिश्रिये श्रमणश्रिया ॥ ८१ ॥
अथाप्येकविहारस्य शुभं ध्यानमभीप्सतः । मानसं पुत्रशोकेन कलुषं तस्य जन्यते ॥ ८२ ॥
अन्यदा योगमाश्रित्य दध्यावेवं विचक्षणः । धिक् स्नेहं भवदुःखानां मूलं बंधमिमं मम ॥८३॥
अन्यजन्मसु ये दारा पितृभ्रातृसुतादयः । क्व गतास्ते ममानादौ संसारे गणनोज्झिताः ॥८४॥
अनेकशोभया प्राप्ता विविधा विषया दिवि । नरकानलदाहाश्च संप्राप्ता भोगहेतवः ॥ ८५ ॥
अन्योन्यभक्षणादीनि तिर्यक्त्वे च चिरं मया । प्राप्तानि दुःखशल्यानि बहुरूपासु योनिषु ॥८६॥
श्रुताः संगीतनिश्वाना वंशवीणा तु गामिनः । भूयश्च परमाक्रंदाश्चित्तदारणकारिणः ॥ ८७ ॥
स्तनेष्वप्सरसां पाणिर्लालितो नेत्रहारिषु । पुनः कुठारघातेन दुर्वृत्तेन पृथक्कृतः ॥ ८८ ॥
आस्वादितं महावीर्यमन्नं सुरभि षड्रसं । त्रपुसीसादिकललं पुनश्च नरकावनौ ॥ ८९ ॥

वीक्षितं परमं रूपं मनोद्रवणकारणं । पुनश्चात्यंतवित्रासकारणं दत्तवेपथुः ॥ ९० ॥
आघ्रातः स चिरामोदो गंधो मुदितषट्पदः । पुनश्च पूतिरत्यंतमुद्वासितमहाजनः ॥ ९१ ॥
आलिंगिता मनश्चोर्यो नार्यो लीलाविभूषणाः । पुनश्च कूटशाल्मल्यः तीक्ष्णकंटकसंकटाः ॥९२॥
किं न स्पृष्टं न किं दृष्टं किं घ्रातं न किं श्रुतं । मुहुरास्वादितं किं न भवे दासेन कर्मणां ॥ ९३ ॥
न सा क्षितिर्न तत्तोयं नासौ वह्निर्न सोऽनिलः । देहतां यो न मे प्राप्तो भवे संक्रामतश्चिरं ॥९४॥
त्रैलोक्ये स न जीवोऽस्ति यो न प्राप्तः सहस्रशः । पित्रादितां मम स्थानं न तद्यत्रोषितोस्मि न ॥
अध्रुवं देहभोगादि शरणं नास्ति विद्यते। संसारोयं चतुःस्थान एकोहं दुःखभुक्तिषु ॥ ९६ ॥
अशुचेः कायतोन्योहं धारमक्षाणि कर्मणां। संवरो वारणं तेषां निर्जरा जायते ततः ॥ ९७ ॥
लोको विचित्ररूपोयं दुर्लभा बोधिसत्तमा । स्वाख्यातोयं जिनैर्धर्मः कृच्छ्रेणाधिगतो मया ॥९८॥
ध्यानेन मुनिदृष्टेन विशुद्धेनैवमादिना । आर्तध्यानमसौ धीरः क्रमेण निरनीनशत् ॥ ९९ ॥
येषूच्छ्रितसितच्छत्रो वरस्तंबेरमाश्रितः । महाजिषु पराजिग्ये शत्रूनत्यंतमुद्धतान् ॥ १०० ॥
विषमानधिकुर्वाणः परीषहगणान्भृशं । शांतस्तेष्वेव देशेषु निर्ग्रंथो विजहार सः ॥ १०१ ॥
नाथे तथा स्थिते तस्मिन् विदेशे च गतेऽगजे । परं सुमित्रया सत्रा शोकं भेजेऽपराजिता १०२

ते दृष्ट्वा दुःखिते बाढमजस्रास्रितलोचने । भरताभिश्रियं मेने भरतो विषदारुणं ॥ १०३ ॥
अथैवं दुःखमापन्ने भृशं ते वीक्ष्य केकया । पश्चादुत्पन्नकारुण्यात्पुत्रमेवमभाषत ॥ १०४ ॥
पुत्र राज्यं त्वया लब्धं प्रणताखिलराजकं । पद्मलक्ष्मणनिर्मुक्तमलमेतन्न शोभते ॥ १०५ ॥
विना ताभ्यां विनीताभ्यां किं राज्यं का सुखासिका । का वा जनपदे शोभा तव का वा सुवृत्तता ॥
राजपुत्र्या समं बालौ क तौ यातां सुखैधितौ । विमुक्तवाहनौ मार्गे पाषाणादिभिराकुले॥१०७॥
मातरौ दुःखिते एते तयोर्गुणसमुद्रयोः । विरहे मापतां मृत्युमजस्रपरिदेवते ॥ १०८ ॥
तस्मादानय तौ क्षिप्रं समं ताभ्यां महासुखः । सुचिरं पालय क्षोणीमेवं सर्वं विराजते ॥ १०९ ॥
व्रज तावत्त्वमारुह्य तुरंगं जातरंहसं । आव्रजाम्यहमप्येषा सुपुत्रानुपदं तव ॥ ११० ॥
इत्युक्तो धृतिमासाद्य साध्वेवमिति सस्वनः । संभ्रांतोऽश्वसहस्रेण भरतस्तत्पथं श्रितः ॥ १११ ॥
कृत्वापुरस्सरान् पद्मपार्श्वान्प्रत्यागतान्नरान् । पवनाश्वसमारूढः स ययौ भृशमुत्सुकः ॥ ११२ ॥
प्राप्तश्च तामरण्यानीमनेकपकुलाकुलां । नानावृक्षावृतादित्यां गिरिगह्वरभीषणां ॥ ११३ ॥
बंधयित्वा महावृक्षैरुडुपानां ससंहतीः । तां धुनीमुत्ततारासौ क्षणेन सहवाहनः ॥ ११४ ॥
इतो दृष्टावितो दृष्टौ पुरुषौ सहयोषिता । इति पृच्छन्नशृण्वंश्च जगामानन्यमानसः ॥ ११५ ॥

अथ तौ परमारण्ये विश्रांतौ सरसस्तरे । ससीतौ भरतोऽपश्यत्पार्श्वन्यस्तशरासनौ ॥ ११६ ॥
प्रभूतदिवसप्राप्तं ताभ्यां सीता व्यपेक्षया । षड्भिर्दिनैस्तमुद्देशं भरतः प्रतिपन्नवान् ॥ ११७ ॥
अवतीर्य तुरंगाच्च मार्गं लोचनगोचरं । गत्वा पद्मां समाश्लिष्य पादौ पद्मस्य मूर्छितः ॥ ११८ ॥
ततो विबोधितस्तेन कृत्वा संभाषणं क्रमात् । मूर्द्धांजलिर्जगादैवं पद्मं विनतविग्रहः ॥ ११९ ॥
विडंबनमिदं कस्मान्नाथ मे भवता कृतं । परं राज्यापदेशेन न्यायसर्वस्व कोविद ॥ १२० ॥
आस्तां तावदिदं राज्यं जीवितेनापि किं मम । भवता विप्रयुक्तस्य गुरुचेष्टितकारिणा ॥ १२१ ॥
उत्तिष्ठ स्वपुरीं यामः प्रसादं कुरु मे प्रभो । राज्यं पालय निश्शेषं यच्छ मेतिसुखासिकां ॥१२२॥
भवामि छत्रधारस्ते शत्रुघ्नश्चमराश्रितः । लक्ष्मणः परमो मंत्री सर्वं सुविहितं ननु ॥ १२३ ॥
पश्चात्तापानलेनालं संतप्ता जननी मम । तव लक्ष्मीधरस्यापि वर्तते शोककारिणी ॥ १२४ ॥
ब्रवीत्येवमसौ यावत्केकया तावदागता । वेगिनं रथमारुह्य सामंतशतमध्यगा ॥ १२५ ॥
दृष्ट्वा परमशोकेन निर्भरीकृतमानसा । हाकारमुखरा चेतावालिंग्य रुदिता चिरं ॥ १२६ ॥
ततोऽस्रसरितश्छेदे विप्रलापेऽतिखेदिता । क्रमात्संभाषणं कृत्वा केकयैवमभाषत ॥ १२७ ॥
पुत्रोत्तिष्ठ पुरीं यामः कुरु राज्यं सहानुजः । ननु त्वया विहीनं मे सकलं विपिनायते ॥ १२८ ॥

भरतः शिक्षणीयोयं तवात्यंतमनीषिणः । स्त्रैणेन नष्टबुद्धेर्मे क्षमस्व दुरनुष्ठितं ॥ १२९ ॥
ततः पद्मो जगादैवं किं न वेत्सि त्वमंबिके । क्षत्रिया ननु कुर्वंति सकृत्कार्यमनन्यथा ॥ १३० ॥
उक्तं तातेन यत्सत्यं तत्कर्तव्यं मया त्वया । भरतेन च दुष्कीर्तिर्माभूदस्य जगत्त्रये ॥ १३१ ॥
पुनश्चोवाच भरतं भ्रातर्मागाद्विचिंततां । शंकसे यद्यनाचारान्नायं मदनुमोदनात् ॥ १३२ ॥
इत्युक्त्वा पुनरप्यस्य पद्मो राज्याभिषेचनं । चकार कानने रम्ये समक्षं सर्वभूभृतां ॥ १३३ ॥
प्रणम्य केकयां शांत्वा संभाष्य च पुनः पुनः । भ्रातरं च परिष्वज्य प्राहिणोत्सोऽतिकृच्छ्रतः १३४
तौ विधाय यथायोग्यमुपचारं ससीतयोः । रामलक्ष्मणयोर्यातौ मातापुत्रौ यथागतं ॥ १३५ ॥
परिध्वस्ताखिलद्वेषं सर्वप्रकृतिसौख्यदं । चकार भरतो राज्यं प्रजासु जनकोपमः ॥ १३६ ॥
राज्ये तथाविधेप्यस्य धृतिर्नाभूदपि क्षणं । दुस्सहं दधमानस्य शोकशल्यं मनस्विनः ॥ १३७ ॥
त्रिकालमरनाथस्य वंदारुर्भोगमंदधीः । ययौ श्रोतुं च सद्धर्मं चैत्यमस्येयती धृतिः ॥ १३८ ॥
तत्राचार्यो द्युतिर्नाम स्वपरागमपारगः । महता साधुसंघेन सततं कृतसेवनः ॥ १३९ ॥
अग्रतोवग्रहं तस्य चकार भरतः सुधीः । पद्मदर्शनमात्रेण करिष्ये मुनितामिति ॥ १४० ॥
कृतावग्रहमेवं तमुवाच भगवान् द्युतिः । कुर्वन् मयूरवृंदानां नर्तनं धीरया गिरा ॥ १४१ ॥

भव्य भो यावदायाति पद्मः पद्मनिरीक्षणः । तावद्गृहस्थधर्मेण भवाप्तपरिकर्मकः ॥ १४२ ॥
अत्यंतदुस्सहा चेष्टा निर्ग्रंथानां महात्मनां । परिकर्मविशुद्धस्य जायते सुखसाधना ॥ १४३ ॥
उपरिष्टात्करिष्यामि काले तप इति ब्रुवन् । अनेको मृत्युमायाति नरोतिजडमानसः ॥ १४४ ॥
अनर्घ्यरत्नसदृशं तपो दिग्वाससामिति । एवमप्यक्षमं वक्तुं परस्तस्योपमा कुतः ॥ १४५ ॥
कनीयांस्तस्य धर्मोयमुक्तोयं गृहिणां जिनैः । अप्रमादी भवेत्तस्मिन्निरतो बोधिदायिनि ॥ १४६ ॥
यथा रत्नाकरद्वीपं मानवः कश्चिदागतः । रत्नं यत्किंचिदादत्ते यात्यस्य तदनर्घतां ॥ १४७ ॥
तथास्मिन्नियमद्वीपे शासने धर्मचक्रिणां । य एव नियमः कश्चिद्ग्रहीतो यात्यनर्घतां ॥ १४८ ॥
अहिंसारत्नमादाय विपुलं यो जिनाधिपं । भक्त्यार्चयत्यसौ नाके परमां वृद्धिमश्नुते ॥ १४९ ॥
सत्यव्रतधरः स्रग्भिर्यः करोति जिनार्चनं । भवत्यादेयवाक्योऽसौ सत्कीर्तिव्याप्तविष्टपः ॥१५०॥
अदत्तादाननिर्मुक्तो जिनेंद्रान्यो नमस्यति । जायते रत्नपूर्णानां नदीनां स विभुर्नरः ॥ १५१ ॥
यो रत्यं परनारीषु न करोति जिनाश्रितः । सोथ गच्छति सौभाग्यं सर्वनेत्रमलिम्लुचः १५२
जिनानर्चति यो भक्त्या कृतावधिपरिग्रहः । लभतेऽसावतिस्फीतान् लाभान् लोकस्य पूजितः १५३
आहारदानपुण्येन जायते भोगनिर्भरः । विदेशमपि यातस्य सुखिता तस्य सर्वदा ॥ १५४ ॥

अभीतिदानपुण्येन जायते भयवर्जितः । महासंकटयातोऽपि निरुपद्रवविग्रहः ॥ १५५ ॥
जायते ज्ञानदानेन विशालसुखभाजनं । कलार्णवामृतं चासौ गंडूषं कुरुते नरः ॥ १५६ ॥
यः करोति विभावर्यामाहारपरिवर्जनं । सर्वारंभप्रवृत्तोऽपि यात्यसौ सुखदां गतिं ॥ १५७ ॥
वंदनं यो जिनेंद्राणां त्रिकालं कुरुते नरः । तस्य भावविशुद्धस्य सर्वं नश्यति दुष्कृतं ॥ १५८ ॥
सामोदैर्भूजलोद्भूतैः पुष्पैर्यो जिनमर्चति । विमानं पुष्पकं प्राप्य स क्रीडति यथेप्सितं ॥ १५९ ॥
भावपुष्पैर्जिनं यस्तु पूजयतीति निर्मलैः । लोकस्य पूजनीयोसौ जायतेऽत्यंतसुंदरः ॥ १६० ॥
धूपं यश्चंदनाशुभ्रागुर्वादिप्रभवं सुधीः । जिनानां ढौकयत्येष जायते सुरभिः सुरः ॥ १६१ ॥
यो जिनेंद्रालये दीपं ददाति शुभभावतः । स्वयंप्रभशरीरोसौ जायते सुरसद्मनि ॥ १६२ ॥
छत्रचामरलंबूषपताकादर्पणादिभिः । भूषयित्वा जिनस्थानं याति विस्मायिनीं श्रियं ॥ १६३ ॥
समालभ्य जिनान् गंधैः सौरभ्यव्याप्तदिङ्मुखैः । सुरभिः प्रमदानंदो जायते दयितः पुमान् १६४
अभिषेकं जिनेन्द्राणां कृत्वा सुरभिवारिणा । अभिषेकमवाप्नोति यत्र यत्रोपजायते ॥ १६५ ॥
अभिषेकं जिनेंद्राणां विधाय क्षीरधारया । विमाने क्षीरधवले जायते परमद्युतिः ॥ १६६ ॥
दधिकुंभैर्जिनेंद्राणां यः करोत्यभिषेचनं । दध्याभकुट्टिमे स्वर्गे जायते स सुरोत्तमः ॥ १६७ ॥

सार्पिषा जिननाथानाम् कुरुते योऽभिषेचनं । कांतिद्युतिप्रभावाढ्यो विमानेशः स जायते १६८

अभिषेकप्रभावेण श्रूयंते बहवो बुधाः । पुराणेंनंतवीर्याद्या द्युभूलब्धाभिषेचनाः ॥ १६९ ॥

भक्त्या वल्युपहारं यः कुरुते जिनसद्मनि । संप्राप्नोति परां भूतिमारोग्यं स सुमानसः ॥ १७० ॥

गीतनर्तनवादित्रैर्यः करोति महोत्सवं । जिनसद्मन्यसौ स्वर्गे लभते परमोत्सवं ॥ १७१ ॥

भवनं यस्तु जैनेंद्रं निर्मापयति मानवः । तस्य भोगोत्सवः शक्यः केन वक्तुं सुचेतसः ॥१७२॥

प्रतिमां यो जिनेंद्राणां कारयत्यचिरादसौ । सुरासुरोत्तमसुखं प्राप्य याति परं पदं ॥ १७३ ॥

व्रतज्ञानतपोदानैर्यान्युपात्तानि देहिनः । सर्वैस्त्रिष्वपि कालेषु पुण्यानि भुवनत्रये ॥ १७४ ॥

एकस्मादपि जैनेंद्रबिंबाद्भावेन कारितात् । यत्पुण्यं जायते तस्य न सम्मात्यतिमात्रतः ॥१७५॥

फलं यदेतदुद्दिष्टं स्वर्गे संप्राप्य जंतवः । चक्रवर्त्यादितां लब्ध्वा तन्मर्त्योऽपि भुंजते ॥ १७६ ॥

धर्ममेवं विधानेन यः कश्चित्प्राप्य मानवः । संसारार्णवमुत्तीर्य त्रिलोकाग्रेऽवतिष्ठते ॥ १७७ ॥

फलं ध्यानाच्चतुर्थस्य षष्ठस्योद्यानमात्रतः । अष्टमस्य तदारंभे गमने दशमस्य तु ॥ १७८ ॥

द्वादशस्य ततः किंचिन्मध्ये पक्षोपवासजं । फलं मासोपवासस्य लभते चैत्यदर्शनात् ॥ १७९ ॥

चैत्यांगणं समासाद्य याति षाण्मासिकं फलं । फलं वर्षोपवासस्य प्रविश्य द्वारमश्नुते ॥ १८० ॥

फलं प्रदक्षिणीकृत्य भुंक्ते वर्षशतस्य तु । दृष्ट्वा जिनास्यमाप्नोति फलं वर्षसहस्रजं ॥ १८१ ॥
अनंतफलमाप्नोति स्तुतिं कुर्वन् स्वभावतः । नहि भक्तेर्जिनेंद्राणां विद्यते परमुत्तमं ॥ १८२ ॥
कर्म भक्त्या जिनेंद्राणां क्षयं भरत गच्छति । क्षीणकर्मा पदं याति यस्मिन्ननुपमं सुखं ॥ १८३ ॥
इत्युक्तेत्यंतसद्भक्तिः प्रणम्य चरणौ गुरोः । जग्राह भरतो धर्मं सागारं सुविधानतः ॥ १८४ ॥
बहुश्रुतोऽतिधर्मज्ञो विनीतः श्रद्धयान्वितः । विशेषतो ददौ दानं स साधुषु यथोचितं ॥१८५॥
सम्यग्दर्शनरत्नं स हृदयेन सदा वहन् । चकार विपुलं राज्यं साधुचेष्टापरायणः ॥ १८६ ॥
प्रतापश्चानुरागश्च समस्तां तस्य मेदिनीं । बभ्राम प्रतिघातेन रहितां गुणवारिधेः ॥ १८७ ॥
अध्यर्द्धं तस्य पत्नीनां शतं देवीसमत्विषां । न तत्र सक्तिमायाति शतपत्रं यथांभसि ॥ १८८ ॥

चिंतास्य नित्यं मगधाधिपासीत् । कदा नु लप्स्ये निरगारदीक्षां ॥
तपः करिष्यामि कदा नु घोरं । संगैर्विमुक्तो विहरन् पृथिव्यां ॥ १८९ ॥
धन्या मनुष्या धरणीतले ते । ये सर्वसंगान् परिवर्ज्य धीराः ॥
दग्ध्वाखिलं कर्म तपोबलेन । प्राप्ताः पदं निर्वृतिसौख्यसारं ॥ १९० ॥
तिष्ठामि पापो भवदुःखमग्नः । पश्यन्नपीदं क्षणिकं समस्तं ॥

पूर्वाह्नदृष्टोऽत्र जनोऽपराह्ने । न दृश्यते कश्चिदहोस्मि मूढः ॥ १९१ ॥
व्यालाज्जलाद्वा विषतोऽनलाद्वा । वज्राद्विमुक्तादहितेन शस्त्रात् ॥
शूलाद्वराद्वा मरणं जनोयं । प्राप्नोति दीनो ननु बंधुमध्ये ॥ १९२ ॥
बहुप्रकारैर्मरणैर्जनोयं । प्रतर्क्यते दुःखसहस्रभागी ॥
क्षीरार्णवस्येव तटे प्रसुप्तो । मत्तोतिवेगप्रसृतोर्मिजालैः ॥ १९३ ॥
विधाय राज्यं घनपापदिग्धो । हा कं प्रपत्स्ये नरकं कुघोरं ॥
शरासिचक्रांगनगांधकारं । किंवा नु तिर्यक्त्वमनेकयोनिं ॥ १९४ ॥
लब्ध्वापि जैनं समयं यदेत—न्मदान्मदीयं दुरितानुबद्धं ॥
करोति नो निस्पृहतामुपेत्य । विमुक्तिदक्षं निरगारधर्मं ॥ १९५ ॥
एवं च चिंतां सततं प्रपन्नो । दुष्कर्मविध्वंसनहेतुभूतां ॥
पुराणनिर्ग्रंथकथाप्रसक्तो । ददर्श राजा न रविं न चंद्रं ॥ १९६ ॥

इत्यार्षे रविषेणाचार्यप्रोक्ते पद्म—चरिते दशरथरामभरतानां प्रव्रज्यावनराज्यप्रस्थानाभिधानं नामद्वात्रिंशत्तमं पर्व ।

# अथ त्रयस्त्रिंशत्तमं पर्व ।

ततो जनोपभोग्यानां प्रदेशानां समीपतः । रमणीयान् परिप्राप पद्मस्तापससंश्रयान् ॥ १ ॥
तापसा जटिलास्तत्र नानावल्कलधारिणः । सुस्वादुफलसंपूर्णाः पादपा इव भूरयः ॥ २ ॥
विशालपत्रसंछन्ना मठकाः सवितर्द्दिकाः । पलाशोदुंबरैधानां पूलिकाभिर्युताः क्वचित् ॥ ३ ॥
अकृष्टपच्यमानेन शुष्यता पूरितांगणाः । वर्तयद्भिः सुविश्रब्धैः रोमंथं राजिता मृगैः ॥ ४ ॥
सजटैर्वटुभिर्युक्ता रटद्भिः सततं पटु । ललतोच्छ्रितपुच्छेण तार्णकेन कृताजिराः ॥ ५ ॥
पठद्भिर्विशदं युक्ताः शारिकाशुककौशिकैः । वीरुधां पुष्परम्याणां छायासु समवस्थितैः ॥ ६ ॥
कन्याभिर्घटकैः स्वादु वारिणा भ्रातृतेक्षितैः । पूर्णालबालकैर्वालस्तरुभिः कृतराजनः ॥ ७ ॥
फलैर्बहुविधैः पुष्पैर्वासितैः स्वादुवारिभिः । सादरैः स्वागतस्वानैः सार्घदानैस्तथाशनैः ॥ ८ ॥
संभाषणैः कुटीदानैः शयनैर्मृदुपल्लवैः । तापसैरुपचारैस्ते पूजिता श्रमहारिभिः ॥ ९ ॥
आतिथेयाः स्वभावेन तेहि सर्वत्र तापसाः । रूपेष्वेवं प्रकारेषु विशेषेण सुवृत्तयः ॥ १० ॥
उषित्वा गच्छतां तेषां ययुर्मार्गेण तापसाः । पाषाणानपि तद्रूपं द्रवीकुर्यात्किमन्यकैः ॥ ११ ॥

शुष्कपत्राशिनस्तत्र तापसा वायुपायिनः । सीतारूपहृतस्वांता धृतिं दूरेण तत्यजुः ॥ १२ ॥
तानूचुस्तापसा वृद्धाःसांत्ववाचा पुन पुनः । तिष्ठतं यदि नास्माकमाश्रमे शृणुतं ततः ॥ १३ ॥
सर्वातिथ्यसमेतास्वप्यटवीषु विचक्षिणौ । विश्रंभं जातु मागातां नारीश्विव नदीष्विव ॥ १४ ॥
तापसप्रमदा दृष्ट्वा पद्मं पद्मानिरीक्षणं । लक्ष्मणं च जहुः सर्वं कर्तव्यं शून्यविग्रहाः ॥ १५ ॥
काश्चिदुत्कंठया युक्तास्तन्मार्गाहितलोचनाः । व्रजंत्यन्यापदेशेन सुदूरं विह्वलात्मिकाः ॥ १६ ॥
मधुरं ब्रुवते काश्चिद्भवंतोऽस्माकमाश्रमे । किं न तिष्ठंतु सर्वं नः करिष्यामो यथोचितं ॥ १७ ॥
अतीत्य त्रीनितः कोशानरण्यानी जनोज्झिता । महानोकहसंछन्ना हरिशार्दूलसंकुला ॥ १८ ॥
समित्फलप्रसूनार्थं तापसा अपि तां भुवं । न व्रजंति महाभीमां दर्भसूचीभिराचितां ॥ १९ ॥
चित्रकूटः सुदुर्लंघ्यः प्रविशालो महीधरः । भवद्भिः किं न विज्ञातः प्रकोपं येन गच्छतः ॥२०॥
तापस्योवश्यमस्माभिर्गंतव्यमिति चोदिताः । कृच्छ्रेण ता न्यवर्तंत कुर्वाणास्तत्कथां चिरं ॥२१॥
ततस्ते भूमहींद्राग्रग्रावव्रातसुकर्कशं । महातरुसमारूढवल्लीजालसमाकुलं ॥ २२ ॥
क्षुदतिक्रुद्धशार्दूलनखाविकृतपादपं । सिंहाहतद्विपोद्गीर्णरक्तमौक्तिकपिच्छलं ॥ २३ ॥
उन्मत्तवारणस्कंधतटस्कंधमहातरुं । केसरिध्वनिवित्रस्तसमुत्कीर्णकुरंगकं ॥ २४ ॥

सुप्ताजगरनिश्वासवायुपूरितगह्वरं । वराहयूथपोताग्रविषमीकृतपल्वलं ॥ २५ ॥
महामहिषशृंगाग्रमग्नवल्मीकसानुकं । ऊर्ध्वीकृतमहाभोग संचरद्भोगिभीषणं ॥ २६ ॥
तरक्षक्षतसारंगरुधिरभ्रांतमक्षिकं । कंटकासक्तपुच्छाग्रप्रताम्यच्चमरीगणं ॥ २७ ॥
दर्पसंपूरितश्वाविन्मुक्तशूचीविचित्रितं । विषपुष्परजोघ्राणघूर्णितानेकजंतुकं ॥ २८ ॥
खड्गिखड्गसमुल्लीढतरुस्कंधच्युतद्रवं । उद्भ्रांतगवयव्रातभग्नपल्लवजालकं ॥ २९ ॥
नानापक्षिकुलं क्रूरकूजितं प्रतिनादितं । शाखामृगकुलाक्रांतचलत्प्राग्भारपादपं ॥ ३० ॥
तीव्रवेगागिरिस्रोतः शतनिर्धारितक्षमं । वृक्षाग्रविस्फुरत्स्फीतदिवाकरकरोत्करं ॥ ३१ ॥
नानापुष्पफलाकीर्णं विचित्रामोदवासितं । विविधौषधिसंपूर्णं वनसस्यसमाकुलं ॥ ३२ ॥
क्वचिन्नीलं क्वचित्पीतं क्वचिद्रक्तं हरित्क्वचित् । पिंजरच्छायमन्यत्र विविशुर्विपिनं महत् ॥ ३३ ॥
तत्र ते चित्रकूटस्य निर्झरेष्वतिचारुषु । क्रीडंतो दर्शयंतश्च सद्वस्तूनि परस्परं॥कुलकं(द्वादशभिः)
फलानि स्वादुहारीणि स्वादमानाः पदे पदे । गायंतो मधुरं हारि किन्नरीणां त्रपाकरं ॥ ३५ ॥
पुष्पैर्जलस्थलोद्भूतैर्भूषयंतःपरस्परं । सुगंधिभिर्द्रवैरंगं लिंपंतस्तरुसंभवैः ॥ ३६ ॥
उद्यानमिव निर्याता विकसत्कांतिलोचनाः । स्वच्छंदकृतसंस्काराः सत्त्वलोचनतस्कराः ॥३७॥

लतागृहेषु विश्राता मुहुर्नयनहारिषु । कृतनानाकथासंगा किंचिन्नर्मविधायिनः ॥ ३८ ॥
व्रजंतो लीलया युक्ता निसर्गादतिरम्यया । पर्यटंतो वनं चारु त्रिदशा इव नंदनं ॥ ३९ ॥
पक्षोनैः पंचभिर्मासैस्तमुद्देशमतीत्य ते । जनैः समाकुलं प्रापुर्देशमत्यंतसुंदरं ॥ ४० ॥
गोघंटारवसंपूर्णं नानासस्योपशोभितं । अवंतीविषयं स्फीतं ग्रामपत्तनसंकुलं ॥ ४१ ॥
मार्गं तत्र कियंतं चिदतिक्रम्य जनोज्झितं । विषयैकांतमापुस्ते पृथुं स्वाकारधारिणः ॥ ४२ ॥
छायां न्यग्रोधजां श्रित्वा विश्रातास्ते परस्परं । जगुः कस्मादयं देशो दृश्यते जनवर्जितः ॥४३॥
सस्यानि कृष्टपच्यानि दृश्यंतेत्रातिभूरिशः । उद्यानपादपाश्चैते फलैः पुष्पैश्च शोभिताः ॥ ४४ ॥
पुंड्रेक्षुवाटसंपन्ना ग्रामास्तुंगावनिस्थिताः । सरांस्यच्छिन्नपद्मानि युक्तानि विविधैः खगैः ॥४५॥
अध्वायं घटकैर्भग्नैः शकटैश्च विशंकटः । करंडैः कुंडकैर्दंडैः कुंडिकाभिः कटाशनैः ॥ ४६ ॥
विकीर्णास्तंडुला माषा मुद्गाः सूर्पादयस्तथा । वृद्धोक्षोयं मृतो जीर्णगोण्यस्योपरि तिष्ठति ॥४७॥
देशोयमतिविस्तीर्णः शोभते न जनोज्झितः । अत्यंतविषयासंगो यथा दीक्षासमाश्रितः ॥४८॥
ततोऽत्यंतमृदुस्पर्शे निषण्णं रत्नकंवले । देशोद्वासकृतालापं रामं पार्श्वस्थकार्मुकं ॥ ४९ ॥
पद्मगर्भदलाभाभ्यां पाणिभ्यां पूजितोहिता । द्राग्विश्रमायितुं सक्ता सीता प्रेमांबुदीर्घिका ॥५०॥

उत्सार्य चारुलग्नां तां सादरक्रमकोविदः । संवाहयितुमासक्तो लक्ष्मणो ज्यायसोदितः ॥ ५१ ॥
निरूपय क्वचित्तावद्ग्रामं नगरमेव वा । घोषं वा लक्ष्मणः क्षिप्रं श्रांतेयं हि प्रजावती ॥ ५२ ॥
ततोऽन्यस्यातितुंगस्य वृक्षास्योर्द्धसमाश्रितः । दृश्यते किंचिदत्रेति पद्मेनोच्येत लक्ष्मणः ॥५३॥
सोवोचद्देव पश्यामि रूपपर्वतसन्निभान् । शारदाभ्रसमुत्तुंगैः श्रृंगजालैर्विराजितान् ॥ ५४ ॥
प्राग्भारसिंहकर्णस्थाजिनाबिंबोपलक्षितान् । प्रासादान् परमोद्यानान् प्रचल-द्धव (चप) लध्वजान् ५५
ग्रामांश्चायतवापीभिः सस्यैश्च कृतवेष्टनान् । नगराणि च गंधर्वपुरैर्विभ्रांति तुल्यतां ॥ ५६ ॥
दृष्टिगोचरमात्रे तु सन्निवेशाः सुभूरयः । दृश्यंते न पुनः कश्चिदेकोप्यालोक्यते जनः ॥ ५७ ॥
समं किं परिवर्गेण विनष्टाः स्युरिह प्रजाः । उपानीताः किमु म्लेच्छैर्वंदित्वं क्रूरकर्मभिः ॥५८॥
एकस्तु पुरुषाकारो दृश्यते चाति दूरतः । स्थाणुर्न पुरुषोयं तु ननु चैष चलाकृतिः ॥ ५९ ॥
यात्येष किमुतायाति पश्याम्यागच्छती त्ययं । तावदायातु मार्गेण जानाम्येनं विशेषतः ॥६०॥
अयं मृग इवोद्विग्नो द्रुतमायाति मानवः । रूक्षोर्द्धमूर्धजो दीनो मलोपहतविग्रहः ॥ ६१ ॥
कूर्चाच्छादितवक्षस्को वसानाश्चीरखंडकं । स्फुटितांघ्रिः स्रवत्स्वेदो दर्शयन् पूर्वदुष्कृतं ॥ ६२ ॥
आनयेममितः क्षिप्रमिति पद्मेन भाषितः । अवतीर्य गतस्तस्य सविस्मय इवांतिकं ॥ ६३ ॥

दृष्ट्वा तं पुरुषो हृष्टरोमा विस्मयपूरितः । विलंबितगतिः किंचिदकरोदिति मानसे ॥ ६४ ॥
समाकंपित वृक्षोयमवतीर्य समागतः । किमिंद्रो वरुणो दैत्यः किं नागः किन्नरो नरः ॥ ६५ ॥
वैवस्वतः शशांको नु वह्निर्वैश्रवणो नु किं । भास्करो नु भवं प्राप्तः कोयमुत्तमविग्रहः ॥ ६६ ॥
इति ध्यायन् महाभीत्या मुकुलीकृत्य लोचने । निश्चेष्टावयवो भूमौ पपाताव्यक्तचेतनः ॥ ६७ ॥
उत्तिष्ठोत्तिष्ठ भद्र त्वं माभैषीरिति भाषितः । प्रत्यागतधृतिर्नीतो लक्ष्मणेनांतिकं गुरोः ॥ ६८ ॥
ततः सौम्याननं राममभिरामं समंततः । दृष्ट्वा कांतिसमुद्रस्थं चक्षुरुत्सवकारिणं ॥ ६९ ॥
सीतया शोभितं पार्श्वे वर्तिन्यातिविनीतया । मुमोच पुरुषः सद्यः क्षुधादिजपरिश्रमं ॥ ७० ॥
ननाम चांजलिं कृत्वा शिरसा स्पृष्टभूतलः । छायायां भव विश्वस्त इति चोक्त उपाविशत् ॥७१॥
अपृच्छत्तं ततः पद्मः क्षरन्निव गिरामृतं । आगतोऽसि कुतो भद्र कोवा किंसंज्ञकोऽपि वा ॥७२॥
सोवोचद्दूरतः स्थानाच्छीरगुप्तिः कुटुंबिकः । देशोयं विजनः कस्मादिति पृष्टोऽवदत्पुनः ॥७३॥
सिंहोदर इति ख्यातो देवोस्त्युज्जयिनीपतिः । प्रतापप्रणतोदारसामंतः सुरसन्निभः ॥ ७४ ॥
दशांगपुरनाथोस्य वज्रकर्णश्रुतिर्महान् । अत्यंतदयितो भृत्यः कृतानेकाद्भुतक्रियः ॥ ७५ ॥
मुक्त्वा त्रिभुवनाधीशं भगवंतं जिनाधिपं । निर्ग्रंथांश्च नमस्कारं न करोत्यपरस्य सः ॥ ७६ ॥

साधुप्रसादतस्तस्य सम्यग्दर्शनमुत्तमं । पृथिव्यां ख्यातिमायातं देवेन किमु न श्रुतं ॥ ७७ ॥
प्रसादः साधुना तस्य कृतः कथमितीरितः । लक्ष्मीधरकुमारेण पद्माभिप्रायसूरिणा ॥ ७८ ॥
उवाच पथिको देव समासात्कथयाम्यहं । प्रसादः साधुना तस्य यथायमुपपादितः ॥ ७९ ॥
अन्यदा वज्रकर्णोयं दशारण्यसमाश्रितां । प्राविशत् सत्वसंपूर्णामटवीं मृगयोद्यतः ॥ ८० ॥
जन्मनः प्रभृति क्रूरः ख्यातोयं विष्टपेऽखिले । हृषीकवशगो मूढः सदाचारपरांमुखः ॥ ८१ ॥
लोभसंज्ञासमासक्तः सूक्ष्मतत्त्वांधचेतसः । भोगोद्भवमहागर्भपिशाचग्रहदूषितः ॥ ८२ ॥
तेन च भ्रमता तत्र कर्णिकारवनांतरे । दृष्टः शिलातले साधुर्दधानः शममुत्तमं ॥ ८३ ॥
परित्यक्तावृतिर्ग्रीष्मे समाप्तनियमास्थितिः । विहंग इव निश्शंकः केसरीव भयोज्झितः ॥ ८४ ॥
स ग्रावभिः करैर्भानोरातितप्तः समंततः । अभ्याख्यातशतैस्तीव्रैर्दुर्जनस्येव सज्जनः ॥ ८५ ॥
अश्वारूढः स तं दृष्ट्वा कृतांतसमदर्शनः । रत्नप्रभवगंभीरं परमार्थनिवेशनं ॥ ८६ ॥
पापघातकरं सर्वभूतकारुण्यसंगतं । कुंतपाणिरुवाचैवं भूषितं श्रमणश्रिया ॥ ८७ ॥
अत्र किं क्रियते साधो सोवोचद्धितमात्मनः । अनाचरितपूर्वं यज्जन्मांतरशतेष्वपि ॥ ८८ ॥
जगाद विहसन् भूभृदनया खल्ववस्थया । न किंचिदपि ते सौख्यं कीदृशं हितमात्मनः ॥८९॥

मुक्तलावण्यरूपस्य कामार्थरहितस्य च । अचेलस्यासहायस्य कीदृशं हितमात्मनः ॥ ९० ॥
स्नानालंकाररहितैः परपिंडोपजीविभिः । भवादृशैर्नरैः कीदृक् क्रियते हितमात्मनः ॥ ९१ ॥
दृष्ट्वा तं कामभोगार्तं दयावान् संयतोवदत् । हितं पृच्छसि किं त्वं मां छिन्नाशापाशबंधनं ॥९२॥
इंद्रियैर्वंचितान् पृच्छ हितोपायबहिष्कृतान् । मोदेनात्यंतवृद्धेन भ्राम्यंते ये भवांबुधौ ॥ ९३ ॥
हंता सत्वसहस्राणामात्मानर्थपरायणः । यास्येष नरकं घोरमवश्यं नष्टचेतनः ॥ ९४ ॥
नूनं त्वया न विज्ञाता घोरा नरकभूमयः । उत्थायोत्थाय पाशेषु यत्परां कुरुषे रतिं ॥ ९५ ॥
पृथिव्यः संति सप्ताधो नरकाणां सुदारुणाः । सुदुर्गंधा सुदुष्प्रेक्षाः सुदुष्पर्शा सुदुस्तराः ॥ ९६ ॥
तीक्ष्णायस्कीलसंकीर्णा नानायंत्रसमाकुलाः । क्षुरधाराद्रिसंयुक्तास्तप्तलोहतलाधिकाः ॥ ९७ ॥
रौरवाद्यवटकाक्रांता महाध्वांता महाभयाः । असिपत्रवनच्छन्ना महाक्षारनदीयुताः ॥ ९८ ॥
पापकर्मपरिक्लिष्टैर्गजैरिव निरंकुशैः । तत्र दुःखसहस्राणि प्राप्यंते पुरुषाधमैः ॥ ९९ ॥
भवंतमेव पृच्छामि त्वादृशैर्विषयातुरैः । क्रियते पापसंसक्तैः कीदृशं हितमात्मनः ॥ १०० ॥
इंद्रियप्रभवं सौख्यं किंपाकसदृशं कथं । अहन्यहन्युपादाय मन्यसे हितमात्मनः ॥ १०१ ॥
हितं करोत्यसौ स्वस्य भूतानां यो दयापरः । दीक्षितो गृहजातो वा बुधो निर्मलमानसः १०२

कृतं तैरात्मनः श्रेयो ये महाव्रततत्पराः । अथवाणुव्रतैर्युक्ताः शेषा दुःखस्य भाजनं ॥ १०३ ॥
परलोकादि हेतुं त्वं कृत्वा सुकृतमुत्तमं । इहलोकेधुना पापं कृत्वा यास्यसि दुर्गतिं ॥ १०४ ॥
अमी निरागसः क्षुद्रा वराकाःक्षितिशायिनः । अनाथा लोलनयना नित्योद्विग्ना वने मृगाः १०५
आरण्यतृणपानीयकृतविग्रहधारिणः । अनेकदुःखसंछन्ना पूर्वदुष्कृतभोगिनः ॥ १०६ ॥
रात्रावपि न विंदंति निंद्रां चकितचेतसः । साध्वाचारैर्न युक्तं ते कुलजैर्हिंसितुं नरैः ॥ १०७ ॥
अतो ब्रवीमि राजंस्त्वां यदीच्छस्यात्मनो हितं । त्रिधा हिंसां परित्यज्य कुर्वहिंसां प्रयत्नतः ॥
ऊर्ध्वैरित्युपदेशोच्चैर्यदासौ प्रतिबोधितः । तदा प्रणतिसायातः फलैरिव महीरुहः ॥ १०९ ॥
उत्तीर्य प्रसृतः सप्तेर्जानुपीड़ितभूतलः । प्रणनामोत्तमांगेन सुसाधुं रचितांजलिः ॥ ११० ॥
निरीक्ष्य सौम्यया दृष्ट्या तमेवं चाभ्यनंदयत् । श्लाघ्योयं वीक्षितः सिद्धो मुनिस्त्यक्तपरिग्रहः ॥
शकुंतयो मृगाश्चामी धन्या वननिवासिनः । शिलातलनिषण्णं ये पश्यंतीमं समाहितं ॥ ११२ ॥
अतिधन्योहमप्यद्य मुक्तपापेन कर्मणा । यदेतत्त्रिजगद्वंद्यं प्राप्तः साधुसमागमं ॥ ११३ ॥
बंधुस्नेहमयं बंधं छित्वा ज्ञाननखैरयं । केसरीव विनिष्क्रांतः प्रभुः संसारपंजरात् ॥ ११४ ॥
अनेन साधुना पश्य वशीकृत्य मनोरिपुं । नाग्न्योपकारयोगेन शीलस्थानं प्रपाल्यते ॥ ११५ ॥

अहं पुनरतृप्तात्मा तावदस्मिन् गृहाश्रमे । अणुव्रतविधौ रम्ये करोमि परमां धृतिं ॥ ११६ ॥
इति संचिंत्य जग्राह तस्मात्साधोर्गृहस्थितिं । चकारावग्रहं चैवं भावप्लावितमानसः ॥ ११७ ॥
देवदेवं जिनं मुक्त्वा परमात्मानमच्युतं । निर्ग्रंथांश्च महाभागान्न नमाम्यपरानिति ॥ ११८ ॥
प्रीतिवर्धनसंज्ञस्य मुनेस्तस्य महादरः । चकार महतीं पूजामुपवासं समाहितः ॥ ११९ ॥
उपासीनस्य चाख्यातं परमं साधुना हितं । यत्समाराध्य मुच्यंते संसाराद्भव्यदेहिनः ॥१२०॥
सागारं निरगारं च द्विधा चारित्रमुत्तमं । सावलंबं गृहस्थानां निरपेक्षं खवाससां ॥ १२१ ॥
दर्शनस्य विशुद्धिश्च तपोज्ञानसमन्विता । प्रथमाद्यनुयोगाश्च प्रसिद्धा जिनशासने ॥ १२२ ॥
सुदुष्करं विगेहानां चारित्रमवधार्य सः । पुनः पुनर्मतिं चक्रेऽणुव्रतेष्वेव पार्थिवः ॥ १२३ ॥
निधानमधनेनैव प्राप्तं बिभ्रदनुत्तमं । धर्म्यध्यानमसौ बुद्ध्वा परमां धृतिमागतः ॥ १२४ ॥
नितांतक्रूरकर्मायमुपशांतो महीपतिः । इति प्रमोदमायातः संयतोऽपि विशेषतः ॥ १२५ ॥
गते साधौ तपोयोग्यं स्थानं सुकृतसत्रिणि । विभूत्या परया युक्तः सुलाभः सुखतर्पितः १२६
विहितातिथिसन्मानोऽपरेद्युः कृतपारणः । प्रणम्य चरणौ साधोः स्वस्थानमविशन्नृपः ॥१२७॥
वहन् परमभावेन वज्रकर्णः सदा गुरुं । बभूव वीतसंदेहश्चिंतामेवमुपागतः ॥ १२८ ॥

भृत्यो भूत्वा विपुण्योहं सिंहोदरमहीभृतः । अकृत्वा विनयं भोगान् कथं सेवे निकारिणः १२९
इति चिंतयतस्तस्य प्रसन्नेनांतरात्मना । विधिना प्रेर्यमाणस्य मतिरेवं समुद्गता ॥ १३० ॥
कारयाम्यूर्मिकां स्वार्णीं सुव्रतस्वामिबिंबिनीं । दधामि दक्षिणांगुष्ठे तां नमस्कारभागिनीं १३१
घटिता सा ततस्तेन पाणिभासुरपीठिका । पिनद्धा चातिहृष्टेन नयप्रवणचेतसा ॥ १३२ ॥
स्थित्वा सिंहोदरस्याग्रे कृत्वांगुष्ठं पुरः कृती । प्रतिमां तां महाभागो नमस्यति स संततं १३३
रंध्रविन्यस्तचित्तेन वैरिणा कथितेन्यदा । वृत्तांतेत्र परं कोपं पापः सिंहोदरोऽगमत् ॥ १३४ ॥
माययाह्वयच्चैनं दशांगनगरस्थितं । वधार्थमुद्यतो मानी मत्तो विक्रमसंपदा ॥ १३५ ॥
बृहद्गतितनूजस्तु प्रगुणेनैव चेतसा । प्रवृत्तोश्वशतेनास्य विनीतो गंतुमंतिकं ॥ १३६ ॥
दंडपाणिरुवाचैकः पीवरोदारविग्रहः । कुंकुमस्थासकोद्भासी तमागत्यैवमुक्तवान् ॥ १३७ ॥
यदि भोगशरीराभ्यां सुनिर्विण्णोसि पार्थिव । तत उज्जयिनीं गच्छ नोचेन्नो गंतुमर्हसि ॥१३८॥
क्रुद्धः सिंहोदरो यत्ते वधं कर्तुं समुद्यतः । अनमस्कारदोषेण कुरु राजन्नभीप्सितं ॥ १३९ ॥
एवं स गदितो दध्यौ केनाप्येष दुरात्मना । मात्सर्यहतचित्तेन भेदःकर्तुमभीप्सितः ॥ १४० ॥
तं विसर्पन्महामोदं किंचित्खेदमुपागतं । सोऽपृच्छत्कोऽसि किंनामा कुतो वासि समागतः १४१

कथं वा तव मंत्रोयं विदितोत्यंतदुर्गमः । एतद्भद्र समाचक्ष्व ज्ञातुमिच्छाम्यशेषतः ॥ १४२ ॥
सोऽवोचत्कुंदनगरे वणिग्धनपरायणः । समुद्रसंगमो नामा यमुना तस्य भामिनी ॥ १४३ ॥
विद्युज्ज्वालाकुले काले प्रसूता जननी च मां । बंधुभिर्विद्युदंगाख्या मयि तेन नियोजिता १४४
क्रमाच्च यौवनं बिभ्रदवंतीनगरीमिमां । आगतोऽस्म्यर्थलाभाय युक्तो वाणिज्यविद्यया ॥१४५॥
वेश्यां कामलतां दृष्ट्वा कामबाणेन ताडितः । न रात्रौ न दिवा यामि निर्वृतिं परमाकुलः १४६
एकां रात्रिं वसामीति तया कृतसमागमः । प्रीत्या दृढतरं बद्धो यथा वागुरया मृगः ॥ १४७ ॥
जनकेन ममासंख्यैर्यदब्दैरार्जितं धनं । तन्मयास्य सुपुत्रेण षड्भिर्मासैर्विनाशितं ॥ १४८ ॥
पद्मे द्विरेफवत्सक्तः कामतद्गतमानसः । साहसं कुरुते किं न मानवो योषितां कृते ॥ १४९ ॥
अन्यदा सा पुरः सख्या निंदंती कुंडलं निजं । श्रुता मयेति भारेण किं कर्णस्यामुना मम १५०
धन्या सा श्रीधरा देवी महासौभाग्यभागिनी । यस्यास्तद्राजते कर्णे मनोज्ञं रत्नकुंडलं ॥१५१॥
चिंतितं च मया तच्चेदपहृत्य सुकुंडलं । आशां न पूरयाम्यस्य तदा किं जीवितेन मे ॥१५२॥
ततो जिहीर्षया तस्य दयितं प्रोह्य जीवितं । गतोहं भवनं राज्ञो रजन्यां तमसावृतः ॥ १५३ ॥
पृच्छंती श्रीधरा तस्य मया सिंहोदरं श्रुता । निद्रां न लभसे कस्मान्नाथोद्विग्न इवाधुना १५४

सोवोचद्देवि निद्रा मे कुतो व्याकुलचेतसः । न मारितो रिपुर्यावन्नमस्कारपरांमुखः ॥ १५५ ॥
अपथानेन दग्धस्य व्याकुलस्यार्णव्चिंतया । अजितप्रत्यनीकस्य विटाक्रांताबलस्य च ॥ १५६ ॥
सशल्यस्य दरिद्रस्य भीरोश्च भवदुःखिनः । निद्रा कृपापरीतेव सुदूरेण पलायते ॥ १५७ ॥
निहंतास्मि न चेदेनं नमस्कारपरांमुखं । वज्रकर्ण ततः किं मे जीवितेन हतौजसः ॥ १५८ ॥
ततोहं कुलिशेनेव हृदये कृतताडनः । रहस्यरत्नमादाय त्यक्त्वा कुंडलशेमुषीं ॥ १५९ ॥
धर्मोद्यतमनस्कस्य सततं साधुसेविनः । भवतोंतिकमायातो ज्ञात्वा कुरु निवर्तनं ॥ १६० ॥
नागैरंजनशैलाभैः प्रक्षरद्दंडभित्तिभिः । सप्तिभिश्च महावेगैर्भटैश्च कवचावृतैः ॥ १६१ ॥
तदाज्ञापनया मार्गो निरुद्धोयं पुरोखिलः । सामंतैः परमं क्रूरैर्भवंतं हंतुमुद्यतैः ॥ १६२ ॥
प्रसादं कुरु गच्छाशु प्रतीपं धर्मवत्सल । पतामि पादयोरेष तव मद्वचनं कुरु ॥ १६३ ॥
अथ प्रत्येषितो राजन् ततः पश्यैतदागतं । धूलीपटलसंच्छन्नं परचक्रं महारवं ॥ १६४ ॥
तावत्परागतं दृष्ट्वा साधनं कुलिशश्रवाः । समेतो विद्युदंगेन निवृत्तो वेगिवाहनः ॥ १६५ ॥
प्रविश्य च पुरं दुर्गं सुधीरः समवस्थितः । विधाय वंचितारोधं सामंताश्चावतास्थिरे ॥ १६६ ॥
प्रविष्टं नगरं श्रुत्वा वज्रकर्णं रुषा ज्वलन् । सिंहोदरः समायातः सर्वसाधनसंयुतः ॥ १६७ ॥

पुरस्यात्यंतदुर्गत्वात्साधनक्षयकातरः । न स तद्ग्रहणे बुद्धिं चकार सहसा नृपः ॥ १६८ ॥
समावस्य समीपे च त्वरितं प्राहिणोन्नरं । वज्रकर्णं स गत्वेति बभाणात्यंत निष्ठुरं ॥ १६९ ॥
जिनशासनवर्गेण सदावष्टब्धमानसः । ऐश्वर्यकंटकस्त्वं मे जातः सद्भाववर्जितः ॥ १७० ॥
कुटुंबभेदने दक्षैः श्रमणैर्दुर्विचेष्टितैः । प्रोत्साहितो गतोस्यैतामवस्थां नयवर्जितः ॥ १७१ ॥
भुंक्षे देशं मया दत्तमर्हंतं च नमस्यति । अहो ते परमा माया जातेयं दुष्टचेतसः ॥ १७२ ॥
आगच्छाशु ममाभ्यासं प्रणामं कुरु सन्मतिः । अन्यथा पश्य जातोऽसि मृत्युना सह संगतं ॥१७३॥
ततस्तद्वचनाद्गत्वा दूतोऽवददिदं पुनः । एवं वज्रश्रुतिर्नाथ ब्रवीति कृतनिश्चयः ॥ १७४ ॥
नगरं साधनं कोषं गृहाण त्रिषयं विभो । धर्मद्वारं सभार्यस्य यच्छ मे केवलस्य वा ॥ १७५ ॥
कृता मया प्रतिज्ञेयं मुंचाम्येनां मृतोऽपि न । द्रविणस्य भवान् स्वामी शरीरस्य तु नो मम ॥१७६॥
इत्युक्तोऽप्यपरित्यक्तक्रोधः सिंहोदरः पुरः । कृत्वा रोधमिमं देशमुद्वासयदुज्ज्वलं ॥ १७७ ॥
इदं ते कथितं देव देशोद्वासनकारणं । गच्छामि सांप्रतं शून्यग्रामधानमितोंतिकं ॥ १७८ ॥
तास्मिन् विमानतुल्येषु दह्यमानेषु सद्मसु । मदीया दुष्कुटी दग्धा तृणकाष्ठविनिर्मिता ॥ १७९ ॥
तत्र गोपायितं स्रूर्पं घटं पिठरमेव च । आनयामि कुगेहिन्या प्रेरितः क्रूरवाक्यया ॥ १८० ॥

गृहोपकारणं भूरि शून्यग्रामेषु लभ्यते । आनयस्व त्वमेवेति सा तु मां भाषते मुहुः ॥ १८१ ॥
अथवात्यंतमेवेदं तया मे जनितं हितं । देव कोऽपि भवान् दृष्टो मया येन सुकर्मणा ॥ १८२ ॥
इत्युक्ते करुणाक्लिष्टः पथिकं वीक्ष्य दुःखितं । पद्मोऽस्मै रत्नसंयुक्तं ददौ कांचनसूत्रकं ॥ १८३ ॥
प्रतीतः प्रणिपत्यासौ तदादाय त्वरान्वितं । प्रतियातो निजं धाम बभूव च नृपोपमः ॥ १८४ ॥
अथावोचत्ततः पद्मो लक्ष्मणोयं दिवाकरः । नैदाघो यावदत्यंतं दुस्सहत्वं न गच्छति ॥ १८५ ॥
तावदुत्तिष्ठ गच्छावः पुरस्यास्यांतिकं भुवं । जानकीयं तृषाश्रांता कुर्वाहारविधिं द्रुतं ॥ १८६ ॥
एवमित्युदिते जाता दशांगनगरस्य ते । समीपे चंद्रभासस्य चैत्यालयमनुत्तमं ॥ १८७ ॥
तस्मिन् सजानकीरामः प्रणम्यावास्थितः सुखं । तदाहारोपलंभाय लक्ष्मणः सधनुर्गतः ॥१८८॥
विशन् सिंहोदरस्यासौ शिबिरं रक्ष्यमानसैः । निरुद्धकृतिनिस्वानैः समीरण इवाद्रिभिः ॥१८९॥
द्रुमकैर्दुष्कुलोत्पन्नैः किं विरोधेन मे समं । इति संचित्य यातोऽसौ नगरं तेन पंडितः ॥ १९० ॥
गोपुरं च समासीददनेकभटरक्षितं । यस्योपरि स्थितः साक्षाद्वज्रकर्णः प्रयत्नवान् ॥ १९१ ॥
ऊचिरे तस्य भृत्यास्तं कस्त्वमेतः कुतोऽपि वा । किमर्थं वेति सोऽवोचद्दूरात्प्राप्तोन्नलिप्सया ॥
ततस्तं बालकं कांतं दृष्ट्वा विस्मयसंगतः । आगच्छ प्रविश क्षिप्रमिति वज्रश्रवा जगौ ॥ १९३ ॥

ततस्तुष्टः प्रयातोसौ समीपं कुलिशश्रुतेः । विनीतवेषसंपन्नो वीक्षितं सादरं नरैः ॥ १९४ ॥
जगाद वज्रकर्णश्च नरमाप्तमयं द्रुतं । अन्नं प्रसाधितं मह्यं भोज्यतां रचितादरः ॥ १९५ ॥
सोवोचन्नात्र भुंजेहमिति मे गुरुरंतिके । तमादौ भोजयाम्यन्नं नयाम्यस्याहमंतिकं ॥ १९६ ॥
एवमस्त्विति संभाष्य नृपोन्नमतिपुष्कलं । अदीदपद्वरं तस्मै चारुव्यंजनपानकं ॥ १९७ ॥
लक्ष्मीधरस्तदादाय गतो द्विगुणरंहसा । भुक्तं च तैः क्रमेणैतत्तृप्तिं च परमां गताः ॥ १९८ ॥
ततस्तुष्टोऽवदत्पद्मः पश्य लक्ष्मण भद्रतां । वज्रकर्णस्य येनेदं कृतं परिचयाद्विना ॥ १९९ ॥
जामात्रेऽपि सुसंपन्नमीदृगन्नं न दीयते । पानकानामहो शैत्यं व्यंजनानां च मृष्टता ॥ २०० ॥
अनेनामृतकल्पेन भुक्तेनान्नेन मार्गजः । नैदाघोऽपहृतः सद्यः श्रमोस्माकं समं ततः ॥ २०१ ॥
चंद्रबिंबमिवाचूर्ण्य शालयोऽमी विनिर्मिताः । धवलत्वेन बिभ्राणा मार्दवं भिन्नसिच्छकाः ॥२०२॥
दुग्धेवदीधितीरिंदोः कृतमेतच्च पानकं । नितांतमच्छता युक्तं सौरभाकृष्टषट्पदं ॥ २०३ ॥
घृतक्षीरमिदं जातं कल्पधेनुस्तनादिव । रसानामीदृशी व्यक्तिर्व्यंजनेषु सुदुस्तरा ॥ २०४ ॥
अणुव्रतधरः साधुर्वर्णितः पथिकेन सः । अतिथीनां करोत्यन्यः संविभागं क ईदृशं ॥ २०५ ॥
शुद्धात्मा श्रूयते सोयमनन्यप्रणतिः सुधीः । भवार्तिमथनं नाथं जिनेंद्रं यो नमस्यति ॥ २०६ ॥

ईदृक् शीलगुणोपेतो यद्येषोस्माकमग्रतः । तिष्ठत्यरातिना रुद्धस्ततो नो जीवितं वृथा ॥ २०७ ॥
अपराधविमुक्तस्य साधुसेवार्पितात्मनः । समस्ताश्चास्य सामंता एकनाथाविरोधिनः ॥ २०८ ॥
तोद्यमानमिमं नूनं सिंहोदरकुभूभृता । भरतोऽपि न शक्नोति रक्षितुं नूतनेशतः ॥ २०९ ॥
तस्मादन्यपरित्राणरहितस्यास्य सन्मतेः । क्षिप्रं कुरु परित्राणं व्रज सिंहोदरं वद ॥ २१० ॥
इदं वाच्यमिदं वाच्यमिति किं शिक्ष्यते भवान् । उत्पन्नः प्रज्ञया सार्कं प्रभयेव महामणिः २११
गुणोच्चारणसव्रीडः कृत्वा शिरसि शासनं । यथाज्ञापयसीत्युक्त्वा प्रणम्य प्रमदान्वितः ॥२१२॥
विनीतं धारयन् वेषमनुपादाय कार्मुकं । प्रयातो रयसंपन्नो लक्ष्मणः कंपिताक्षितिः ॥ २१३ ॥
दृष्ट्वा संरक्षकैः पृष्टः कतरस्य पुमान् भवान् । सोवोचद्भरतस्याहमेतो दूतस्य कर्मणा ॥ २१४ ॥
क्रमेणातीत्य शिविरं भूरि प्राप्तो नृपास्पदं । अविशद्वेदितो द्वाःस्थैः सदः सिंहोदरस्य सः २१५
प्रस्पष्टमिति चोवाच मन्यमानस्तृणं नृपं । ज्येष्ठभ्रातृवचोवाहं सिंहोदर नृपाधमम् (निबोध मां) ॥
आज्ञापयत्यसौ देवो भवंतमिति सद्गुणः । यथा किल किमेतेन विरोधेन विहेतुना ॥ २१७ ॥
ततः सिंहोदरोऽवादीन्मनः कर्कशमुद्वहन् । दूत ब्रूतां विनीतेशमिति मद्वचनाद्भवान् ॥ २१८ ॥
यथा किलाविनीतानां भृत्यानां विनयाहृतौ । कुर्वंति स्वामिनो यत्नं विरोधः कोत्र दृश्यते २१९

वज्रकर्णो दुरात्मायं मानी नैकृतिकः परः । पिशुनः क्रोधनः क्षुद्रः सुहृन्निंदापरायणः ॥ २२० ॥
आलस्योपहतो मूढो वायुग्रहगृहीतधीः । विनयाचारनिर्मुक्तो दुर्विदग्धो दुरीहितः ॥ २२१ ॥
एतं मुंचंत्वमी दोषा दमेन मरणेन वा । तमुपायं करोम्यस्य स्वैरमत्रास्यतां त्वया ॥ २२२ ॥
ततो लक्ष्मीधरोऽवोचत्किमत्र प्रचुरोत्तरैः । कुरुतेयं हितं यस्मात्क्षम्यतां सर्वमस्य तत् ॥२२३ ।
इत्युक्तः प्रकटक्रोधः संधिदूरपरांमुखः । सिंहोदरोऽवदत्तारं वीक्ष्य सामंतसंहतिं ॥ २२४ ॥
न केवलमसौ मानी हतात्मा वज्रकर्णकः । तत्कार्यवांछया प्राप्तो भवानपि तथाविधः ॥२२५॥
पाषाणेनैव ते गात्रमिदं दूत विनिर्मितं । न नाममीषदप्येति दुर्भृत्यः कोशलापतेः ॥ २२६ ॥
तत्र देशे नरा नूनं सर्व एव भवद्विधाः । स्थालीपुलाकधर्मेण परोक्षं ज्ञायते ननु ॥ २२७ ॥
इत्युक्ते कोपमायातःकिंचिल्लक्ष्मीधरोऽवदत् । साम्यहेतोरहं प्राप्तो न ते कर्तुं नमस्कृतिं ॥२२८॥
बहुनात्र किमुक्तेन हरे संक्षेपतः शृणु । प्रतीच्छ संधिमद्यैव मरणं वा समाश्रय ॥ २२९ ॥
इत्युक्ते परिषत्सर्वा परं क्षोभमुपागता । नानाप्रकारदुर्वाक्या नानाचेष्टाविधायिनी ॥ २३० ॥
आकृष्य छुरिकां केचिन्निस्त्रिंशानपरे भटाः । वधार्थमुद्यतास्तस्य कोपकंपितमूर्तयः ॥ २३१ ॥
वेगनिर्मुक्तहुंकाराः परस्परसमाकुलाः । ते तं समंततो बभ्रुर्मशका इव पर्वतं ॥ २३२ ॥

अप्राप्तानेव धीरोऽसौ क्रियालाघवपंडितः । चिक्षेप चरणाघातैर्दूरं तान् विह्वलान्समं ॥ २३३ ॥
जघान जानुना कांश्चित्कूर्परेणापरान् भ्रमं । कांश्चिन्मुष्टिप्रहारेण चकार शतशर्करान् ॥ २३४ ॥
कचेषु कांश्चिदाकृष्य निपात्य धरणीतले । पादेनाचूर्णयत्कांश्चिदंसघातैरपानयत् ॥ २३५ ॥
कांश्चिदन्योन्यघातेन परिचूर्णितमस्तकान् । चकार जंघया कांश्चिदरं प्राप्तविमूर्छनान् ॥ २३६ ॥
एवमेकाकिना तेन परिषत्सा तथाविधा । महाबलेन विध्वंसं नीता भयसमाकुलाः ॥ २३७ ॥
एवं विध्वंसयन् यावन्निष्क्रांतो भवनाजिरं । तावद्योधशतैरन्यैः लक्ष्मणः परिवेष्टितः ॥ २३८ ॥
सामंतैरथ सन्नद्धैर्वारणैः सप्तिभीरथैः । परस्परविमर्देन बभूवाकुलता परा ॥ २३९ ॥
नानाशस्त्रकरेष्वेषु लक्ष्म्यालिंगितविग्रहः । चकार चेष्टितं वीरः शृगालेष्विव केसरी ॥ २४० ॥
ततोनेकपमारुह्य प्रावृषेण घनाकृतिं । स्वयं सिंहोदरो रोद्धुं लक्ष्मीनिलयमुद्यतः ॥ २४१ ॥
तस्मिन् रणशिरोजाते किंचिद्धैर्यमुपागतः । दूरगाः पुनराजग्मुः सामंता लक्ष्मणं प्रति ॥ २४२ ॥
घनानामिव संघास्ते बभ्रुस्तं शशिनं यथा । वातूल इव तानेष तूलराशीनिवाकरत् ॥ २४३ ॥
उदारभटकामिन्यो गंडविन्यस्तपाणयः । जगुराकुलताभाजः प्रविरोलविलोचनाः ॥ २४४ ॥
पश्यतैनं महाभीमं सख्यः पुरुषमेककं । वेष्टितं बहुभिः क्रूरैरसांप्रतमिदं परं ॥ २४५ ॥

अन्यास्तत्रोचुरेकोऽपि केनापि परिभूयते । पश्यतानेन विक्रांता बहवो विह्वलीकृताः ॥ २४६ ॥
आस्तृणानमथो दृष्ट्वा लक्ष्मणोऽभिमुखं बलं । विहस्य वारणस्तंभं महांतमुदमूलयत् ॥ २४७ ॥
ततः सरभसस्तत्र सांद्रहुंकारभीषणः । जंजृभे लक्ष्मणः कक्षे यथोच्चैराशशुक्षणिः ॥ २४८ ॥
विस्मितो गोपुराग्रस्थो दशांगनगराधिपः । पार्श्ववर्तिभिरित्यूचे सामंतैर्विकचेक्षणैः ॥ २४९ ॥
कोप्येष पुरुषो नाथ पश्य सैंहोदरं बलं । भग्नध्वजरथच्छत्रं करोति परमद्युतिः ॥ २५० ॥
एष खड्गधनुच्छायमध्यवर्ती सुविह्वलः । आवर्त इव निक्षिप्तो भ्राम्यतीभाहितोदरः ॥ २५१ ॥
इतश्चेतश्च विस्तीर्णमेतत्सैन्यं पलायते । एतस्मात्त्रासमागत्य सिंहान् मृगकुलं यथा ॥ २५२ ॥
वदंत्यन्योन्यमत्रैते सामंता दूरवर्तिनः । अवतारय सन्नाहं मंडलाग्रो विमुच्यतां ॥ २५३ ॥
कार्मुकं क्षिप मुंचाश्वं वारणादवतीर्यतां । गदां निरस्य गर्तायां माकार्षीरवमुन्नतं ॥ २५४ ॥
आलोक्य शास्त्रसंघातं श्रुत्वा वा रभसान्वितः । कोप्येष पुरुषोस्माकमाप तदतिदारुणः ॥२५५॥
अपसर्प्यामुतो देशाद्देहि मार्गमहो भट । वारणं सारयैतस्मात्किमत्र स्तंभितोऽसि ते ॥ २५६ ॥
अयं प्राप्तोयमायातो दुःसूत स्यंदनं त्यज । तुरंगाश्चोदय क्षिप्रं घातिता स्मो न संशयं ॥२५७॥
एवमादिकृतालापाः केचित्संकटमागताः । परित्यज्य भटाः कल्पमेते पंङ्कवास्थिताः(?)॥२५८॥

किमेष रमते युद्धे कोऽपि त्रिदशसंभवः । विद्याधरो नु वान्यस्य कस्येयं शक्तिरीदृशी ॥ २५९ ॥
कालो नाम यमो वायुः कोऽपि लोके प्रकीर्त्यते । सोयं किमु भवेश्चंद्रो विद्युद्दंडचलाचलः २६०
त्वयेदमीदृशं सैन्यं पुनरेष करिष्यति । किमित्येवं मनोस्माकं नाथ शंकामुपागतं ॥ २६१ ॥
निरीक्ष्य स्वैनमुत्पत्य संग्रामे रोमहर्षणे । सिंहोदरं समाकृष्य विह्वलं वरवारणात् ॥ २६२ ॥
गले तदंशुकेनैव प्राध्वंकृत्य सुविस्मितः । एष याति पुरःकृत्वा बलीवर्दं यथा वशं ॥ २६३ ॥
एवमुक्तः स तैरूचे स्वस्था भवत मानवाः । देवाः शांतिं करिष्यंति किमत्र बहुचिंतया ॥२६४॥
स्थिता मूर्द्धसुहर्म्याणां दशांगनगरांगनाः । परं विस्मयमापन्ना जगुरेवं परस्परं ॥ २६५ ॥
सखि पश्यास्य वीरस्य चेष्टितं परमाद्भुतं । येनैकेन नरेंद्रोयमानीतोंऽशुकबंधनं ॥ २६६ ॥
अहो कांतिरमुष्येयं द्युतिश्चातिशयान्विता । अहो शक्तिरियं कोयं भवेत्पुरुषसत्तमः ॥ २६७ ॥
भूतोयं भविता वापि पुण्यवत्याः सुयोषितः । पतिः कस्याः प्रशस्तायाः समस्ते जगतीश्वरः ॥
सिंहोदरमहिष्योऽथ वृद्धबालसमन्विताः । रुदत्यः पादयोः पेतुर्लक्ष्मणस्यातिविक्लवाः ॥ २६९ ॥
ऊचुश्च देव मुंचैनं भर्तृभिक्षां प्रयच्छ नः । अद्य प्रभृतिभृत्योयं तवाज्ञाकरणोद्यतः ॥ २७० ॥
सोऽवोचत्पश्यतोदारं द्रुमखंडमिमं पुरः । अत्र नीत्वा दुराचारमेतमुल्लंबयाम्यहं ॥ २७१ ॥

करुणं बहु कुर्वंत्यः पुनः सांजलयोऽवदत् । रुष्टोसि यदि देवास्मान् जहि निर्धार्यतामयं ॥२७२॥
प्रसादं कुरु मा दुःखं दर्शय प्रियसंगमं । ननु योषित्सु कारुण्यं कुर्वंति पुरुषोत्तमः ॥ २७३ ॥
पुरा मोक्षामि सेवध्वं स्वस्थतामित्यसौ वदन् । ययौ चैत्यालयं यत्र ससीतो राघवःस्थितः २७४
अवोचल्लक्ष्मणः पद्मं सोयं वज्रश्रुतेररिः । आनीतोऽस्याधुना देव कृत्यं वदतु यन्मया ॥२७५॥
ततः सिंहोदरो मूर्ध्ना करकुड्मलयोगिना । पपात वेपमानांगः पद्मस्य क्रमपद्मयोः ॥ २७६ ॥
जगाद च न देव त्वां वेद्मि कोसीति कांतिमान् । परेण तेजसा युक्तो महीध्रप्रतिसन्निभः॥२७७॥
मानवो भव देवो वा गंभीरपुरुषोत्तमः । अत्र किं बहुभिः प्रोक्तैरहमाज्ञाकरस्तव ॥ २७८ ॥
गृह्णातु रुचितस्तुभ्यं राज्यमिंद्रायुधश्रुतिः । अहं तु पादशुश्रूषां करोमि सततं तव ॥ २७९ ॥
धव–भिक्षां प्रयच्छेति योषितोप्यस्य पादयोः । रुदत्यः प्रणिपत्योचुः कुर्वंत्यः करुणं बहु २८०
देवि स्त्रैणात्त्वमस्माकं कारुण्यं कुरु शोभने । इत्युदित्वा च सीतायाः पतितास्ताः क्रमाब्जयोः ॥
ततः सिंहोदरं पद्मो जगाद विनयाननं । कुर्वन् वापीषु हंसानां मेघनादोद्भवं भयं ॥ २८२ ॥
शक्रायुधश्रुतिर्यत्ते ब्रवीति कुरु तत्सुधीः । एवं ते जीवितं मन्ये प्रकारोन्यो न विद्यते ॥ २८३ ॥
आहूतोऽथ हितैः पुंभिः कृतदृष्ट्याभिवर्धनः । वज्रकर्णः परीवारसहितश्चैत्यमागमत् ॥ २८४ ॥

स त्रिःप्रदक्षिणीकृत्य मूर्धपाणिर्जिनालयं । स्तुत्वा ननाम चंद्राभं भक्तिहृष्टस्तनूरुहः ॥ २८५ ॥
ततश्च विनयी गत्वा स्तुत्वा तौ भ्रातरौ क्रमात् । अपृच्छद्वपुरारोग्यं सीतां च विधिकोविदः २८६
भद्र ते कुशलेनाद्य कुशलं नः समंततः । इति तं राघवोऽवोचन्नितांतं मधुरध्वनिः ॥ २८७ ॥
संकथेयं तयोर्यावद्वर्तते शुभलीलयोः । चारुवेषोथ सैन्येन विद्युदंगः समागतः ॥ २८८ ॥
स तयोः प्रणतिं कृत्वा स्तुत्वा च क्रमपंडितः । समीपे वज्रकर्णस्य सन्निविष्टः प्रतापवान्॥२८९॥
विद्युदंगः सुधी सोयं वज्रकर्णसुहृत्परः । इति शब्दः समुत्तस्थौ तदा सदसि मांसलः ॥ २९० ॥
पुनश्च राघवोऽवोचत्कृत्वा स्मितासितं मुखं । वज्रकर्ण ! समीचीना तव दृष्टिरियं परा ॥ २९१ ॥
कुमतैस्तव धीरेषा मनागपि न कंपिता । उत्पातवातसंघातैः मंदिरेस्येव चूलिका ॥ २९२ ॥
ममापि सहसा दृष्ट्वा न ते मूर्धायमानतः । अहो परमिदं चारु तव शांतं विचेष्टितं ॥ २९३ ॥
अथवा शुद्धतत्त्वस्य किमु पुंसोस्ति दुस्तरं । धर्मानुरागचित्तस्य सम्यग्दृष्टेर्विशेषतः ॥ २९४ ॥
प्रणम्य त्रिजगद्वंद्यं जिनेंद्रं परमं शिवं । तुंगेन शिरसा तेन कथमन्यः प्रणम्यते ॥ २९५ ॥
मकरंदरसास्वादलब्धवर्णो मधुव्रतः । रासभस्य पदं पुच्छे प्रमत्तोऽपि करोति किं ॥ २९६ ॥
बुद्धिमानसि धन्योऽसि दधास्यासन्नभव्यतां । चंद्रादपि सिता कीर्तिस्तव भ्राम्यति विष्टपे २९७

विद्युदंगोप्ययं मित्रं परं ते विदितं मया । भव्योयमपि यः सेवां तव कर्तुं समुद्यतः ॥ २९८ ॥
सद्भूतगुणसत्कीर्तेरथ लज्जामुपागतः । किंचिन्नताननोऽवोचच्छुनाशीरायुधश्रवाः ॥ २९९ ॥
अत्रावसीदतो देव प्राप्तस्य व्यसनं महत् । संजातोऽसि महाभाग मे त्वं परमबांधवः ॥ ३०० ॥
नियमस्त्वत्प्रसादेन ममायं जीवितोऽधुना । पालितो मम भागेन त्वमानीतो नरोत्तमः ॥३०१॥
वदन्नेवमसा ऊचे लक्ष्मणेन विचक्षणः । वदाभिरुचितं यत्ते क्षिप्रं सम्पादयाम्यहम् ॥ ३०२ ॥
सोवोचत्सुहृदं प्राप्य भवंतमतिदुर्लभं । न किंचिदस्ति लोकेऽस्मिन्निदं तु प्रवदाम्यहं ॥ ३०३ ॥
तृणस्यापि न वांछामि पीडां जिनमताश्रितः । अतो विमुच्यतामेष मम सिंहोदरप्रभुः ॥ ३०४ ॥
इत्युक्ते लोकवक्त्रेभ्यः साधुकारः समुद्ययौ । प्राप्तद्वेषेऽपि पश्यायं मतिं धत्ते शुभामिति ॥३०५॥
अपकारिणि कारुण्यं यः करोति सः सज्जनः । मध्ये कृतोपकारे वा प्रीतिः कस्य न जायते ३०६
एवमस्त्विति भाषित्वा लक्ष्मणेन तयोः कृता । हस्तग्रहणसंपन्ना प्रीतिः समयपूर्विका ॥ ३०७ ॥
उज्जयिन्या ददावर्धं वज्रकर्णाय शुद्धधीः । सिंहोदरो हृतं पूर्वं विषयोद्वासने च यत् ॥ ३०८ ॥
चतुरंगस्य देशस्य गणिकानां धनस्य च । विभागं समभागेन निजस्याप्यकरोदसौ ॥ ३०९ ॥
वार्हद्भतप्रसादेन तां वेश्यां तच्च कुंडलं । लेभे सेनाधिपत्यं च विद्युदंगः शुचिश्रुतः ॥ ३१० ॥

वज्रकर्णस्ततः कृत्वा रामलक्ष्मणयोः परां । पूजामानाय यत्क्षिप्रमष्टौ दुहितरो वराः ॥ ३११ ॥
सजायो दृश्यते ज्यायानिति तास्तेन ढौकिताः । लक्ष्मीधरं कृतोदारविभूषाविनयान्वितः ॥३१२॥
नृपाः सिंहोदराद्याश्च ददुः परमकन्यकाः । एवं सन्निहितं तस्य कुमारीणां शतत्रयं ॥ ३१३ ॥
ढौकित्वा वज्रकर्णस्ताः समं सिंहोदरादिभिः । जगाद लक्ष्मणं देव तवैता वनिता इति ॥३१४॥
लक्ष्मीधरस्ततोऽवोचद्दारसंगं करोम्यहं । न तावन्न कृतं यावत्पदं भुजबलार्जितं ॥ ३१५ ॥
पद्मश्च तानुवाचैवं नास्माकं वसतिः क्वचित् । भरतस्याधिराज्येऽस्मिन् देशे स्वर्गतलोपमे ॥३१६॥
देशान् सर्वान् समुल्लंघ्य करिष्याम्यालयं ततः । आश्रित्य चंदनगिरिं दक्षिणार्णवमेव वा ॥३१७॥
एकां वेलामिह ततो जनन्यो नेतुमुत्सुके । आगंतव्यं मयावश्यं द्रागयोध्यामनेन वा ॥ ३१८ ॥
काले तत्रैव नेष्यंते कन्यका अपि भो नृपाः । अज्ञातनिलयस्यास्य कीदृशो दारसंग्रहः ॥३१९॥
एवमुक्ते कुमारीणां तद्वृंदं शुशुभे न च । आकुलं पंकजवनं हिमव्राताहतं यथा ॥ ३२० ॥
प्रियस्य विरहे प्राणान् त्यक्ष्यामो यदि तत्पुनः । अवस्यामः कुतोनेन समागमरसायनं ॥३२१॥
प्राणांश्च धारयंतीनां कैतवं मन्यते जनः । दह्यते च समिद्धेन मनो विरहवह्निना ॥ ३२२ ॥
सुमहान् भृगुरेकत्र व्याघ्रोऽन्यत्रातिदारुणः । अहो कष्टं कमाधारं व्रजामोत्यंतदुस्सहाः ॥३२३॥

अथवा विरहव्याघ्रं संगमाशयाविद्यया । संस्तंभ्य धारयिष्यामः शरीरमिति सांप्रतं ॥ ३२४ ॥
एवं विचिंतयंतीभिः सार्धं ताभिर्महीभृतः । गता यथागतं कृत्वा रामादीनां यथोचितं ॥३२५॥
सच्चेष्टाः पूज्यमानास्ताः पितृवर्गेण कन्यकाः । नानाविनोदनासक्तास्तस्थुस्तद्गतमानसा॥३२६॥
आनायितः पिता भूत्या स वंधुर्देशमात्मनः । विद्युदंगेन चक्रे च परमः संगमोत्सवः ॥३२७॥
परमेऽथ निशीथे ते नत्वा चैत्यालयात्ततः । शनैर्निर्गत्य पादाभ्यां स्वेच्छया सुधियो ययुः३२८
चैत्यालयं प्रभाते तं दृष्ट्वा शून्यं जनोऽखिलः । रहिताशेषकर्तव्यो वितानहृदयस्थितः ॥ ३२९ ॥
समं कुलिशकर्णेन जाता प्रीतिरनुत्तरा । सिंहोदरस्य सम्मानगत्या गमनवर्धिता ॥ ३३० ॥
स्वैरं स्वैरं जनकतनयां तौ च संचारयंतौ । स्थायं स्थायं विकटसरसां काननानां तलेषु ॥
पायं पायं रसमभिमतं स्वादुभाजां फलानां । क्रीडं क्रीडं सुरसवचनं चारुचेष्टासमेतं ॥ ३३१ ॥
प्राप्तौ नाना रचनभवनोत्तुंगशृंगाभिरामं । रम्योद्यानावततवसुधं चैत्यसंघातपूतं ॥
नाकच्छायं सततजनितात्युत्सवोदारपौरं । श्रीमत्स्वानं रविसमसत्रिख्यातिमत्कूवराख्यं॥३३२॥

इत्यार्षे रविषेणाचार्यप्रोक्ते पद्मचरिते वज्रकर्णोपाख्यानं नाम त्रयस्त्रिंशत्तमं पर्व ।

# अथ चतुस्त्रिंशत्तमं पर्व

परमं सुंदरे तत्र फलपुष्पभरानते । गुंजद्भ्रमरसंघाते मत्तकोकिलनादिते ॥ १ ॥
कानने सीतया साकमग्रजन्मा स्थितः सुखं । अंतिकां सलिलार्थी तु लक्ष्मणः सरसीं गतः ॥ २ ॥
अत्रांतरे सुरूपाढ्यो नेत्रतस्करविभ्रमः । एकोऽपि सर्वलोकस्य हृदयेषु समं वसन् ॥ ३ ॥
महाविनयसंपन्नः कांतिनिर्झरपर्वतः । वरवारणमारूढश्चारुपादातमध्यगः ॥ ४ ॥
तामेव सरसीं रम्यां क्रीडनाहितमानसः । प्राप्तः कल्याणमालाख्यो जनस्तन्नगराधिपः ॥ ५ ॥
महतः सरसस्तस्य दृष्ट्वा तं तीरवर्तिनं । नीलोत्पलचयश्यामं लक्ष्मणं चारुलक्षणं ॥ ६ ॥
ताडितः कामबाणेन स जनोत्यंतमाकुलः । मनुष्यमब्रवीदेकमयमानीयतामिति ॥ ७ ॥
गत्वा कृत्वांजलिर्दक्षः स तमेवमभाषत । एह्ययं राजपुत्रस्ते प्रसादात्संगमिच्छति ॥ ८ ॥
को दोष इति संचिंत्य दधानः कौतुकं परं । जगाम लीलया चार्व्या समीपं तस्य लक्ष्मणः ॥९॥
उत्तीर्य स जनो नागात्पद्मतुल्येन पाणिना । करे लक्ष्मणमालंब्य प्राविशद् गृहमांबरं ॥ १० ॥
एकासने च तेनातिप्रतीतः सहितः स्थितः । अपृच्छच्च सखे कस्त्वं कुतो वा समुपागतः ॥११॥

सोऽवोचद्विप्रयोगान्मे ज्येष्ठो दुःखेन तिष्ठति । तावन्नयामि तस्यान्नं कथयिष्यामि ते ततः ॥१२॥
ततः शाल्योदनः सूप उपदेशनवं घृतं । अपूपा घनबंधानि व्यंजनानि पयो दधि ॥ १३ ॥
पानकानि विचित्राणि शर्कराखंडमोदकान् । शंष्कुल्यो घृतपूर्णानि पूरिका गुडपूर्णिका ॥ १४ ॥
वस्त्रालंकारमाल्यानि लेपनप्रभृतीनि च । अमत्राणि च चित्राणि हस्तमार्जनकानि च ॥ १५ ॥
सर्वमेतत्समासन्नपुरुषैः स महाजवैः । भाविनानायितं तेन जनेनांतिक्रमात्मनः ॥ १६ ॥
अंतरंगः प्रतीहारो जनस्य वचनात्ततः । गत्वा सीतान्वितं पद्मं प्रणम्यैवमभाषत ॥ १७ ॥
अमुष्मिन् वस्त्रभवने भ्राता ते देव तिष्ठति । एतन्नगरनाथश्च विज्ञापयति सादरः ॥ १८ ॥
प्रसादं कुरु तच्छाया शीतलेयं मनोहरा । तस्मादियंतमध्वानं स्वेच्छया गंतुमर्हथ ॥ १९ ॥
इत्युक्ते सीतया सार्धं ज्योत्स्नयेव निशाकरः । पद्मःसमाययौ विभ्रन्मत्तद्विरदविभ्रमः ॥ २० ॥
दूरादेव समालोक्य लक्ष्मणेन समं ततः । अभ्युत्थानं चकारास्य जनः प्रत्युद्गतिं तथा ॥ २१ ॥
सीतया सहितस्तस्थौ पद्मोत्यंतवरासने । अर्घदानादिसन्मानं प्राप्तश्च जनकल्पितं ॥ २२ ॥
ततः कर्मणि निर्वृत्ते स्वैरं स्नानाशनादिके । समुत्सार्याखिलं लोकमात्मा नीतस्तुरीयतां ॥ २३ ॥
दूतः पितुः सकाशान्मे प्राप्त इत्युपदेशनः । प्रपन्नः परमं कक्ष्यं प्रविश्यानन्यगोचरं ॥ २४ ॥

नानाप्रहरणान्वीरान् नियुज्य द्वारि भूयसः । प्रविष्टो योत्र वध्योसौ समेति कृतभाषणः ॥ २५ ॥
सद्भावज्ञापने लज्जां दूरीकृत्य सुमानसः । व्यपाटयदसौ तेषां समक्षं कंचुकं जनः ॥ २६ ॥
स्वर्गादिव ततोपप्तत् काप्यसौ वरकन्यका । उपयातेव पातालात्किंचिल्लज्जानतानना ॥ २७ ॥
तत्कांत्या भवनं लिप्तं लग्नानिलमिवाभवत् । उद्योतामिव चंद्रेण लज्जास्थितसितांशुभिः ॥ २८ ॥
छेकहंसाश्चिरं त्रस्ताश्चक्षुषी समबूब्रुवन् । लक्ष्मीरिव स्थिता साक्षात् श्रीरिवोज्झितपंकजा ॥ २९ ॥
गृहं प्लावितुमारब्धामिव लावण्यवारिधौ । उत्कीर्णामिव रत्नानां रजसा कांचनस्य वा ॥ ३० ॥
कल्लोला इव निर्जग्मुः स्तनाभ्यां कांतिवारिणः । तरंगा इव संजाता मध्ये त्रिवलिराजिते ॥ ३१ ॥
दंडातकं समुद्भिद्य जवनस्य घनं महः । निर्जगामापरं छातं जीमूतं शशिनो यथा ॥ ३२ ॥
सुचिरं प्रथितं लोके चंचलं वायसोमलं । गृहजीमूतवर्तिन्या निर्धौतमिव विद्युता ॥ ३३ ॥
अत्यंतस्निग्धया रुच्या रोमराज्या विराजितां । नितंबाज्जातया हैमान्महानीलत्विषा यथा ॥३४॥
ततोसौ सहसामुक्तनररूपा सुलोचना । ढांकिता जानकी तेन रतिं श्रीरिव लज्जया ॥ ३५ ॥
अंते लक्ष्मणस्तत्र परिश्वक्तो मनोभुवा । अवस्थां कामपि प्रापच्चलमंथरलोचनः ॥ ३६ ॥
ततो विशुद्धया बुद्ध्या पद्मस्तामित्यभाषत । दधाना विविधं वेषं का त्वं क्रीडसि कन्यके ॥३७॥

ततोंशुकेन संवीय गात्रं प्रवरभाषिणी । जगाद देव ! वृत्तांतं श्रृणु सद्भाववेदिनं ॥ ३८ ॥
वालिखिल्य इति ख्यातः पुरस्यास्य पतिः सुधीः । सदाचारपरो नित्यं मुनिवल्लोकवत्सलः ३९
पृथिवीति प्रिया तस्य गर्भाधानमुपागता । म्लेच्छाधिपतिना चासौ गृहीतः संयुगे नृपः ॥४०॥
उक्तं च स्वामिना तस्य सिंहोदरमहीभृता । पुत्रश्चेद्भविता गर्भे कर्ता राज्यमसाविति ॥ ४१ ॥
ततोहं पापिनी जाता मंत्रिणा च सुबुद्धिना । सिंहोदराय पौंस्त्वेन कथिता राज्यकांक्षया ॥४२॥
नीता कल्याणमालाख्यं जनन्या रहितार्थिका । प्राप्तो मांगलिके लोको व्यवहारे प्रवर्तते ॥४३॥
मंत्री माता च मे वेत्ति कन्येयमिति नापरः । इयंतं कालमधुना भवंतः पुण्यवीक्षिताः ॥ ४४ ॥
दुःखं तिष्ठति मे तातः प्राप्तश्चारकवासितां । सिंहोदरोपि नो सक्तस्तस्य कर्तुं विमोचनं ॥ ४५ ॥
यदत्र द्रविणं किंचिद्देशे समुपजायते । तन्म्लेच्छस्वामिने सर्वं प्रेक्ष्यते दुर्गमीयुषे ॥ ४६ ॥
वियोगवह्निनात्यंतं तप्यमाना ममांबिका । जाता कलावशेषेव चंद्रमूर्तिर्गतप्रभा ॥ ४७ ॥
इत्युक्ता दुःखभारेण पीडिता शेषगात्रिका । सद्यो विच्छायतां प्राप्ता मुक्तकंठं रुरोद सा ॥ ४८ ॥
अत्यंतमधुरैर्वाक्यैः पद्मेनाश्वासिता ततः । सीतया च निधायांके कुर्वंत्या मुखधावनं ॥ ४९ ॥
सुमित्रासूनुना चोक्ता शुचं विसृज सुंदरि । कुरु राज्यमनेनैव वेषेणोचितकारिणी ॥ ५० ॥

शुभे कांश्चित्प्रतीक्षस्व दिवसान् धैर्यसंगतान् । म्लेच्छेन ग्रहणं किं मे पितरं पश्य मोचितं ॥ ५१ ॥
इत्युक्ते परमं तोषं ताते मुक्त इवागता । समुच्छ्वसितसर्वांगा कन्यका द्युतिपूरिता ॥ ५२ ॥
तत्र ते कानने रम्ये विचित्रालापविभ्रमाः । देवा इव सुखं तस्थुः स्वच्छंदा दिवसत्रयं ॥ ५३ ॥
ततः सुपूजने काले रजन्यां रामलक्ष्मणौ । ससीतौ रंध्रमाश्रित्य निष्क्रांतौ काननालयात् ॥ ५४ ॥
विबुद्धा तानपश्यंती कन्या व्याकुलमानसा । हाकारमुखरा शोकं परमं समुपागता ॥ ५५ ॥
महापुरुष युक्तं ते स्तेनायित्वा मनो मम । गंतुं निद्रां समेताया निर्घृणेति मनास्विनी ॥ ५६ ॥
कृच्छ्रान्नियम्य शोकं च वरवारणवर्तिनी । प्रविश्य कूवरं तस्थौ पूर्ववद्दीनमानसा ॥ ५७ ॥
ततः कल्याणमालाया रूपेण विनयेन च । हृतचित्ताः क्रमेणैते प्रापुर्मेकलनिम्नगां ॥ ५८ ॥
उत्तीर्य विहितक्रीडास्तां सुखेन मनोहरा । बहून्देशानतिक्रम्य प्राप्ता विंध्यमहाटवीं ॥ ५९ ॥
स्कंधावारमहासार्थपरिक्षणेन वर्त्मना । प्रयांतः पथिकैर्गोपैः कीनाशैश्च निवारिताः ॥ ६० ॥
क्वचित्सालादिभिर्वृक्षैर्लतालिंगितमूर्तिभिः । तद्वनं शोभतेत्यंतं स्वामोदं नंदनं यथा ॥ ६१ ॥
क्वचिद्दावेन निर्दग्धं प्रांतास्थितमहीरुहं । न शोभते यथा गोत्रं दुष्पुत्रेण कलंकितं ॥ ६२ ॥
अथावोचत्ततः सीता कार्णिकारवनांतरे । वामतोयं स्थितो ध्वांक्षो मूर्ध्नि कंटकितस्तरोः ॥ ६३ ॥

वासमानो मुहुः क्रूरं कलहं कथयत्यरं । अन्योऽपि क्षीरवृक्षस्थो जयं शंसति वायसः ॥ ६४ ॥
तस्मात्तावत्प्रतीक्षेतां मुहूर्तं कलहात्परः । जयोऽपि नैव मे चित्ते प्रतिभात्यातिसुंदरः ॥ ६५ ॥
ततःक्षणं विलंब्यैतौ प्रयातौ पुनरुद्यतौ । तदेव च पुनर्जातं निमित्तं निकटेऽतरे ॥ ६६ ॥
ब्रुवत्या अपि सीताया अवकर्ण्य वचस्ततः । प्रवृत्तौ गंतुमग्रे च म्लेच्छानां सैन्यमुद्धतं ॥ ६७ ॥
तौ निरीक्ष्यैव निर्भीतावायांतौ वरकार्मुकौ । क्षणनैकेन तत्सैन्यं कांदिशीकं पलायितं ॥ ६८ ॥
अवगत्य ततस्तस्मात्सन्नद्धान्ये समागताः । प्रावृट्मेघसमानेन तेऽपि हासेन निर्जिताः ॥ ६९ ॥
ततस्तेऽत्यंतवित्रस्ता म्लेच्छाःपतितकार्मुकाः । कुर्वंतः परमं रावं गत्वा पत्ये न्यवेदयन् ॥ ७० ॥
ततोसौ परमं क्रोधं वहंश्चापं च दारुणं । निर्जगाम महासैन्यः शस्त्रसंतमसावृतः ॥ ७१ ॥
काकोनदा इति ख्याता म्लेच्छास्ते धरणीतले । दारुणाः सर्वमांसादो दुर्जयाः पार्थिवैरपि ॥ ७२ ॥
तैरावृतां दिशं प्रेक्ष्य पुरो घनकुलाशितैः । धनुरारोपयत्कोपं किंचिल्लक्ष्मीधरो भजन् ॥ ७३ ॥
तथा चास्फालितं सर्ववनमाकंपितं यथा । ज्वरश्च वनसत्वानां जज्ञे प्रकटवेपथुः ॥ ७४ ॥
संदधानं शरं वीक्ष्य लक्ष्मणं त्रस्तचेतसः । बभ्रमुश्चक्रतां प्राप्ता म्लेच्छा निश्चक्षुषो यथा ॥ ७५ ॥
ततःसाध्वससंपूर्णो म्लेच्छानामधिपो भृशं । अवतीर्य रथादेतौ प्रणम्य रचितांजलिः ॥ ७६ ॥

अब्रवीदस्ति कौशांबी नगरी प्रथिता प्रभुः । आहिताग्निर्द्विजस्तत्र नाम्ना विश्वानलः शुचिः ॥७७॥
प्रतिसंध्येति यज्जाया जातोहं तनयस्तयोः । रौद्रभूतिरिति ख्यातः शस्त्रद्यूतकलान्वितः ॥ ७८ ॥
बाल्यात्प्रभृति दुष्कर्म नित्यानुष्ठानकोविदः । प्राप्तश्चौर्ये कदाचिच्च शूले भेत्तुमभीप्सितः ॥ ७९ ॥
ध्वनिनैकेन तत्राहं श्रद्धानेन साधुना । मोचितो वेपमानांगः त्यक्त्वा देशमिहागतः ॥ ८० ॥
प्राप्तःकर्मानुभावेन काकोनदजनेशतां । भ्रष्टस्तिष्ठामि सद्वृत्तात्पशुभिः समतां गतः ॥ ८१ ॥
इयंतं यस्य मे कालं सैन्याढ्या अपि पार्थिवाः । चक्षुषो गोचरीभावमासन् शक्ता न सेवितुं ८२
सोहं दर्शनमात्रेण कृतो देवेन विक्लवः । धन्योस्मि वीक्षितौ येन भवंतौ पुरुषोत्तमौ ॥ ८३ ॥
शासनं यच्छतां नाथौ किं करोमि यथोचितं । शिरसा पादुके किं वा वहे पावनपंडिते ॥ ८४ ॥
विंध्योयं निधिभिः पूर्णो वरयोषिच्छतैस्तथा । भुजिष्यमिच्छतां देवौ मामतो निभृतं परं ॥८५॥
इत्युक्त्वा प्रणतिं कुर्वन् पुनरार्तिं परां गतः । पपात विह्वलो भूमौ छिन्नमूलस्तरुर्यथा ॥ ८६ ॥
कष्टावस्थां ततःप्राप्तं तमेवं राघवोऽवदत् । कृपालतापरिष्वक्तवीरकल्पमहातरुः ॥ ८७ ॥
उत्तिष्ठोत्तिष्ठ माभैषीर्वालिखिल्यं विबंधनं । कृत्वाऽऽनय द्रुतं प्राप्य सन्मानं परमं सुधीः ॥८८॥
तस्यैवाभिमतो भूत्वा सचिवः सज्जनान्वितः । विहाय संगतिं म्लेच्छैर्विषयस्य हितोऽभवत् ८९

एतच्चेत्कुरुषे सर्वमन्यथात्वविवर्जितं । ततस्ते विद्यते शांतिरद्यैव म्रियसेऽन्यथा ॥ ९० ॥
एवं प्रभो करोमीति कृत्वा प्रणतिमादृतः । महारथसुतं गत्वा मुमोच विनयान्वितः ॥ ९१ ॥
अभ्यंगोद्वर्त्य सुस्नानं भोजयित्वाश्वलंकृतं । आरोप्य स्यंदने नेतुमारेभे तं तदंतिकं ॥ ९२ ॥
स दध्यौ नीयमानः सन् विस्मयं परमं गतः । इतोऽपि गहनावस्था प्रायो मे भविष्यति ॥९३॥
कायं म्लेच्छो महाशत्रुः कुकर्मात्यंतनिर्दयः । क्वायमतिसन्मानो न मन्येद्यासुधारणं ॥ ९४ ॥
इति दीनमना गच्छन् सहसा पद्मलक्ष्मणौ । दृष्ट्वा परां धृतिं प्राप्तोवतीर्य सनमस्कृतिः ॥ ९५ ॥
अब्रवीत्तौ युवां नाथावागतावतिसुंदरौ । मम पुण्यानुभावेन मुक्तो येनास्मि बंधनात् ॥ ९६ ॥
गच्छ क्षिप्रं निजं धाम लभस्वाभीष्टसंगमं । तत्र नौ ज्ञास्यसीत्युक्ते वालिखिल्यसुधीर्गतः ॥९७॥
कृत्वा सुनिभृतं भृत्यं तस्य विश्वानलांगजं । यातौ सीतान्वितौ स्वेष्टं कृतिनौ रामलक्ष्मणौ ॥९८॥
वालिखिल्यस्तु सम्प्राप्तः समं रौद्रविभूतिना । स्वपुरस्यांतिकां क्षोणीं स्मरन् बांधवचेष्टितं ॥९९॥
प्रत्यासन्नं ततःकृत्वा विभूत्या परयान्वितं । पितरं निरगात्तुष्टा पुरात्कल्याणमालिनी ॥ १०० ॥
प्रतीतां सनमस्कारां तां समाधाय मस्तके । निजयाने पुनः कृत्वा प्रविष्टः कूवरं नृपः ॥१०१॥
पृथिवी महिषी तोषसंजातपुलका क्षणात् । पुरातनी तनुं भेजे कांतिसागरवर्तिनीं ॥ १०२ ॥

सिंहोदरप्रभृतयो नृपा प्रभृतयोखिलाः । गुणैः कल्याणमालायाः परमं विस्मयं गताः ॥ १०३ ॥

यद्रौद्रभूतिः सुचिरं विचित्रं । समार्जयच्चौर्यपरायणः स्वं ।

अनेकदेशप्रभवं विशालं । तद्वालिखिल्यस्य गृहं विवेश ॥ १०४ ॥

जातेऽस्य वाग्वर्तिनि रौद्रभूतौ । वशीकृते म्लेच्छसुदुर्गभूमौ ॥

सिंहोदरोऽपि प्रतिपन्नशंकः । स्नेहं ससन्मानमलंचकार ॥ १०५ ॥

सोयं समासाद्य परां विभूतिं । प्रसादतो राघवसत्तमस्य ॥

महारथी प्राणसमासमेतो । रविर्यथैवं शरदा रराज ॥ १०६ ॥

इत्यार्षे रविषेणाचार्यप्रोक्ते पद्मचरिते वालिखिल्योपाख्यानं नाम चतुर्स्त्रिशत्तमं पर्व ।

---

# अथ पंचत्रिंशत्तमं पर्व ।

अथ ते त्रिदशाभिख्याः काननं नंदनोपमं । विहरंतः सुखं प्राप्ता देशमत्यंतमुज्वलं ॥ १ ॥

मध्ये यस्य नदी भाति प्रसिद्धजलवाहिनी । तापीति विश्रुता नाना पक्षिवर्गानुनादिता ॥ २ ॥

अरण्ये तत्र निस्तोये सीतात्यंतश्रमान्विता । जगाद राघवं नाथ कंठशोषो ममोत्तमः ॥ ३ ॥
यथा भवशतैः खिन्नो भव्यो दर्शनमर्हतः । वांछत्येवमहं तीव्रतृष्णयाकुलिता जलं ॥ ४ ॥
इत्युक्ता वार्यमाणापि निषण्णा सुतरोरधः । रामेण जगदे देवि विषादं मागमः शुभे ॥ ५ ॥
आसन्नोयं महाग्रामो दृश्यते विकटालयः । उत्तिष्ठाशु प्रयामोऽत्र शिशिरं वारि पश्यति ॥ ६ ॥
एवमुक्त तया स्वैरं स्वैरं प्रास्थितया समं । प्राप्तौ तावरुणग्रामं महाधनकुटुंबिकं ॥ ७ ॥
आहिताग्निर्द्विजस्तत्र कपिलो नाम विश्रुतः । गेहे तस्यावतीर्णौ तौ यथाक्रममुपागते ॥ ८ ॥
अत्राग्निहोत्रशालायामपनीय श्रमं क्षणं । तद्ब्राह्मण्या जलं दत्तं पपौ सीता सुशीतलं ॥ ९ ॥
यावत्तिष्ठंति ते तत्र द्विजस्तावदरण्यतः । विल्वाश्वत्थपलाशैधोभारवाही समागतः ॥ १० ॥
दावानलसमं यस्य मानसं नित्यकोपिनः । कालकूटविषं वाक्यमुलूकसदृशं मुखं ॥ ११ ॥
कमंडलुशिखाकूर्चवालसूत्रादिभिः परं । बिभ्राणः कुटिलं वेषमुंछवृत्तिं भजन् किल ॥ १२ ॥
दृष्ट्वा तान्कुपितोऽत्यंतभ्रुकुटीकुटिलाननः । उवाच ब्राह्मणीं वाचा तक्षन्निव सुतीक्ष्णया ॥ १३ ॥
अयि पापे किमित्येषामिह दत्तं प्रवेशनं । प्रयच्छाम्यद्य ते दुष्टे बंधं गोरपि दुस्सहं ॥ १४ ॥
पश्यमे निस्त्रपा धृष्टाः केपि पांशुलपांडुका । अग्निहोत्रकुटीं पापा कुर्वंत्युपहतां मम ॥ १५ ॥

ततः सीताऽब्रवीत्पद्ममार्यपुत्र कुकर्मणः । अस्य द्मास्पदं दग्धं परमाक्रोशकारिणः ॥ १६ ॥
वरं पुष्पफलच्छन्नैः पादपैरुपशोभिते । सरोभिश्चातिविमलैः पद्मादिपिहितैर्वने ॥ १७ ॥
सारंगैरुषितं सार्धं क्रीडद्भिर्निजयेच्छया । श्रूयते नेदृशं यत्र नितांतं परुषं वचः ॥ १८ ॥
अस्मिन् राघव नाकाभे देशे धनसमुज्वले । समस्तो निष्ठुरो लोको ग्रामवासी विशेषतः ॥१९॥
विप्रस्य रूक्षया वाचा क्षोभितोऽसौ ततोऽखिलः । ग्रामः समागतो दृष्ट्वा तेषां रूपं सुरोपमं २०
अब्रवीद्ब्राह्मणकांतां पथिकाः क्षणमेककं । तिष्ठंतु किमिमे दोषं कुर्वंति विनयान्विताः ॥ २१ ॥
ततो निर्भर्त्स्य सकलं तं लोकं लोललोहितः । बभाषेतौ द्विजः प्राप सारमेयो गजाविव ॥२२॥
निष्क्रामतः परं गेहान्मदीयादपवित्रकौ । एवमादिवचोघातैर्लक्ष्मीवान् कुपितस्ततः ॥ २३ ॥
ऊर्ध्वं पादमधोग्रीवं कृत्वा तं ब्राह्मणाधमं । अब्रह्मण्यं प्रकूजंतं शोणितारुणलोचनं ॥ २४ ॥
भ्रमयित्वा क्षितौ यावदास्फालयितुमुद्यतः । रामेण वारितस्तावदिति कारुण्यधारिणा ॥ २५ ॥
सौमित्रे किमिदं क्लीवे प्रारब्धं भवतेदृशं । मारितेन किमेतेन जीवत्प्रेतेन ते ननु ॥ २६ ॥
मुंचैनं त्वरितं क्षुद्रं यावत्प्राणैर्न मुच्यते । अयशः परमेतस्मिंल्लभ्यते केवलं मृते ॥ २७ ॥
श्रमणा ब्राह्मणा गावः पशुस्त्रीबालवृद्धकाः । सदोषा अपि शूराणां नैते वध्याः किलोदिताः २८

इत्युक्त्वा मोचयित्वा तं कृत्वा लक्ष्मणमग्रतः । सीतयानुगतो रामः कुटीरान्निरगात्ततः ॥ २९ ॥
धिग् धिग् नीचसमासंगं दुर्वचःश्रुतिकारणं । मनोविकारकरणं महापुरुषवर्जितं ॥ ३० ॥
वरं तरुतले शीते दुर्गमे विपिने स्थितं । परित्यज्याखिलं ग्रंथं विहृतं भुवने वरं ॥ ३१ ॥
वरमाहारमुत्सृज्य मरणं सेविते सुखं । अवज्ञातेन नान्यस्य गृहे क्षणमपि स्थितं ॥ ३२ ॥
कुलेषु सरितामद्रेः कुक्षिष्वत्यंतहारिषु । स्थास्यामो न पुनर्भूयः प्रवेक्ष्यामः खलालयं ॥ ३३ ॥
निंदन्नेव खलासंगमभिमानं परं वहन् । निर्गत्य ग्रामतः पद्मो वनस्य पदवीं श्रितः ॥ ३४ ॥
घनकालस्ततःप्राप्तो नीलयन्नखिलं नभः । पटुगर्जितसंतानप्रतिनादितगह्वरः ॥ ३५ ॥
गृहनक्षत्रपटलमुपगुह्य समंततः । सरावविद्युदुद्योतं जहासेव नभःस्फुटं ॥ ३६ ॥
ग्रीष्मडामरकं घोरं समुत्सार्य घनाघनः । जगर्ज विद्युदंगुल्या प्रेषितामित्र तर्जयन् ॥ ३७ ॥
नभोंधकारितं कुर्वन् धाराभिर्नीलतोयदः । अभिषेक्तुं समारेभे सीतां गज इव श्रियं ॥ ३८ ॥
तिम्यंतस्ते ततोभ्यर्णं पृथुन्यग्रोधपादपं । उपसत्रुः पुरो गेहसमानस्कंधमुन्नतं ॥ ३९ ॥
इभकर्णोगणस्तेषामभिभूतोपि तेजसा । गत्वा स्वामिनमित्यूचे नत्वा विंध्यमुपाश्रितं ॥ ४० ॥
आगत्य नाकतः केऽपि मदीये नाथ सद्मनि । स्थिता यैस्तेजसैवाहं तस्माद्द्रुद्रासितो द्रुतं ॥४१॥

श्रुत्वा तद्वचनं स्मित्वा विनायकपतिःसमं । वधूभिः प्रास्थितो गंतुं निग्रोधं वरलीलया ॥ ४२ ॥
अधीश्वरः स यक्षाणां महाविभवसंगतः । रम्यकाननसंसक्तः क्रीडन्पूतनसंज्ञकः ॥ ४३ ॥
दूरादेव च तौ दृष्ट्वा महारूपौ गणाधिपः । प्रयुज्यावधिमज्ञासीद्बलनारायणाविति ॥ ४४ ॥
ततस्तदनुभावेन वात्सल्येन च भूयसा । क्षणेन नगरी तेषां तेन रम्या विनिर्मिता ॥ ४५ ॥
ततस्ते सुखसंपन्नं सुप्ताः किल सुचारुणा । प्रभाते गीतशब्देन प्रबोधं समुपागताः ॥ ४६ ॥
तल्पेऽवस्थितमात्मानमपश्यन् रत्नराजिते । प्रासादं च महारम्यं बहुभूमिकमुज्वलं ॥ ४७ ॥
देहोपकारणव्यग्रं परिवर्गं च सादरं । नगरं च महाशब्दशालगोपुरशोभितं ॥ ४८ ॥
तेषां महानुभावानां दृष्टेऽस्मिन् सहसा पुरे । न मनो विस्मयं प्राप तद्धि क्षुद्रविचेष्टितं ॥ ४९ ॥
अशेषवस्तुसंपन्नास्तत्र ते चारुचेष्टिताः । अवस्थानं सुखं चक्रुरमरा इव भोगिनः ॥ ५० ॥
यक्षाधिपेन रामस्य पुरी यस्मात्प्रकल्पिता । ततो महीतले ख्यातिं गता रामपुरीति सा ॥५१॥
प्रतीहारा भटा शूरा अमात्याः सप्तयो गजाः । पौराश्च विविधास्तस्यामयोध्यायामिवाभवन् ५२
कुशाग्रनगरेशोऽयं गणिनं पृष्टवानिति । तयोर्नाथ तथाभूतो स द्विजः किमुचेष्टितः ॥ ५३ ॥
उवाच च गणस्वामी शृणु श्रेणिक स द्विजः । प्रयातः प्रातरुत्थाय दात्रहस्तो वनस्थलीं ॥५४॥

भ्रमंश्च समिदाभ्यर्णमकस्मादूर्ध्वलोचनः । नातिदूरे पुरीं पृथ्वीमपश्यद्विस्मिताननः ॥ ५५ ॥
असिताभिः सिताभिश्च पताकाभिर्विराजितां। शरन्मेघसमानैश्च भवनैरतिभासुरैः ॥ ५६ ॥
पुंडरीकातपत्रेण मध्ये समुपलक्षितं । महाप्रासादमेकं च कैलासस्येव शावकं ॥ ५७ ॥
अचिंतयच्च घोरेषा, अटव्यासीन्मृगाश्रिता । यस्यां समित्कुशाद्यर्थं दुःखं पर्याटिषं सदा ॥५८॥
अस्मात्सेयमुत्तुंगशृंगमालोपशोभितैः । रत्नपर्वतसंकाशैर्विराजति पुरी गृहैः ॥ ५९ ॥
सरांस्यमूनि रम्याणि पद्मादिविहितानि च । दृश्यंते यानि नो पूर्वं मया दृष्टानि जातुचित् ६०
उद्यानानि सुरम्याणि सेवितानि जनै भृशं । दृश्यंते देव धामानि लक्षितानि महाध्वजैः ॥ ६१ ॥
वारणैः सप्तिभिर्गोभिर्महिषीभिश्च संकटा । अस्योपकंठधरणी घंटादिस्वनपूरिता ॥ ६२ ॥
किमेषा नगरी नाकादवतीर्णा भवेदिह । पातालादुद्गताहोश्वित्कस्यापि शुभकर्मणः ॥ ६३ ॥
स्वप्नमेवं नु पश्यामि मायेयं वत कस्याचित् । किंमु गंधर्वनगरं पित्तव्याकुलितोस्मि किं ॥ ६४ ॥
उपालिंगमिदं किं स्यात्प्रायेणास्यांतिकस्य मे । इति संचिंतयन् प्राप्तो विवादं परमं द्विजः॥६५॥
दृष्ट्वा च प्रमदामेकां नानालंकारधारिणीं । अपृच्छदुपसृत्येयं भद्रे कस्य पुरीत्यसौ ॥ ६६ ॥
सा जगौ जातु पद्मस्य पुरीयं किं न ते श्रुता । यस्य लक्ष्मीधरो भ्राता सीता च प्राणवल्लभा ६७

एतत्पश्यासि यद्विप्र पुर्या मध्ये महागृहं । शरदभ्रसमच्छायमत्रासौ पुरुषोत्तमः ॥ ६८ ॥
लोको दुर्लभदर्शन सर्वोननातिदुर्विधः । यच्छता वांछितं द्रव्यं जनितः पार्थिवोपमः ॥ ६९ ॥
विप्रोऽवोचदुपायेन केन पश्यामि सुंदरि । पद्मं सद्भावतः पृष्टा निवेदयितुमर्हसि ॥ ७० ॥
इत्युक्त्वा समिधाभारं निक्षिप्य भुवि सांजलिः । पपात पादयोस्तस्याः सा कस्य न मनोहरा ७१
ततोसौ कृपयाकृष्टा सुमाया नाम यक्षिणी । जगाद विप्रं परमं त्वयेदं साहसं कृतं ॥ ७२ ॥
अस्याः पुरः समासन्नां कथं त्वं भुवमागतः । आरक्षकैरलं घोरैर्नूनं नश्यति वीक्षितः ॥ ७३ ॥
अस्या द्वारत्रयं पुर्याः दुष्प्रवेशं सुरैरपि । अशून्यं सर्वदा वीरैः रक्षकैः सुनियामकैः ॥ ७४ ॥
सिंहवारणशार्दूलतुल्यवक्त्रैर्महोज्ज्वलैः । एभिर्विभीषिता मृत्युं मानुषा यांत्यसंशयं ॥ ७५ ॥
पूर्वद्वारमदो यत्तु तस्य पश्यासि यान्वहिः । प्रासादानंतिकानेतान् वलाकाच्छादनच्छवीन् ॥७६॥
मणितोरणरम्येषु विविधध्वजराजिषु । अर्हताभिंद्रवंद्यानाममीषु प्रतियातनाः ॥ ७७ ॥
सामायिकं पुरस्कृत्य तासां यस्तवनं नरः । नमोर्हत्सिद्धनिस्वानपूर्वं पठति भावतः ॥ ७८ ॥
गुरूपदेशयुक्तोऽसौ सम्यग्दर्शनराक्षितः । विशतींद्रककुप् द्वारं हन्यतेत्र नमस्कृतिः ॥ ७९ ॥
अणुव्रतधरो यो ना गुणशीलविभूषितः । तं रामः परया प्रीत्या वांछितेन समर्चति ॥ ८० ॥

ततस्तस्या वचःश्रुत्वा द्विजोसावमृतोपमं । जगाम परमं हर्षं लब्धोपायं धनागमे ॥ ८१ ॥
नमस्कारं च कृत्वास्या भूयोभूयस्तुतिं तथा । रोमांचार्चितसर्वांगः परमाद्भुतभावितः ॥ ८२ ॥
मुनेश्चारित्रसूरस्य गत्वासन्नं कृतांजलिः । प्रणम्य शिरसा पृच्छदणुव्रतधरक्रियां ॥ ८३ ॥
ततस्तेन समुद्दिष्टं धर्मं सद्मनिवासिनां । स जग्राहानुयोगांश्च शुश्राव चतुरःसुधीः ॥ ८४ ॥
धनलोभाभिभूतस्य धर्मं शुश्रूषतोस्य सः । ग्रहणे परमार्थस्य परिणाममुपागतः ॥ ८५ ॥
अवगम्य ततो धर्मं द्विजोवोचत्सुमानसः । नाथ तेद्योपदेशेन चक्षुरुन्मीलितं मम ॥ ८६ ॥
तृषार्तेनेव सत्तोयं छायेवाश्रयकांक्षिणा । क्षुधार्तेनेव मिष्टान्नं रोगिणेव सुभेषजं ॥ ८७ ॥
दुष्पथप्रतिपन्नेन वर्त्मेवेप्सितदेशगं । यानपात्रमिवांभोधौ व्याकुलेन निमज्जतां ॥ ८८ ॥
मयेदं शासनं जैनं सर्वदुःखविनाशनं । लब्धं भवत्प्रसादेन दुर्लभं पुरुषाधमैः ॥ ८९ ॥
त्रैलोक्यऽपि न मे कश्चिद्भवता विद्यते समः । येनायमीदृशो मार्गो तोपितो जिनदेशनः ॥ ९० ॥
इत्युक्त्वा शिरसा पादौ वंदित्वांजलियोगिनः । गुरुं प्रदक्षिणीकृत्य द्विजःस भवनं गतः ॥ ९१ ॥
जगाद वातिहृष्टस्तां प्रसन्नविकचेक्षणः । दायिते परमाश्चर्यं गुरोरद्य मया श्रुतं ॥ ९२ ॥
श्रुतं तव न तत्पित्रा जनकनाथ वा पितुः । किं वात्र बहुभिः प्रोक्तैर्गोत्रेणापि न ते श्रुतं ॥ ९३ ॥

दृष्टं ब्राह्मणि यातेन यदरण्यं मयाद्भुतं । तद्गुरोरुपदेशेन नेदानीं विस्मयाय मे ॥ ९४ ॥
किं किं भो ब्राह्मण ब्रूहि दृष्टं किंवा त्वया श्रुतं । उक्तोऽवोचन्न शक्नोमि हर्षात्कथयितुं प्रिये ९५
आदरेणानुयुक्तश्च कौतिकिन्या पुनः पुनः । विप्रोऽवोचत श्रृण्वार्ये यन्मया श्रुतमद्भुतं ॥ ९६ ॥
समिदर्थं प्रयातेन वनं तस्य समीपतः । दृष्टा पुरी मया रम्या यत्रासीद्गहनं वनं ॥ ९७ ॥
तदासन्ने मया चैका दृष्टा नारी विभूषिता । नूनं सा देवता कापि मनोहरणभाषिता ॥ ९८ ॥
पृष्टा च सा मयाख्यातं तया रामपुरीति च । ददाति श्रावकेभ्योऽत्र किल रामो महद्धनं ॥९९॥
ततो गत्वा मया साधोर्जिनेंद्रवचनं श्रुतं । आत्मा मे तर्पितस्तेन कुदृष्टिपरितापितः ॥ १०० ॥
मुनयो यत्समाश्रित्य तप्यंते सुधियस्तपः । त्यक्त्वा परिग्रहं सर्वं मुक्त्यालिंगनलालसाः ॥१०१॥
सोऽर्हद्धर्मो मया लब्धस्त्रैलोक्यैकमहानिधिः । अमी यतो बहिर्भूताः क्लिश्यंतेऽन्यवादिनः ॥ १०२ ॥
यथाभूतो मुनेर्धर्मः श्रुतो धर्मेण तादृशः । ब्राह्मण्यै कथितः सर्वो मलवर्जितचेतसा ॥ १०३ ॥
ब्राह्मणी विनिशम्यैतं सुशर्मा वाक्यमब्रवीत् । मयापि त्वत्प्रसादेन लब्धो धर्मो जिनोदितः १०४
विधेः पश्य मया योगं मोहाद्विषफलार्थिना । वांछेनापि त्वया लब्धमर्हन्नामरसायनं ॥ १०५ ॥
मयासीन्मंदधीभाजा मणिर्हस्तगतो यथा । निजांगणगतः साधुरपमानमुपाहृतः ॥ १०६ ॥

उपवासपरिश्रांतश्रमणं तं निरंबरं । निराकृत्यान्नवेलायां मार्गोन्यस्यैव वीक्षितः ॥ १०७ ॥
अर्हंतं समतिक्रम्य पाकशासनवंदितं । ज्योतिष्कव्यंतरादीनां शिरसा प्रणतिः कृता ॥ १०८ ॥
अहिंसानिर्मलं सारमर्हद्धर्मरसायनं । अज्ञानात्समतिक्रम्य विषमं भक्षितं विषं ॥ १०९ ॥
मानुषद्वीपमासाद्य त्यक्त्वा साधुपरीक्षितं । धर्मरत्नं कृतः कष्टं विभीतकपरिग्रहः ॥ ११० ॥
सर्वभक्षप्रवर्तेषु दिवारात्रौ च भोजिषु । अव्रतेषु विशीलेषु दत्तं फलविवर्जितं ॥ १११ ॥
यं किलातिथिवेलायामागतं विभवोचितं । यो नार्चयति दुर्बुद्धिस्तस्य धर्मो न विद्यते ॥ ११२ ॥
परित्यक्तोत्सवतिथिः सर्वस्वैकांतनिस्पृहः । निकेतरहितः सोयमतिथिः श्रमणः स्मृतः ॥११३॥
येषां न भोजनं हस्ते नाप्यासन्नपरिग्रहः । ते तारयंति निर्ग्रंथाः पाणिपात्रपुटासिनः ॥ ११४ ॥
स्वशरीरेऽपि निस्संगा ये लुभ्यंति न जातुचित् । ते निष्परिग्रहा ज्ञेया मुक्तिलक्षणभूषिताः ११५
एवमुद्गतसद्दृष्टिः कुदृष्टिमलवर्जिता । सुशर्मा शुशुभे पत्यौ भरणीव बुधे परं ॥ ११६ ॥
पादमूले ततो नीत्वा गुरोस्तस्यैव सादरं । अणुव्रतानि सामोदा ब्राह्मणी तेन लंभिता ॥ ११७ ॥
विज्ञाय कपिलं रक्तं परमं जिनशासने । कुलान्याशीविषोग्राणि विप्राणां भेजिरे समं ॥ ११८ ॥
मुनिसुव्रतनाथस्य संप्राप्य सुदृढं मतं । बभूवुः श्रावकास्तीव्रा ऊचुश्चैव सुबुद्धयः ॥ ११९ ॥

कर्मभारगुरूभूता मानोत्तानितमस्तकाः । स्तोकेन नरकं घोरं न याताः स्म प्रमादिनः ॥१२०॥
अज्ञातमिदमप्राप्तं जन्मांतरशतेष्वपि । जिनेंद्रशासनं ब्रह्म कृच्छ्रात्प्राप्तं सुनिर्मलं ॥ १२१ ॥
ध्यानाशशुक्षिणीविद्धे मनऋत्विक्समाहिताः । स्वकर्मसमिधोभावसर्पिषा जुहुमोधुना ॥ १२२ ॥
इति केचित्समाधाय मनःसंवेगनिर्भराः । विरक्ताः सर्वसंगेभ्यो बभूवुः श्रमणोत्तमाः ॥ १२३ ॥
सागारधर्मरक्तस्तु कपिलः परमक्रियः । कदाचिद्ब्राह्मणीमूचे सदाभिप्रायवर्तिनीं ॥ १२४ ॥
कांते रामपुरीं किं नो व्रजामोद्य तमूर्जितं । विशुद्धचेष्टितं द्रष्टुं रामं राजीवलोचनं ॥ १२५ ॥
आशापरायणं नित्यमुपायगतमानसं । दारिद्र्यवारिधौ मग्नमाधूनं कुक्षिपूरणे ॥ १२६ ॥
जनमुत्तारयत्येष किल भव्यानुकंपकः । इति कीर्तिर्भ्रमत्यस्य निर्मलाल्हादकारिणी ॥ १२७ ॥
उत्तिष्ठैवं गृहाणैवं प्रिये पुष्पकरंडकं । करोम्यहममपि स्कंधे सुकुमारमिमं शिशुं ॥ १२८ ॥
एवमुक्त्वा तथा कृत्वा दंपती संमदान्वितौ । स्वशक्त्या गंतुमुद्युक्तौ शुद्धवेषविभूषितौ ॥१२९॥
व्रजतोश्च तयोरुग्रा उत्तस्थुः पन्नगाः पथि । दंष्ट्राकरालवक्त्राश्च वेतालास्तारहासिनः ॥ १३० ॥
एवमादीनि वस्तूनि भीषणान्यवलोक्य तौ । निष्कंपहृदयौ भूत्वा स्तुतिमेतामुपागतौ ॥ १३१ ॥
नमस्त्रिलोकवंद्येभ्यो जिनेभ्यः सततं त्रिधा । उत्तीर्णभवपंकेभ्यो दातृभ्यः परमं शिवं ॥ १३२ ॥

एतयोः स्तुवतोरेवं विदित्वा जिनभक्तितां । भेजिरे प्रशमं यक्षास्तौ च प्राप्तौ जिनालयं ॥१३३॥
ततो नमो निषिध्याया इत्युक्त्वा रचितांजली । कृत्वा प्रदक्षिणं स्तोत्रमुदचीचरतामिदं ॥१३४॥
विहाय लौकिकं मार्गं महादुर्गतिदुःखदं । भवंतं शरणं नाथ चिरेण समुपागतः ॥ १३५ ॥
चतुर्भिर्विंशतिं युक्तामक्षराणां महात्मनां । उत्सर्पिण्यवसर्पिण्योर्वंदे भूतभविष्यतां ॥ १३६ ॥
पंचस्वैरावताख्येषु भरताख्येषु पंचसु । जिनान्नमामि वास्येषु तान्नमामि जिनांस्त्रिधा ॥१३७॥
यैः संसारसमुद्रस्य कृते तरणतारणे । त्रिकालं सर्ववास्येषु तान्नमामि जिनान् त्रिधा ॥ १३८ ॥
मुनिसुव्रतनाथाय तस्मै भगवते नमः । त्रैलोक्ये शासनं यस्य सुविशुद्धं प्रकाशते ॥ १३९ ॥
इति कृत्वा स्तुतिं जानु मस्तकस्पृष्टभूतलौ । नेमतुस्तौ जिनं भक्त्या परिहृष्टतनूरुहौ ॥ १४० ॥
ततोसौ कृतकर्तव्यो रक्षैः सौम्यैः प्रियंवदैः । अनुज्ञातः समं पत्न्या द्रष्टुं हलिनमुद्ययौ ॥१४१॥
राजमार्गे द्विसंकाशान् प्रासादान् विमलत्विषः । ब्राह्मण्यै दर्शयन् याति दिव्यनारीसमाकुलान् ॥
ऊचे च कुंदसंकाशैः सर्वकामगुणान्वितैः । राजते भवनैर्यस्य पुरीयं स्वर्गसन्निभा ॥ १४३ ॥
तस्यैतद्भवनं भद्रे प्रांतप्रासादवेष्टितं । अभिरामस्य रामस्य पुर्यां मध्ये विराजते ॥ १४४ ॥
ब्रुवन्निति महाहृष्टः स विवेश च तद्गृहं । दृष्ट्वा च लक्ष्मणं दूराद्भृशमाकुलतां गतः ॥ १४५ ॥

दध्यौ संजातकंपश्च सोयमिंदीवरप्रभः । व्यथितो दुर्विदग्धोहं चित्रैर्येन तदावधेः ॥ १४६ ॥
कर्णयोरतिदुःखानि भाषितानि महाखले । तानि कृत्वा तदा पापे जिह्वे निस्सर सांप्रतं ॥१४७॥
किं करोमि क्व गच्छामि विवरं प्रविशामि किं । अस्मिन् शरणहीनस्य भवेच्छरणमद्य कः १४८
अवस्थितोयमत्रेति यदि मे विदितो भवेत् । समुल्लंघ्योत्तरामाशां देशत्यागः कृतो भवेत् १४९
एवमुद्वेगमापन्नो विहाय ब्राह्मणीं द्विजः । प्रपलायितुमुद्युक्तो लक्ष्मणेन विलोकितः ॥ १५० ॥
स्मित्वा च स जगादायं कुतो विप्रः समागतः । वनसंवर्धितात्मेव किमित्याकुलतामितः १५१
समाश्वासमिमं नीत्वा द्रुतमानय तं द्विजं । पश्यामस्तावदेतस्य चेष्टितं किमयं वदेत् ॥ १५२ ॥
न भेत्तव्यं न भेत्तव्यं निवर्तस्वेति चोदितः । अधिगम्य समाश्वासं निवृत्तस्खलितक्रमः ॥१५३॥
उपसृत्य भयं त्यक्त्वा प्रसृतो धवलांबरः । पुष्पांजलिस्तयोरग्रे स्थित्वा स्वस्तीत्यशब्दयत् १५४
ततो लब्धासनासीनो निकटस्थांगनो द्विजः । ऋग्भिः स्तवनदक्षाभिरस्तौषीद्रामलक्ष्मणौ १५५
ततः पद्मो जगादैव तां नः कृत्वा विमानतां । वद सांप्रतमागत्य कस्मात्पूजयसि द्विजः १५६
सोऽब्रवीन्न मया ज्ञातं त्वं प्रच्छन्नमहेश्वरः । मोहाद्विमानितस्तेन भस्मच्छन्न इवानिलः ॥१५७॥
स्थितिरेषा जगन्नाथ लोके स्थावरजंगमे । धनवान् पूज्यते नित्यं यथादित्यो हिमागमे॥१५८॥

अधुना त्वं मया ज्ञातः सोसि नान्यः कदाचन । द्रविणानीह पूज्यंते न भवान् पद्म पूज्यते ॥
नित्यमर्थयुतं देव मानयंति जना जनं । त्यजंत्यर्थपरित्यक्तं निष्प्रयोजनसौहृदं ॥ १६० ॥
यस्यार्थास्तस्य मित्राणि यस्यार्थास्तस्य बांधवाः । यस्यार्थाः स पुमाँल्लोके यस्यार्थाः स च पंडितः ॥
अर्थेन विप्रहीनस्य न मित्रं न सहोदरः । तस्यैवार्थसमेतस्य परोपि स्वजनायते ॥ १६२ ॥
सार्थो धर्मेण यो युक्तो सो धर्मो यो दयान्वितः । सा दया निर्मला ज्ञेया मांसं यस्यां न भुज्यते ॥
मांसाशनान्निवृत्तानां सर्वेषां प्राणधारिणां । अन्या मूलेन संपन्ना प्रशस्यंते निवृत्तयः ॥ १६४ ॥
राजन् विचित्ररूपोयं लोको मानुषलक्षितः । मादृशो ज्ञायते नैव यथाभूतोऽत्र यो जनः ॥१६५॥
आस्तां तावद्भवानत्र वंद्यते ये भवद्विधैः । पराभवं विमूढेभ्यो लभंते तेऽपि साधवः ॥ १६६ ॥
पूर्वं सनत्कुमाराख्यः किं ते ज्ञातो न चक्रभृत् । महर्द्धयः सुरा यस्य रूपं द्रष्टुमिहागताः॥१६७॥
सोऽपि श्रामण्यमासाद्य संप्राप्तः परिभूततां । पर्यटन्न क्वचिल्लेभे भिक्षामाचारकोविदः ॥ १६८ ॥
वनस्पत्युपजीविन्या तर्पितः सोन्यदा मुनिः । पंचाश्चर्यं जगुश्चर्यमाददे विजये पुरे ॥ १६९ ॥
सुभूमश्चक्रभृद्भूत्वा करं कटकभास्वरं । केयूरभूषितभुजो वदरार्थमढौकयत् ॥ १७० ॥
वदरं नैकमप्यस्मै निःस्वोसावददत्ततः । अनभिज्ञो विशेषस्य विशेषं कमवाप्तवान् ॥ १७१ ॥

अयमन्यश्च विवशो जनैः स्वकृतभोगिभिः । न योवगम्यते यत्र न स तत्र जनोर्च्यते ॥ १७२ ॥
न कृता मंदभागेन कस्मादभ्यागतक्रिया । तदा मयेति मेद्यापि तप्यते मानसं भृशं ॥ १७३ ॥
रूपमेवमलं कांतं युष्माकमवलोकयन् । भृशं क्रुद्धोऽपि को नाम न ययावतिविस्मयं ॥ १७४ ॥
एवमुक्त्वा शुचा ग्रस्तं रुदंतं कपिलं गिरा । शुभयासांत्वयद्रामः सुशर्माणं च जानकी ॥१७५॥
ततो हेमघटांभोधिः किंकरै राघवाज्ञया । कपिलः श्रावकः प्रीत्या स्नापितः सह भार्यया १७६
परमं भोजितश्चान्नं वस्त्रै रत्नैश्च भूषितः । सुभूरिधनमादाय जगाम निजमालयं ॥ १७७ ॥
जनानां विस्मयकरं सर्वोपकरणान्वितं । भोगं यद्यपि जातोयं तथापि सुविचक्षणः ॥ १७८ ॥
सन्मानविशिखैर्विद्धो दष्टो गुणमहोरगैः । उपचारहतात्मासौ धृतिं न लभते द्विजः ॥ १७९ ॥
दध्यौ चाहं पुरा यत्र स्कंधन्यस्तैधभारकः । यथा शोषितदेहस्स तुषितोऽत्यंतदुर्विधः ॥ १८० ॥
ग्रामे तत्रैव जातोऽस्मि पश्य यक्षाधिपोपमः । रामदेवप्रसादेन चिंतादुःखविवर्जितः ॥ १८१ ॥
आसीन्मे शीर्णपतितमनेकच्छिद्रजर्जरं । काकाद्यशुचिसंलिप्तं गृहं गोमयवर्जितं ॥ १८२ ॥
अधुना धेनुभिर्व्याप्तं बहुप्रासादसंकुलं । रामदेवप्रसादेन प्राकारपरिमंडलं ॥ १८३ ॥
हा मया पुंडरीकाक्षौ भ्रातरौ गृहमागतौ । निर्भर्त्सितौ विना दोषं तौ मृगांकनिभाननौ॥१८४॥

यद्ग्रीष्मातपतप्तांगौ समं देव्या विनिर्गतौ । तन्मे प्रतिष्ठितं शल्यं हृदये प्रचलत्सदा ॥ १८५ ॥
तावन्मे नास्ति दुःखस्य छेदो यावदिदं गृहं । परित्यज्य निरारंभः प्रव्रजिष्याम्यसंशयं ॥१८६॥
उपलभ्यास्य वैराग्यं बंधुवर्गः ससंभ्रमः । धाराभिरुत्सजास्रं दीनः साकं सुशर्मणा ॥ १८७ ॥
निरीक्ष्य स्वजनं विप्रो निमग्नं शोकसागरे । अपेक्षापेतया बुद्ध्या निर्जगाद शिवोत्सुकः ॥१८८॥
विचित्रस्वजनस्नेहैरत्युत्तुंगमनोरथैः । मूढोयं दह्यते लोकः किं न जानाति भो जनः ॥ १८९ ॥
इति संवेगमापन्नः प्रियां दुःखेन मूर्छितां । विहाय बंधुलोकं च बहुविक्लवकारिणं ॥ १९० ॥
अष्टादश सहस्राणि धेनूनां सिततेजसां । रत्नपूर्णं च भवनं दासीयोषित्समाकुलं ॥ १९१ ॥
सुशर्मायां समारोप्य तनयं द्रविणं तथा । बभूव कपिलः साधुर्निरारंभो निरंबरः ॥ १९२ ॥
सद्यानंदमतेः शिष्यः सुप्रतीतस्तपोधनः । चकार गुरुतां तस्य गुणशीलमहार्णवः ॥ १९३ ॥

विजहार महापतस्ततः । कपिलश्चारुचरित्रधीरधीः ॥
परमार्थनिविष्टमानसः । श्रमणश्रीपरिवीतविग्रहः ॥ १९४ ॥
य इदं कपिलानुकीर्तनं । पठति प्रह्वमतिः शृणोति वा ॥
उपवाससहस्रसंभवं । लभतेऽसौ रविभासुरः फलं ॥ १९५ ॥

इत्यार्षे रविषेणाचार्यप्रोक्ते पद्मचरिते कपिलोपाख्यानं नाम पंचत्रिंशत्तमं पर्व ।

# अथ षट्त्रिंशत्तमं पर्व ।

ततोनुक्रमतः काले विकालप्रतिमे गते । घोरांधकारसंरुद्धे विद्युच्चकितभीषणे ॥ १ ॥
जातायां सुप्रसन्नायां शरदि प्रीतिनिर्भरः । ऊचे यक्षाधिपः पद्मं प्रस्थातुं कृतमानसं ॥ २ ॥
क्षंतव्यं देव यत्किंचिदस्माकमिति दुष्कृतं । विधातुं शक्यते केन योग्यं सर्वं भवादृशां ॥ ३ ॥
इत्युक्ते रामदेवोऽपि तमूचे गुह्यकाधिपं । त्वयापि निखिला स्वस्य क्षंतव्या परतंत्रता ॥ ४ ॥
सुतरां तेन वाक्येन जातः सत्तमभावनः । यक्षाणामधिपो नत्वा संभाष्य विपुलक्रियं ॥ ५ ॥
हारं स्वयंप्रभाभिख्यं ददौ पद्माय सोद्भुतं । उद्यद्दिनकराकारे हरये मणिकुंडले ॥ ६ ॥
चूडामणिं सुकल्याणं सीतायै विलसत्प्रभं । महाविनोददक्षां च वीणामीप्सितनादिनीं ॥ ७ ॥
स्वेच्छया तेषु यातेषु यक्षराजः पुरीकृतां । मायां समहरत्किंचिद्दधानः शोकितामिव ॥ ८ ॥
बलदेवोपि कर्तव्यकरणाच्च ससम्मदः । अमन्यत परिप्राप्तमुदारं शिवमात्मनः ॥ ९ ॥
पर्यटंतो महीं स्वैरं नानारसफलाशिनः । विचित्रसंकथासक्ताः रममाणाः सुरा इव ॥ १० ॥
उल्लंघ्य सुमहारण्यं द्विपसिंहसमाकुलं । जनोपभुक्तमुद्देशं वैजयंतपुरं गताः ॥ ११ ॥

ततोऽस्तमागते सूर्ये दिक्चक्रे तमसावृते । नक्षत्रमंडलाकीर्णे संजाते गगनांगणे ॥ १२ ॥
अपरोत्तरदिग्भागे क्षुद्रलोकभयावहे । यथाभिरुचिते देशे ते पुरो निकटे स्थिताः ॥ १३ ॥
अथात्र नगरे राजा प्रसिद्धः पृथिवीधरः । इंद्राणी महिषी तस्य योषिद्गुणसमन्विता ॥ १४ ॥
तनया वनमालेति तयोरत्यंतसुंदरी । बाल्यात्प्रभृति सा रक्ता लक्ष्मणस्य गुणश्रुते ॥ १५ ॥
श्रुत्वानरण्यपुत्रस्य प्रव्रज्यासमयं वचः । रक्षितुं क्वापि निर्यातं रामं लक्ष्मणसंयुतं ॥ १६ ॥
ध्यात्वेंद्रनगरेशस्य बालमित्राय सूनवे । सुंदरायातियोग्याय पितृभ्यां सा निरूपिता ॥ १७ ॥
तं च विज्ञाय वृत्तांतं हृदयस्थितलक्ष्मणा । विरहाद्भयमापन्ना चिंतामेवमुपागता ॥ १८ ॥
अंशुकेन वरं कंठं विवेष्ट्यासज्ज्य पादपे । मृत्युं प्राप्तास्मि नान्येन पुरुषेण समागमं ॥ १९ ॥
विधिच्छलेन केनापि गत्वारण्यं दिनक्षये । ध्रुवमद्यैव यास्यामि मृत्युं विघ्नविवर्जितं ॥ २० ॥
प्रयाहि भगवन् भानो संप्रेषय निशां द्रुतं । कृतांजलिरिमं दीना पादयोः प्रपतामि ते ॥ २१ ॥
शर्वरी भण्यतां यात्वा कांक्षंती दुःखभागिनी । संवत्सरसमं वेत्ति दिनं द्राग्गम्यतामिति ॥२२॥
इति संचित्य सा बाला गतेऽस्तं तिग्मतेजसि । सोपवासा समासाद्य पितृभ्यामनुमोदनं ॥२३॥
प्रवरं रथमारुह्य सखीजनसमावृता । जगाम परया लक्ष्म्या वनदेवीं किलार्चितुं ॥ २४ ॥

यस्यां रात्रौ वनोद्देशे यत्र ते प्रथमं स्थिता । तस्यामेव तमेवैषा गता दैवनियोगतः ॥ २५ ॥
अरण्यदेवतापूजा तस्मिन् किल विनिर्मिता । सुप्तश्च सकलो लोको निराशंकः कृतक्रियः ॥२६॥
निश्शब्दवननिक्षेपामतो वनमृगीव सा । निष्क्रम्य शिविरात्तस्मात्प्रतस्थे भयवर्जिता ॥ २७ ॥
ततस्तस्या समाघ्राय गंधं परमसौरभं । एवं सुनुः सुमित्राया दध्यौ सम्मदमुद्वहन् ॥ २८ ॥
ज्योतिरेखेव काप्येषा मूर्तिरत्रोपलक्ष्यते । कुमार्या श्रेष्ठया भाव्यमनया कुलजातया ॥ २९ ॥
महता शोकभारेण परिपीडितमानसा । अपश्यंती परं दुःखवारणोपायमुन्मनाः ॥ ३० ॥
अजातचिंतिता नूनमेषात्मानं जिघांसति । पश्यामि तावदेतस्याश्चेष्टामंतर्हितो भवन् ॥ ३१ ॥
इति संचित्य निश्शब्दो भूत्वा वटतरोरधः । तस्थौ कल्पद्रुमस्येव त्रिदशः कौतुकान्वितः ॥३२॥
तमेव पादपं सापि प्राप्ता हंसवधूगतिः । नतेव स्तनभारेण चंद्रवक्त्रा तनूदरी ॥ ३३ ॥
लक्ष्मणस्तां तथाभूतां दृष्ट्वा चिंतयदुक्तिभिः । वेद्मि तात्रादिमां सम्यक् कुतःकृत्यं भविष्यति ३४
अंशुकेनांबुवर्णेन कृत्वा पाशं तु कन्यका । जगादैवं गिरा योगिमनोहरणयोग्यया ॥ ३५ ॥
एतत्तरुनिवासिन्यः श्रृणुताहो सुदेवताः । भवतीभ्यो नमाम्येषा प्रसादं क्रियातां मयि ॥ ३६ ॥
वाच्यो मद्वचनादेवं भवंतीभिः प्रयत्नतः । कुमारो लक्ष्मणो दृष्ट्वा वनेस्मिन् विचरन् ध्रुवं ॥३७॥

यथा त्वद्विरहे बाला वनमाला सुदुःखिता । त्वयि मानसमारोप्य प्रेतलोकमुपागता ॥ ३८ ॥
अंशुकेन समालंब्य स्वं सा न्यग्रोधपादपे । त्वन्निमित्तमसून्तन्वी त्यजंत्यस्माभिरीक्षिता ॥३९॥
एवमुक्तं त्वया नाथ यदि मे नात्र जन्मनि । समागमकृतोन्यत्र प्रसादं कर्तुमर्हसि ॥ ४० ॥
एवं निगद्य शाखायां समर्पयति पाशकं । संभ्रांतश्च समालिंग्य सौमित्रिरिदमब्रवीत् ॥ ४१ ॥
अयि मुग्धे सुकंठेऽस्मिन्मद्भुजालिंगनोचिते । कस्मादंशुकपाशोयं त्वया सुमुखि सज्ज्यते ॥४२॥
अहं स लक्ष्मणो मुंच पाशं परमसुंदरि । यथाश्रुतं निरीक्षस्व न चेत्प्रत्येषि बालिके ॥ ४३ ॥
इत्युक्त्वा पाशमेतस्याः करात्सांत्वनकोविदः । जहार लक्ष्मणः फेनपुंजं तामरसादिव ॥ ४४ ॥
ततोऽसौ त्रपया युक्ता दृष्ट्वा मंथरचक्षुषा । लक्ष्मणं नेत्रचौरेण रूपेण परिलक्षितं ॥ ४५ ॥
परं विस्मयमापन्ना चिंतामेवमुपागता । ईषद्वेपथुना युक्ता नवसंगमजन्मना ॥ ४६ ॥
किमयं वनदेवीभिः प्रसादो जनितो मम । कारुण्यमुपयाताभिः संदेशवचनैः परं ॥ ४७ ॥
सोयं यथाश्रुतो नाथः संप्राप्तो दैवयोगतः । भवेद्येन मम प्राणाः प्रयांतो विनिवारिताः ॥४८॥
इति संचिंतयंती सा किंचित्प्रस्वेदधारिणी । लक्ष्मीधरसमाश्लेषं लब्ध्वात्यंतमराजत ॥ ४९ ॥
ततो मृदुमहामोदकुसुमोदारसंस्तरे । प्रबुद्धो राघवश्चक्षुर्लक्ष्मणार्थमुदीरयन् ॥ ५० ॥

अपश्यंश्च समुत्थाय पप्रच्छ जनकात्मजां । प्रदेशे लक्ष्मणो देवि नैतस्मिन् दृश्यते कुतः ॥ ५१ ॥
प्रदोषे संस्तरं कृत्वा सोस्माकं पुष्पपल्लवैः । आसीदनतिदूरस्थः कुमारो ह्यत्र नेक्ष्यते ॥ ५२ ॥
नाथ वाह्वयतां तावदिति तस्यां कृतध्वनौ । क्रमादत्युच्चया वाचा वचो व्याहृतवानिति ॥ ५३ ॥
एह्यागच्छ क्व यातोऽसि भद्र लक्ष्मण लक्ष्मण । प्रयच्छ वचनं तात चरितं बालकानुज ॥ ५४ ॥
अयमायामि देवेति दत्वास्मै संभ्रमी वचः । वनमालासमेतोसौ ज्येष्ठस्यांतिकमागतः ॥ ५५ ॥
अर्धरात्रे तदा स्पष्टे निशानाथः समुद्ययौ । ववौ कुमुदगर्भात्पेवायुः सामोदशीतलः ॥ ५६ ॥
ततः पल्लवकांताभ्यां हस्ताभ्यां रचितांजलिः । अंशुकावृतसर्वांगा त्रपाविनमितानना ॥ ५७ ॥
ज्ञातनिश्शेषकर्तव्या बिभ्राणा विनयं परं । बालावंदत रामस्य सीतायाश्च क्रमद्वयं ॥ ५८ ॥
साद्वितीयं ततो दृष्ट्वा सीता लक्ष्मणमब्रवीत् । कुमार सह चंद्रेण समवायस्त्वया कृतः ॥ ५९ ॥
कथं जानासि देवीति पद्मेनोक्ता जगाद सा । चेष्टया देव जानामि श्रृणु तुल्यप्रवृत्तया ॥ ६० ॥
ज्योत्स्नया सहितश्चंद्रो यस्मिन् काले समागतः । लक्ष्मीधरोऽपि तत्रैव सहितो बालयानया ६१
यथा ज्ञापयसि स्पष्टमेवमेतदिति ब्रुवन् । लक्ष्मीधरोऽतिके तस्थौ ह्रिया किंचिन्नताननः ॥६२॥
उत्फुल्लनेत्रराजीवाः प्रमोदार्पितचेतसः । प्रसन्नवक्त्रतारेशाः सुशीला विस्मयान्विताः ॥ ६३ ॥

कथाभिः स्मितयुक्ताभिः याताभिः स्थानयुक्ततां । ते तत्र त्रिदशच्छाया नष्टनिद्राः सुखं स्थिताः ॥
सख्योत्र वनमालायाः समये बोधमागताः । शयनीयं तथा शून्यं ददृशुस्त्रस्तमानसाः ॥ ६५ ॥
ततोऽश्रुपूर्णनेत्राणां गवेषण्याकुलात्मनां । तासां हाकारशब्देन प्रबोधं भेजिरे भटाः ॥ ६६ ॥
उपलभ्य च वृत्तातं सन्नह्यारूढसप्तयः । शूराः पदातयश्चान्ये कुंतकार्मुकपाणयः ॥ ६७ ॥
दिशः सर्वा समास्तीर्य दधावुद्भ्रांतमानसाः । भीतिप्रीतिसमायुक्ताः समीरस्येव शावकाः ॥६८॥
ततः कैरपि ते दृष्टाः समेता वनमालया । निवेदिताश्च शेषस्य जनस्य जववाहनैः ॥ ६९ ॥
ज्ञातनिश्शेषवृत्तांतैस्तैरलं सम्मदान्वितैः । पृथिवीधरराजस्य कृतं दिष्ट्याभिवर्धनं ॥ ७० ॥
उपायारंभमुक्तस्य तवाद्य नगरे प्रभो । जगाम प्रकटीभावं महारत्ननिधिः स्वयं ॥ ७१ ॥
पपात नभसो वृष्टिर्विना मेघसमुद्भवात् । परिकर्मविनिर्मुक्तं सस्यं क्षेत्रात्समुद्गतं ॥ ७२ ॥
जामाता लक्ष्मणोयं ते वर्तते निकटे पुरः । जीवितं हातुमिच्छंत्या संगतो वनमालया ॥ ७३ ॥
पद्मश्च सीतया साकं परमो भवतः प्रियः । शच्येव सहितो देवें–द्रोयमत्र विराजते ॥ ७४ ॥
वदतामिति भृत्यानां वचनैः प्रियसंशिभिः । सुखनिर्झरचेतस्को मुमूर्छ नृपतिः क्षणं ॥ ७५ ॥
ततः प्रबुद्धचित्तेन परं प्रमदमीयुषा । दत्तं बहुधनं तेभ्यः स्मितशुक्लमुखेंदुना ॥ ७६ ॥

अचिंतयच्च ही साधु संजातं दुहितुर्मम । अनिश्चितगतिः प्राप्तो यदयं सुमनोरथः ॥ ७७ ॥
सर्वेषामेव जीवानां धनमिष्टसमागमः । जायते पुण्ययोगेन यच्चात्मसुखकारणं ॥ ७८ ॥
योजनानां शतेनापि परिच्छिन्ने श्रुतांतरे । इष्टो मुहूर्तमात्रेण लभ्यते पुण्यभागिभिः ॥ ७९ ॥
ये पुण्येन विनिर्मुक्ताः प्राणिनो दुःखभागिनः । तेषां हस्तमपि प्राप्तमिष्टवस्तु पलायते ॥ ८० ॥
अरण्यानां गिरेर्मूर्ध्नि विषमे पथि सागरे । जायंते पुण्ययुक्तानां प्राणिनामिष्टसंगमाः ॥ ८१ ॥
इति संचिंत्य जायायै तं वृत्तांतमशेषतः । उत्थाप्याकथयत्तोषादक्षरैः कृच्छ्रनिर्गतैः ॥ ८२ ॥
पुनः पुनरपृच्छत्सा सुमुखी स्वप्नशंकया । संजातनिश्चयादाप स्वसंवेद्यां सुखासिकां ॥ ८३ ॥
ततो रामाधरच्छाये समुद्याति दिवाकरे । प्रेमसंपूरितो राजा सर्वबांधवसंगतः ॥ ८४ ॥
वरवारणमारुह्य द्युत्या परमया युतः । प्रतस्थे परमं द्रष्टुमुत्सुकः प्रियसंगमं ॥ ८५ ॥
माता च वनमालायाः पुत्रैरष्टाभिरन्विता । आरुह्य शिविकां रम्यां प्रियस्य पदवीं श्रिता ॥८६॥
अनंतरं नृपादेशात्कशिपुः प्रचुरं हितं । गंधमाल्या इवाशेषमनीयत मनोहरं ॥ ८७ ॥
ततो दूरात्समालोक्य संफुल्लेक्षणपंजकं । अवतीर्य गजाद्राजा डुढौके राममादरी ॥ ८८ ॥
परिष्वज्य महाप्रीत्या सहितं लक्ष्मणेन तं । अपृच्छत्कुशलं कृष्टि जानकीं च सुमानसः ॥ ८९ ॥

तद्देव्यापि तयोः पृष्ट्वा क्षेमं सुस्निग्धलोचना । निखिलाचारनिष्णाता जानकीं परिषस्वजे ॥९०॥
उपचारो यथायोग्यं तयोस्तैरपि निर्मितः । आचार्यकं हिते याता वस्तुन्यत्र प्रतिष्ठितं ॥ ९१ ॥
वीणावेणुमृदंगादिसहितो गीतनिःस्वनः । क्षुब्धार्णवसमो जज्ञे वंदिवृंदानुनादितः ॥ ९२ ॥
उत्सवः स महाञ्जातः पूजिताखिलसंगतः । नृत्यलोकक्रमन्यासादतिकंपितभूतलः ॥ ९३ ॥
दिशस्तूर्यनिनादेन प्रतिशब्दसमन्विताः । चक्रुः परस्परालापमिव सम्मदनिर्झराः ॥ ९४ ॥
शनैःप्रसन्नतां याते तस्मिन्नथ महोत्सवे । शरीरकर्म तैः सर्वं कृतं स्नानाशनादिकं ॥ ९५ ॥
ततः सप्तिद्विपारूढसामंतशतवेष्टितौ । सारंगोपमपादातमहाचक्रपरिच्छदौ ॥ ९६ ॥
पुरः प्रवृत्तसोत्साहराजस्थपृथिवीधरौ । विदग्धसूतलोकेन कृतमंगलनिस्वनौ ॥ ९७ ॥
हारराजितवक्षस्कावनर्घांशुकधारिणौ । हरिचंदनदिग्धांगावारूढौ रथमुत्तमं ॥ ९८ ॥
नानारत्नांशुसंपर्कसमुद्भूतेंद्रकार्मुकौ । शशांकभास्कराकारावशक्यगुणवर्णनौ ॥ ९९ ॥
सौधर्मैशानदेवाभौ जानकीसहितौ पुरं । कुर्वाणौ विस्मयं तुंगं प्रविष्टौ रामलक्ष्मणौ ॥ १०० ॥
वरमालाधरौ गंधवद्धषट्पदमंडलौ । संपूर्णचंद्रवदनौ विनीताकारधारिणौ ॥ १०१ ॥
यक्षेणेव कृते तस्मिन्नल्लामे पुटभेदने । रेमाते परमं भोगं भुंजानौ निजयेच्छया ॥ १०२ ॥

इति वनगहनान्यपि प्रयाताः । सुकृतसुसंस्कृतचेतसो मनुष्याः ॥ १०३ ॥
अतिपरमगुणानुपाश्रयंते । रविरुचयः सहसा पदार्थलाभान् ॥ १०४ ॥

इत्यार्षे रविषेणाचार्यप्रोक्ते पद्म—पुराणे पद्मायने वनमालाभिधानं नाम षट्त्रिंशत्तमं पर्व ।

---

# अथ सप्तत्रिंशत्तमं पर्व ।

अन्यदाथ सुखासीनं समुदीरिततत्कथं । राघवालंकृतास्थानं राजानं पृथिवीधरं ॥ १ ॥
दूराध्वपरिखिन्नांगो लेखवाहः समाययौ । प्रणम्य च समासीनो द्रुतं लेखं समर्पयत् ॥ २ ॥
गृहीत्वासौ ततो राज्ञा वाह्यनामांकलक्षितः । लेखकायार्पितः साधुः संधिविग्रहवेदिने ॥ ३ ॥
स विमुच्यानुवाच्यैनं वाचितो राजचक्षुषा । लिपिचंचुर्विधौ चारुरित्यवाचयदुच्चगीः ॥ ४ ॥
स्वस्तिस्वस्तिलकोदारप्रभावमतिकर्मणे । श्रीमते नतराजानमतिवीर्याय शर्मणे ॥ ५ ॥
श्रीनंद्यावर्तनगरान्नगराज इवोत्थितः । ख्यातः पंचमहाशब्दः शस्त्रशास्त्रविशारदः ॥ ६ ॥
राजाधिराजताश्लिष्टः प्रतापवशिताहितः । अनुरंजितसर्वक्ष्मः समुद्यद्भास्करद्युतिः ॥ ७ ॥

अतिवीर्यः समस्तेषु कर्तव्येषु महानयः । राजमानगुणः श्रीमानतिवीर्यः क्षितीश्वरः ॥ ८ ॥
आज्ञापयति नगरे विजये पृथिवीधरं । अक्षरैर्लेखसंक्रांतैः कुशलप्रश्नपूर्वकं ॥ ९ ॥
यथा मे केचिदेतस्मिन्सामंता धरणीतले । सकोषवाहनास्ते मे वर्तंते पार्श्ववर्तिनः ॥ १० ॥
आयाद्बहुविधा म्लेच्छाश्वतुरंगसमन्विताः । नानाशस्त्रकरा वाक्यमर्चंति समभूरयः ॥ ११ ॥
वरांजननगाभानां करिणामष्टभिः शतैः । समीरशावतुल्यानां सहस्रैर्वाजिनां त्रिभिः ॥ १२ ॥
महाभोगो महातेजा मद्गुणाकृष्टमानसः । राजा विजयशार्दूलः सोद्य प्राप्तो ममांतिकं ॥ १३ ॥
मृगध्वजो रणोर्मिश्च कलभः केसरी तथा । अंगा महीभृतः षड्भिरमी करटिनां शतैः ॥ १४ ॥
प्रत्येकं पंचभिः सप्तिसहस्रैश्च समावृताः । प्राप्ताः कृतमहोत्साहा नयपंडितबुद्धयः ॥ १५ ॥
उत्साहयन् छलोद्वृत्तं नयशास्त्रविशारदं । पंचालाधिपमात्मार्थकारिणं ज्ञातकारणं ॥ १६ ॥
द्विरदानां सहस्रेण तैर्ययूनां च सप्तभिः । पौंड्रक्ष्मापतिशालीनः प्रतापं परमं वहन् ॥ १७ ॥
साधनेन तदग्रेण संप्राप्तो मगधाधिपः । पूर्यमाणो नृपैर्वाहो रैवो नदशतैरिव ॥ १८ ॥
सहस्रैरागतोऽष्टाभिर्दंतिनां जलदत्विषां । अश्वीयेन सुकेशश्च दुर्लभांतेन वज्रधृक् ॥ १९ ॥
सुभद्रो मुनिभद्रश्च साधुभद्रश्च नंदनः । तुल्या वज्रधरस्यैते संप्राप्ता यवनाधिपाः ॥ २० ॥

अवार्यवीर्यसंप्राप्तः सिंहवीर्यो महीपतिः । वांगः सिंहरथश्चैतौ मातुलौ बलशालिनौ ॥ २१ ॥
पदातिभीरथैर्नागैः स्थूरीपृष्ठैः प्रतिष्ठितैः । वत्सस्वामी समायातो मारिदत्तोतिभूरिभिः ॥ २२ ॥
आंबष्ठः प्रोष्ठिलो राजा सौवीरो धीरमंदिरः । प्राप्तौ दुर्वेदसंख्येन साधनेनान्विताविमौ ॥ २३ ॥
एतेऽन्ये च महासत्वा राजानः श्रुतशासनाः । अक्षोहिणीभिरायाता दशभिस्त्रिदशोपमाः ॥२४॥
अमीभिरनुयातोहं प्रस्थितो भरतं प्रति । त्वामुदीक्षे यतो लेखदर्शनानंतरं ततः ॥ २५ ॥
आगंतव्यं त्वया प्रीत्या कार्यप्रेक्षितया तथा । पश्यामोत्यादरेण त्वां यथा वर्षं कृषीवलाः॥२६॥
एवं च वाचिते लेखे न यावत्पृथिवीधरः । किंचिद्वूचे सुमित्रायाः सूनुस्तावदभाषत ॥ २७ ॥
अतिवीर्ये तथा बुद्धौ भरतस्य विचेष्टितं । तव कीदृगिति ज्ञातं भद्रस्य दूतस्य ते ॥ २८ ॥
एवं वायुगतिः पृष्टो जगाद निखिलं मम । विदितं राजचरितमंतरंगो ह्ययं परः ॥ २९ ॥
इच्छामि विशदं श्रोतुमित्युक्ते पुनरब्रवीत् । श्रृणु चित्तं समाधाय भवतश्चेत्कुतूहलं ॥ ३० ॥
श्रुतबुद्धिरिति ख्यातो दूतः श्रुतविशारदः । प्रहितः स्वामिनास्माकं गत्वा भरतमब्रवीत् ॥३१॥
दूतोऽस्मि शक्रतुल्यस्य प्रणताखिलभूभृतः । अतिवीर्यनरेंद्रस्य नयन्यासमनीषिणः ॥ ३२ ॥
संप्राप्य साध्वसं यस्मान्नरकेसरिणः परं । भजंते रिपुसारंगा न निद्रां वसतिष्वपि ॥ ३३ ॥

विनीता पृथिवी यस्य चतुरंभोधिमेखला । आज्ञां पाणिगृहीतेव कुरुते परिपालिता ॥ ३४ ॥
आज्ञापयत्यसौ देवो भवंतमिति सत्क्रियः । वर्णैर्मदास्यविन्यस्तैरूर्जितात्मा समंततः ॥ ३५ ॥
यथा भज समागत्य भृत्यतां भरत द्रुतं । अयोध्यां वा परित्यज्य भज पारमुदन्वतः ॥ ३६ ॥
ततः क्रोधपरीतांगः शत्रुघ्नश्चंडया गिरा । जगाद निष्प्रतीकारो दावानल इवोत्थितः ॥ ३७ ॥
भजत्येव तथा देवो भरतस्तस्य भृत्यतां । यथा संजायते युक्तमिदं तावत्प्रभाषितं ॥ ३८ ॥
विनीतां च परित्यज्य सचिवेषु प्रभुर्ध्रुवं । यात्येवोन्नतः पारं वशीकुर्वन् कुमानवान् ॥ ३९ ॥
वचस्त्वां ज्ञापयामीति नितरां तस्य नोचितं । रासभस्य यथा मत्तवारणाधिपगर्जितं ॥ ४० ॥
सूचयत्यथवा तस्य मृत्युमेतद्वचः स्फुटं । उत्पातभूतमेतो वा स नूनं वायुवश्यतां ॥ ४१ ॥
वैराग्यादथवा ताते तपोवनमुपागते । नरेंद्रेशासमाविष्टो ग्रहेण खलवेष्टितः ॥ ४२ ॥
यद्यप्युपशमं यातस्ताताग्निर्मुक्तिकाम्यया । तथापि निर्गतस्तस्मात्फुलिंगस्तं दहाम्यहं ॥ ४३ ॥
सिंहे करींद्रकीलालपंकलोहितकेसरे । शांतेऽपि शावकस्तस्य कुरुते करिपातनं ॥ ४४ ॥
इत्युक्त्वा दह्यमानोरुवेणुकांतारभीषणं । जहास तेजसा स्थानं ग्रसमानः इवाखिलं ॥ ४५ ॥
जगाद च कुदूतस्य तावदस्य विधीयतां । खलीकारोल्पवीर्यस्य सत्यंकार इव द्रुतं ॥ ४६ ॥

इत्युक्ते पादयोर्दूतो गृहीत्वा कुपितैर्भटैः । सारमेय इवागस्वी हन्यमानः कृतध्वनिः ॥ ४७ ॥
आकृष्टो नगरीमध्यं यावन्मुक्तश्च दुःखितः । दग्धो दुर्वचनैर्धूलीधूसरो निरगात्ततः ॥ ४८ ॥
ततः सागरगंभीरः परमार्थविशारदः । अपूर्वं दुर्वचः श्रुत्वा किंचित्कोपमुपागतः ॥ ४९ ॥
केकयानंदनः श्रीमान्सुप्रभानंदनान्वितः । विननीषुररिं पुर्या निर्यातः सचिवान्वितः ॥ ५० ॥
श्रुत्वा तं मिथिलाधीशः कनकः पुरुसाधनः । प्राप सिंहोदराद्याश्च राजानो भक्तितत्पराः ॥५१॥
चक्रेण महता युक्तो भरतः प्रस्थितस्ततः । नंद्यावर्तं प्रजा रक्षन् पितेव न्यायकोविदः ॥ ५२ ॥
अतिवीर्योऽपि दूतेन खलीकारप्रदर्शिना । परमं क्रोधमानीतः क्षुब्धाकूपारभीषणः ॥ ५३ ॥
भरतायाग्निरोचिष्णुर्गंतुं संविदधे मतिं । सामंतैर्वेष्टितः सर्वैः कृतानेकमहाद्भुतैः ॥ ५४ ॥
ततो ललाटभागेन युवचंद्राकृतिः श्रितः । वनमालापितुः संज्ञां कृत्वा स्वैरं बलोऽवदत् ॥५५॥
युक्तमेवातिवीर्यस्य भरते कर्तुमीदृशं । पितुर्येन समो भ्राता ज्येष्ठोसावपमानितः ॥ ५६ ॥
आगच्छाम्यहमित्युक्त्वा लेखवाहं महीधरः । प्रतिप्रेष्याकरोन्मंत्रं रामेण पृथिवीधरः ॥ ५७ ॥
अतिवीर्योऽतिदुर्वारश्छद्मना तं व्रजाम्यहं । एवं महीधरेणोक्ते पद्मो विश्रब्धमब्रवीत् ॥ ५८ ॥
अज्ञातैरिदमस्माभिः साधनीयं प्रयोजनं । अतो न महता कृत्यं संरंभेण तु पार्थिव ॥ ५९ ॥

तिष्ठ त्वमिह कुर्वाणः सुप्रयुक्तमहं तव । पुत्रजामातृभिः सार्धमंतं तस्य व्रजाम्यरेः ॥ ६० ॥
इत्युक्त्वा रथमासह्य परं सारबलान्वितैः । महीधरसुतैः सार्कं ससीतो लक्ष्मणान्वितः ॥ ६१ ॥
नंद्यावर्तपुरीं रामो गंतुं प्रववृते जवी । प्राप्तश्चावस्थितस्तस्य पुरस्य निकटेंतरे ॥ ६२ ॥
तनुकृत्ये कृते तत्र संबंधितनयैः सह । रामलक्ष्मणयोर्मंत्रः सीतायाश्चेत्यवर्तत ॥ ६३ ॥
जगाद जानकी नाथ भवतः सन्निधौ मम । वक्तुं नैवाधिकारोऽस्ति किं तारा भांति भास्करे ॥
तथापि देव भाषेहं प्रेरिता हितकाम्यया । जातो वंशलतातोऽपि मणिः संगृह्यते ननु ॥ ६५ ॥
अतिवीर्योऽतिवीर्योयं महासाधनसंगतः । क्रूरकर्मा कथं शक्यो जेतुं भरतभूभृता ॥ ६६ ॥
अतस्तं निर्जये तावदुपायाश्चिंत्यतां द्रुतं । सहसारभ्यमाणं हि कार्यं व्रजति संशयं ॥ ६७ ॥
त्रिलोकेप्यस्ति नासाध्यं भवतो लक्ष्मणस्य वा । किंतु प्रस्तुतमत्यक्त्वा समारब्धं प्रशस्यते ॥६८॥
ततो लक्ष्मीधरोऽवोचात्किमेवं देवि भाषसे । पश्य स्वो निहितं पापमणुवीर्यं मया रणे ॥ ६९ ॥
रामपादरजःपूतशिरसो मे सुरैरपि । न शक्यते पुरः स्थातुं क्षुद्रवीर्ये तु का कथा ॥ ७० ॥
न यावदथवा याति भानुरस्तं कुतूहली । वीक्ष्यतां तावदद्यैव क्षुद्रवीर्यस्य पंचतां ॥ ७१ ॥
युवगर्वसमाध्माता संबंधितनया अपि । एतदेव वचोमुंचत्प्रतिशब्दमिवोन्नतं ॥ ७२ ॥

ततः पद्मो निवार्यैतान् भ्रूभंगेन महामनाः । अब्रवील्लक्ष्मणं धैर्यादब्धिं गंडूषयन्निव ॥ ७३ ॥
युक्तमुक्तमलं तात जानक्या वस्तु पुष्कलं । स्फुटीकृतं तु नात्यंतमत्यासादनभीतया ॥ ७४ ॥
अस्या शृणु यदाकूतमतिवीर्यो बलोद्धतः । भरतेन स नो शक्यो वशीकर्तुं रणाजिरे ॥ ७५ ॥
भागो न भरतस्तस्य दशमोऽपि भवत्यतः । तस्य दावानलस्यायं किं करोति महागजः ॥ ७६ ॥
दंतिभिश्च समृद्धस्य समृद्धोऽपि तुरंगमैः । भरतो नैव शक्योऽस्य यथा विंध्यस्य केसरी ॥७७॥
भरतस्य जये नात्र संशयोऽपि समीक्ष्यते । एकांतस्तु कुतो वापि स्याज्जंतुप्रलयस्तथा ॥ ७८ ॥
कष्टमेककयोर्जाते विरोधे कारणं विना । पक्षद्वयं मनुष्याणां जायते विवशः क्षयं ॥ ७९ ॥
दुरात्मनातिवीर्येण भरते च वशीकृते । जायते रघुगोत्रस्य कलंकः पश्य कीदृशः ॥ ८० ॥
नेक्ष्यते संधिरप्यत्र शत्रुघ्नेन च मानिना । शैशवेन कृतं दोषं शत्रावत्युद्धते शृणु ॥ ८१ ॥
विभावर्यां तमिस्रायां किलावस्कंददायिना । रौद्रभूतिसमेतेन शत्रुघ्नेन चरिष्णुना ॥ ८२ ॥
निद्रावशीकृतान् वीरान् बहून् कृत्वा मृतक्षतान् । हस्तिनश्च दुरारोहान् प्रगलद्दाननिर्झरान् ८३
चतुःषष्ठिसहस्राणि वाजिनां वातरंहसां । शतानि सप्त चेभानामंजनाद्रिसमत्विषां ॥ ८४ ॥
वाह्यस्थानि पुरस्यास्य नीतानि दिवसैस्त्रिभिः । भरतस्यांतिकं किं ते न श्रुतानि जनास्यतः ८५

दृष्ट्वा कलिंगराजस्तान् गाढशल्यान्बहून्नृपान्। जीवेन च विनिर्मुक्तान् हतं ज्ञात्वा च साधनं ८६
संप्राप्तः परमं क्रोधमप्रमत्तः समंततः । वैरिनिर्यातनं कृत्वा बुद्धौ रणमुदीक्ष्यते ॥ ८७ ॥
दंडोपायं परित्यज्य भरतो मानिनां वरः । हेतुं तन्निर्जये नान्यं प्रयुंक्ते बुद्धिमानपि ॥ ८८ ॥
अथ त्वं साधयस्येनं केनैतन्न प्रतीयते । शक्तिस्ते प्रभवेत्तात तीव्रांशोरपि यातने ॥ ८९ ॥
किंत्वयं वर्ततेऽत्रैव प्रदेशे भरतोऽधुना । निर्गत्य च तथायुक्तं प्रकटीकरणं ननु ॥ ९० ॥
अज्ञाता एव ये कार्यं कुर्वंति पुरुषाद्भुतं । तेतिश्लाघ्या यथात्यंतं निवृष्टय जलदा गताः ॥ ९१ ॥
इति मंत्रयमाणस्य रामस्य मतिरुद्गता । अतिवीर्यग्रहोपाये ततो मंत्रः समापितः ॥ ९२ ॥
प्रमादरहितस्तत्र कृतप्रवरसंकथः । सुखेन शर्वरीं नीत्वा रामः स्वजनसंगतः ॥ ९३ ॥
आवासान्निर्गतोऽपश्यदार्यिकाजनलक्षितं । जिनेंद्रभवनं भक्त्या प्रविवेश च सांजलिः ॥ ९४ ॥
नमस्कारं जिनेंद्राणां विधायार्याजनस्य च । सकाशे वरधर्माया गणपाल्याः सशास्त्रिकां ॥९५॥
स्थापयित्वा कृती सीतां कृत्वात्मानं च वर्णिनीं । स्त्रीवेषधारिभिः सार्धं सुरूपैर्लक्ष्मणादिभिः९६
कृत्वा पूजां जिनेंद्राणां बहुमंगलभूषितां । नरेंद्रभवनं द्वारं प्रतस्थे लीलयान्वितः ॥ ९७ ॥
सुरेंद्रगणिकातुल्यं वीक्षितुं वर्णिनीं जनः । सर्वः पौरजनो लग्नः पश्चाद्गंतुं सविस्मयः ॥ ९८ ॥

सर्वलोकस्य नेत्राणि मनांसि च सुचेष्टिताः । हरंत्यस्ता नृपागारं प्राप्ता द्वारि सुमंडनाः ॥ ९९ ॥
ते चतुर्विंशतिर्भक्त्या जिनेंद्रा भक्तितत्परैः । वंद्यंतेऽस्माभिरित्येवं तेवातेव (ब्रुवन्तेस्म) ध्वनिं पुरः ॥
कृत्वा पुराणवस्तूनि गातुमुत्फुल्ललोचनाः । गंभीरभारतीनानासक्त्याश्चारणयोषितः ॥ १०१ ॥
ध्वनिमश्रुतपूर्वं तं श्रुत्वा तासां नराधिपः । आजगाम गुणाकृष्टः काष्ठभार इवोदके ॥ १०२ ॥
ततो रेचकमादाय ललितांगविवर्तनं । नृपस्याभिमुखीभावं जगाम वरवर्तिनी ॥ १०३ ॥
सस्मितालोकितैस्तस्या विगलद्भ्रूसमुद्गमैः । गमकानुगतैः कंपैस्तनभारस्य हारिणः ॥ १०४ ॥
मंथरैश्चारुसंचारैर्जघनस्य घनस्य च । तथा बाहुलताहारैः सुलीलकरपल्लवैः ॥ १०५ ॥
पादन्यासैर्लघुस्पष्टविमुक्तधरिणीतलैः । आशु संपादितैः स्थानैः केशपाशविवर्तने ॥ १०६ ॥
त्रिकस्य बलनैर्भाग गात्रसंदर्शितात्मभिः । कामवाणैरिमैर्लोकः सकलः समताड्यत ॥ १०७ ॥
मूर्छनाभिः सुरैर्ग्रामैर्यथास्थानं नियोजितैः । नर्तकी सा जगौ वल्गु परिलीनसखीस्वरं ॥१०८॥
यत्र यत्र च सद्देशे नर्तकी कुरुते स्थितिं । तत्र तत्र सभा सर्वा नयनानि प्रयच्छति ॥ १०९ ॥
तस्या रूपेण चक्षूंषि स्वरेण श्रवणेंद्रियं । मनांसि तद्द्वयेनापि बद्धानि सदसो दृढं ॥ ११० ॥
उत्फुल्लमुखराजीवा सामंता दानतत्परा । बभूवुर्निरलंकारा संख्यानां वरधारिणी ॥ १११ ॥

आताड्यानुगतं नृत्यं तत्तस्यास्त्रिदशानपि । वशीकुर्वीत कैवास्था सुहृदेष्वन्यजंतुषु ॥ ११२ ॥
विधाय वृषभादीनां चरितस्य प्रकीर्तनं । संक्षेपेण वशीकृत्य संमतिं सकलां भृशं ॥ ११३ ॥
संगीतेन समुद्युक्ता राजानमिति नर्तकी । दधाना परमां दीप्तिमुपलब्धं सुदुस्सहं ॥ ११४ ॥
अतिवीर्य किमेतत्ते दुष्टं व्यवसितं महत् । नयहीनमिदं वस्तु केनात्र त्वं नियोजितः ॥ ११५ ॥
किमिति स्वविनाशाय केकयानंदनस्त्वया । शांतचेताः श्रृगालेन केसरीव प्रकोपितः ॥११६॥
एवं गतेऽपि बिभ्राणः परमं विनयं द्रुतं । संप्रसादय तं गत्वा यदि ते जीवितं प्रियं ॥११७॥
जाता विशुद्धवंशेषु वरक्रीड़नभूमयः । माभूवन् विधवा भद्र तवैता वरयोषितः ॥ ११८ ॥
एता त्वया परित्यक्ता विमुक्ताशेषभूषणः । ध्रुवं पुरा न शोभंते ताराश्चंद्रमसा यथा ॥११९॥
विवृत्तय द्रुतं चित्तमशुभध्यानतत्परं । उत्तिष्ठ व्रज निर्माणो नमस्य भरतं सुधीः ॥ १२० ॥
एवं कुरु न चेदेवं कुरुषे पुरुषाधम । ततोद्यैव विनष्टोसि संशयोऽत्र न विद्यते ॥ १२१ ॥
जीवत्येवानरण्यस्य पौत्रे राज्यं समीहसे । चकासति रवौ पापलक्ष्मीर्दोषाकरस्य का ॥१२२॥
पतितस्याद्य नो रूपे मरणं ते समुद्गतं । शलभस्येव मूढस्य दुष्पक्षस्य प्रियद्युते ॥ १२३ ॥
देवेन भरतेनामा गरुडेन महात्मना । अलगर्दाधमो भूत्वा प्रतिस्पर्धनमिच्छति ॥ १२४ ॥

ततो निर्भर्त्सनं स्वस्य भरतस्य च संशनं । निशम्य संसदा साकमभूत्ताम्रेक्षणो नृपः ॥ १२५ ॥
विरक्ता च सभात्यंतपरुषक्षतमानसा । जुघूर्णार्णववेलेव भ्रूतरंगसमाकुला ॥ १२६ ॥
अतिवीर्यो रुषा कंपो यावज्जग्राह सायकं । तावदुत्पत्य नर्तक्या सविलासकृतभ्रमं ॥ १२७ ॥
मंडलाग्रं समाक्षिप्य वीक्ष्यमाणेषु राजसु । जीवग्राहं विषण्णात्मा केशेषु जगृहे दृढं ॥ १२८ ॥
उद्यम्य नर्तकी खड्गं पश्यंती नृपसंहतिं । जगादाविनयी योत्र समे वध्ये विसंशयं ॥ १२९ ॥
परित्यज्यातिवीर्यस्य पक्षं विनयमंडनाः । भरतस्य द्रुतं पादौ नमत प्रियजीविताः ॥ १३० ॥
भरतो जयति श्रीमान् गुणस्फीतांशुमंडलः । दशस्यंदनवंशेंदुर्लोकानंदकरः परः ॥ १३१ ॥
लक्ष्मी कुमुद्वती यस्य विकासं भजते तरां । द्विषत्तपननिर्मुक्ता कुर्वतः परमाद्भुतं ॥ १३२ ॥
उज्जगाम ततो लोकवक्त्रेभ्य इति निस्वरः । अहो वृत्तमिदं चित्रमिंद्रजालोपमं महत् ॥१३३॥
यस्य चारणकन्यानामिदमीदृग्विचेष्टितं । भरतस्य स्वयं तस्य शक्तिः शक्रं जयेदपि ॥ १३४ ॥
न विद्मः स किमस्माकं क्रुद्धो नाथः करिष्यति । अथवा सप्रणामेषु देवो यास्यति मार्दवं १३५
ततः करिणमारुह्य राघवः सातिवीर्यकः । सहितः परिवर्गेण ययौ जिनवरालयं ॥ १३६ ॥
अवतीर्य गजात्तत्र प्रविश्य प्रमदान्वितः । चक्रे सुमहतीं पूजां कृतमंगलनिस्वनः ॥ १३७ ॥

वरधर्मापि सर्वेण संघेन सहितः परं । राघवेण ससीतेन नीता तुष्टेन पूजनं ॥ १३८ ॥
अतिवीर्योत्र पद्मेन लक्ष्मणाय समर्पितः । तस्यासौ वधमुद्युक्तः कर्तुमुच्यत सीतया ॥ १३९ ॥
मावीवधोऽस्य लक्ष्मीवान् कंधरं निष्ठुराशया । केशेषु मागृहीर्गाढं कुमार भज सौम्यतां ॥१४०॥
को दोषः कर्मसामर्थ्याद्यदायात्यापदं नराः । रक्ष्या एव तथाप्येते दधतामतिसाधुना ॥१४१॥
इतरो ये खलीकर्तुं साधूनां नोचिते जनः । किमुतायं नरेशानां सहस्राणां प्रपूजितः ॥१४२॥
कुर्वेनं मुक्तकं भद्र भवतायं वशीकृतः । जानानः स्वस्य सामर्थ्यं कानुगच्छति सांप्रतं ॥१४३॥
गृहीत्वा समयेन्यस्य सन्मानमुपलंभिताः । विमुच्यंति पुनर्भूयो मर्यादेयं चिरंतनी ॥ १४४ ॥
इत्युक्तो मस्तके कृत्वा करराजीव कुड्मलं । जगाद लक्ष्मणो देवि यद्ब्रवीषि तथैव तत् ॥ १४५ ॥
आस्तां स्वामिनि ते वाक्यात्तावदस्य विमोचनं । सुराणामप्यमुं पूज्यं कुर्वीयं त्वत्प्रसादतः १४६
एवं प्रशांतसंरंभे सद्यो लक्ष्मीधरे स्थिते । अतिवीर्यो विबुद्धात्मा स्तुत्वा पद्मभाषत ॥ १४७ ॥
साधु साधु त्वया चित्रं कृतमीदृग्विचेष्टितं । कदाचिदप्यनुत्पन्ना ममाद्य मतिरुद्गता ॥ १४८ ॥
विमुक्तहारमुकुटं दृष्ट्वा तं करुणान्वितः । विश्रब्धं राघवोऽवोचत्सौम्याकारपरिग्रहः ॥ १४९ ॥
माव्रजीरंग दैन्यत्वं धत्स्व धैर्यं पुरातनं । महतामेव जायंते संपदो विपदन्विताः ॥ १५० ॥

न चात्र काचिदापत्ते नंद्यावर्ते क्रमागते । भरतस्य वशो भूत्वा कुरु राज्यं यथेप्सितं ॥ १५१ ॥
अतिवीर्यस्ततोवोचन्न मे राज्येऽधुना स्पृहा । राज्येन मे फलं दत्तमधुनान्यत्र सज्ज्यते ॥१५२॥
आसीन्मया कृता वांछा हिमवत्सागरावधि । जेतुं वसुंधरा येन विभ्रता मानमुत्तमं ॥ १५३ ॥
सोहं स्वमानमुन्मूल्य भूत्वा सारविवर्जितः । कुर्यां प्रणतिमन्यस्य कथं पुरुषतां दधत् ॥ १५४ ॥
षट् खंडा यैरपि क्षोणी पालितेयं महानरैः । न तृप्तास्तेप्यहं ग्रामैः पंचभिस्तु किमेतकैः ॥१५५॥
जन्मांतरकृतस्यास्य बलितां पश्य कर्मणः । छायाहानिमहं येन राहुणेंदुरिवाहृतः ॥ १५६ ॥
मानुष्यकमिदं जातं सारमुक्तं मयाधुना । सुराणामपि वार्तैषा किमन्यत्राभिधीयतां ॥ १५७ ॥
सोहं पुनर्भवाद्भीरुस्त्वया संप्रति बोधितः । तथाविधां भजे चेष्टां यया मुक्तिरवाप्यते ॥ १५८ ॥
इत्युक्त्वा क्षमयित्वा तं परिवर्गसमन्वितं । गत्वा केसरिविक्रांतो मुनिं श्रुतिधरश्रुतिं ॥ १५९ ॥
कराब्जकुड्मलांकेन विधाय शिरसा नतिं । जगाद नाथ वांछामि दीक्षां दैगंबरीमिति ॥१६०॥
आचार्येणैवमित्युक्ते परित्यज्यांशुकादिकं । केशलुंचं विधायासौ महाव्रतधरोऽभवत् ॥ १६१ ॥
आत्मार्थनिरतस्त्यक्तरागद्वेषपरिग्रहः । विजहार क्षितिं धीरो यत्रास्तमितवानसौ ॥ १६२ ॥
क्रूरश्वापदयुक्तेषु गहनेषु वनेषु सः । चकार वसतिं निर्भीर्गह्वरेषु च भूभृतां ॥ १६३ ॥

विमुक्तनिश्शेषपरिग्रहाशं । गृहीतचारित्रभरं सुशीलं ॥
नानातपःशोषितदेहमुद्यं । महामुनिं तं नमतातिवीर्यं ॥ १६४ ॥
रत्नत्रयापादितचारुभूषं । दिगंबरं साधुगुणावतंसं ॥
संप्रस्थितं योग्यवरं विमुक्ते—महामुनिं तं नमतातिवीर्यं ॥ १६५ ॥
इदं परं चेष्टितमातिवीर्यं । श्रृणोति यो यश्च सुधीरधीते ॥
प्राप्नोति वृद्धिं सदसोऽपि मध्ये । रविप्रभोसौ व्यसनं न लोकः ॥ १६६ ॥

इत्यार्षे रविषेणाचार्यप्रोक्ते पद्मचरिते (पद्मपुराणे) तिवीर्यनिष्क्रमणाभिधानं नाम सप्तत्रिंशत्तमं पर्व ।

---

# अथाष्टत्रिंशत्तमं पर्व ।

अथ पद्मोतिवीर्यस्य तनयं नयकोविदः । विजयस्यंदनाभिख्यमभ्यसिंचत्पितुः पदे ॥ १ ॥
दर्शिताशेषवित्तोसावरविंदातनूभुवं । स्वसारं रतिमालाख्यां लक्ष्मणाय न्यवेदयत् ॥ २ ॥
एवमस्त्वित्यभीष्टायां तस्यां पद्मेन लक्ष्मणः । लक्ष्मीमिवांकमायातां ज्ञात्वा सप्रमदोऽभवत् ॥३॥

ततः कृत्वा जिनेंद्राणां पूजां विस्मयदायिनीं । इयाय विजयस्थानं लक्ष्मणाद्यन्वितो बलः ॥४॥
दीक्षां श्रुत्वातिवीर्यस्य नर्तकीग्रहहेतुकां । शत्रुघ्नं हाससध्वानं निषिध्य भरतोऽवदत् ॥ ५ ॥
अतिवीर्यो महाधन्यस्तस्य किं भद्र हास्यते । त्यक्त्वा यो विषयात्कष्टान् परां शांतिमुपाश्रितः॥
प्रभावं तपसः पश्य त्रिदशेष्वपि दुर्लभं । मुनिर्यो रिपुरासीन्नः संप्राप्तोऽसौ प्रणम्यतां ॥ ७ ॥
श्लाघामित्यतिवीर्यस्य यावत्कुर्वन् स तिष्ठति । विजयस्यंदनस्तावत्प्राप्तः सामंतमध्यगः ॥ ८ ॥
प्रणम्य भरतायासौ स्थितः संकथया क्षणं । ज्यायसीं रतिमालाया नाम्ना विजयसुंदरीं ॥ ९ ॥
उपनिन्ये शुभां कन्यां नानालंकारधारिणीं । कोशं च विपुलं सारं साधनं च प्रसन्नदृक् ॥ १० ॥
कन्यामेकामुपादाय केकयानंदनस्ततः । तस्यैवानुमतं सर्वं स्थितिरेषा महात्मनां ॥ ११ ॥
कौतुकोत्कलिकाकीर्णमानसोऽथ महाजवैः । अश्वैः प्रववृते द्रष्टुमतिवीर्यदिगंबरं ॥ १२ ॥
क्वासौ महामुनिः क्वासाविति पृच्छन्सुभावनः । एषोयमित्यपुं भृत्यैः कथ्यमानमियाय सः ॥१३॥
ततो विषमपाषाणनिवहात्यंतदुर्गमं । नानाद्रुमसमाकीर्णं कुसुमामोदवस्थितं ॥ १४ ॥
तज्ज्ञेन कथितं रम्यं पर्वतं श्वापदाकुलं । आरुरोहावतीर्याश्वाद्विनीताकारमंडितः ॥ १५ ॥
रोषतोषविनिर्मुक्तं प्रशांतकरणं विभुं । शिलातलनिषण्णं तमेकसिंहमिवाभयं ॥ १६ ॥

अतिवीर्यमुनिं दृष्ट्वा सुघोरतपसि स्थितं । शुभध्यानगतात्मानं ज्वलंतं श्रमणश्रिया ॥ १७ ॥
उत्फुल्लनयनो लोकः सर्वो हृष्टतनूरुहः । विस्मयं परमं प्राप्तो ननाम रचितांजलिः ॥ १८ ॥
कृत्वास्य महतीं पूजां भरतः श्रमणप्रियः । प्रणम्य पादयोरुच्चे भक्त्या विनतविग्रहः ॥ १९ ॥
नाथ शूरस्त्वमेवैकः परमार्थविशारदः । येनेयं दुर्धरा दीक्षा धृता जिनवरोदिता ॥ २० ॥
विशुद्धकुलजातानां पुरुषाणां महात्मनां । ज्ञातसंसारसाराणामीदृगेव विचेष्टितं ॥ २१ ॥
मनुष्यलोकमासाद्य फलं यदभिवांछ्यते । तदुपात्तं त्वया साधो वयमत्यतदुःखिताः ॥ २२ ॥
क्षंतव्यं दुरितं किंचिद्यदस्माभिस्त्वयीहितं । कृतार्थोसि नमस्तुभ्यं प्राप्तायातिप्रतीक्ष्यतां ॥ २३ ॥
इत्युक्त्वा सांजलिं कृत्वा महासाधोः प्रदक्षिणां । अवतीर्णः कथां मौनीं कुर्वाणो धरणीधरात् ॥
स्थूरीपृष्ठं समारुह्य पूर्यमाणः सहस्रशः । सामंतैः प्रस्थितोऽयोध्यां विभवाम्भोधिमध्यगः ॥२५॥
महासाधनसामंतमंडलस्यांतरे स्थितः । शुशुभेसौ यथा जंबूद्वीपोऽन्यद्वीपमध्यगः ॥ २६ ॥
क्व गतास्ता नु नर्तक्यः कृतलोकानुरंजनाः । स्वजीवितेऽपि निर्लोभा विदधुर्या मयि प्रियं ॥२७॥
पुरः कृत्वातिवीर्यस्य मदीयां परमां स्तुतिं । नर्तकीभिः कृतं कर्म चित्रमेतदहो परं ॥ २८ ॥
स्त्रीणां कुतोथवा शक्तिरीदृशी विष्टपेऽखिले । जिनशासनदेवीभिर्नूनमेतदनुष्ठितं ॥ २९ ॥

चिंतयन्नयमित्यादि सुप्रसन्नेन चेतसा । जगाम धरणीं पश्यन्नानासस्यसमाकुलां ॥ ३० ॥
व्याप्ताशेषजगत्कीर्तिः प्रभावं परमं दधत् । सशत्रुघ्नो विवेशासौ विनीतां परमोदयः ॥ ३१ ॥
साकं विजयसुंदर्या तस्थौ तत्र रतिं भजन् । सुलोचनापरिष्वक्तो यथा जलदनिस्वनः ॥ ३२ ॥
आनंदं सर्वलोकस्य कुर्वाणौ रामलक्ष्मणौ । कंचित्कालं पुरे स्थित्वा पृथिवीधरभूभृतः ॥ ३३ ॥
जानक्या सह सन्मंत्र्य कर्तव्याहितमानसौ । भूयः प्रस्थातुमुद्युक्तौ समुद्देशमभीप्सितं ॥ ३४ ॥
वनमाला ततोवोचल्लक्ष्मणं चारुलक्षणा । सबाष्पे बिभ्रती नेत्रे तरत्तरलतारके ॥ ३५ ॥
अवश्यं यदि मोक्तव्या मंदभाग्याहकं त्वया । पुरैव रक्षिता कस्मान्मुमूर्षंती वद प्रिय ॥ ३६ ॥
सौमित्रिरगदद्भद्रे विषादं मागमः प्रिये । अत्यल्पेनैव कालेन पुनरेमि वरानने ॥ ३७ ॥
सम्यग्दर्शनहीना यां गतिं यांति सुविभ्रमे । व्रजेयं तां पुनः क्षिप्रं नचेदेमि तवांतिकं ॥ ३८ ॥
नराणां मानदग्धानां साधुनिंदनकारिणां । प्रिये पापेन लिप्येहं यदि नायामि तेंतिकं ॥ ३९ ॥
रक्षितव्यं पितुर्वाक्यमस्माभिः प्राणवल्लभे । दक्षिणोदन्वतः कूलं गंतव्यं निर्विचारणं ॥ ४० ॥
मलयापत्यकां प्राप्य कृत्वा परममालयं । नेष्यामि भवतीमेत्य वरोरु धृतिमाव्रत ॥ ४१ ॥
समग्रैः सांत्वयित्वेति वनमालां सुभाषितैः । भेजे लांगलिनः पार्श्वं सुमित्राकुक्षिसंभवः ॥ ४२ ॥

ततः सुप्तजने काले विदितौ तौ न केनचित् । निर्गत्य नगराद्गंतुं प्रवृत्तौ सह सीतयः ॥ ४३ ॥
प्रभाते तद्विनिर्मुक्तं पुरं दृष्ट्वा खिलोजनः । परमं शोकमापन्नः कृच्छ्रेणाधारयत्तनुं ॥ ४४ ॥
वनमाला गृहं दृष्ट्वा लक्ष्मणेन विवर्जितं । समयेषु समालंब्य जीवितं शोकिनी स्थिता ॥ ४५ ॥
विहरंतौ ततः क्षोणीं लोकविस्मयकारिणौ । मुमुदाते महासत्वौ ससीतौ रामलक्ष्मणौ ॥ ४६ ॥
युवत्युद्दल्लवल्लीनां मनोनयनपल्लवां । तावनंगतुषारेण दहेतावटतुः शनैः ॥ ४७ ॥
कस्य पुण्यवतो गोत्रमेताभ्यां समलंकृतं । सुजाता जननी सैका लोके यैतावजीजनत् ॥ ४८ ॥
धन्येयं वनितैताभ्यां समं या चरति क्षितिं । ईदृशं यदि देवानां रूपं देवास्ततः स्फुटं ॥ ४९ ॥
कुतः समागतावेतौ व्रजतो वा क्व सुंदरौ । वांछतः किमिमौ कर्तुं सृष्टिरीदृगियं कथं ॥ ५० ॥
सख्योनेन यथा दृष्टौ पुंडरीकनिरीक्षणौ । व्रजंतौ सहितौ नार्या क्वचिच्चंद्रनिभाननौ ॥ ५१ ॥
यदिमौ शोभिनौ मुग्धे मनुष्यावथवा सुरौ । तत्किमर्थं त्वया शोको धार्यते गतलज्जया ॥५२॥
अयि मूढे न पुण्येन नितांतं भूरिणा विना । लभ्यते सुचिरं दृष्टुमेवंविधनराकृतिः ॥ ५३ ॥
निवर्तस्व भज स्वास्थ्यं स्रस्तं वसनमुद्धर । मानैषीर्लोचने खेदमतिमात्रप्रसारिते ॥ ५४ ॥
नेत्रमानसचौराभ्यां दृष्टाभ्यामपि बालिके । निष्ठुराभ्यां किमेताभ्यां काभ्यामपि धृतिं भज ५५

इत्याद्यालापसंसक्तं कुर्वाणाववलाजनं । रेमाते शुद्धचित्तौ तौ स्वेच्छाविहृतिकारिणौ ॥ ५६ ॥
नानाजनपदाकीर्णां पर्यट्य धरिणीमिमौ । क्षेमांजलिसमाख्यानं संप्राप्तौ परमं पुरं ॥ ५७ ॥
उद्याने निकटे तस्य जलदोत्करसन्निभे । अवस्थितताः सुखेनैते यथा सौमनसे सुराः ॥ ५८ ॥
अन्नं वरगुणं भुक्त्वा लक्ष्मणेनोपसाधितं । माध्वीकं सीतया सार्धमसेवत हलायुधः ॥ ५९ ॥
प्रासादगिरिमालाभिस्ततो हृतनिरीक्षणः । लक्ष्मणः पद्मतोऽनुज्ञां प्राप्य प्रश्रययाचितां ॥ ६० ॥
दधानः प्रवरं माल्यं पीतांबरधरः शुभः । स्वैरं क्षेमांजलिं द्रष्टुं प्रतस्थे चारुविभ्रमः ॥ ६१ ॥
नानालतोपगूढानि काननानि वराण्यसौ । सरितः स्वच्छतोयाश्च शुभ्राभ्रसमसैकताः ॥ ६२ ॥
विचित्रधातुरंगांश्च परिक्रीडनपर्वतान् । देवधामानि तुंगानि कूपान्वापी सभाः प्रपाः ॥ ६३ ॥
लोकं च विविधं पश्यन् दृश्यमानः सविस्मयं । विवेश नगरं धीरो नानाव्यापारसंकुलं ॥६४॥
शृणु शृण्विति तत्रायं प्रधानविशिखागतं । अशृणोत्पौरतः शब्दामिति विश्रब्धभाषितं ॥ ६५ ॥
पुरुषः कोन्वसौ लोके यो मुक्तां राजपाणिना । शक्तिं प्रसह्य शूरेंद्रो जितपद्मां गृहीष्यति ॥६६॥
स्वर्गे राज्यं ददामीति राजा चेत्प्रतिपद्यते । तथापि नानया कृत्यं कथया शक्तियातया ॥ ६७ ॥
जातश्चाभिमुखः शक्तेः प्राणैश्च परिवर्जितः । किं करिष्यति कन्यास्य राज्यं वा त्रिदशालये ६८

समस्तेभ्यो हि वस्तुभ्यः प्रियं जगति जीवितं । तदर्थमितरत्सर्वमिति को नावगच्छति ॥६९॥
श्रुत्वैवं कौतुकी कंचिदथ पप्रच्छ मानवं । भद्र ! का जितपद्मेयं यदर्थं भाषते जनः ॥ ७० ॥
सोवोचन्मृत्युकन्यासावतिपंडितमानिनी । किंन ते विदिता सर्वलोकविख्यातकीर्तिका ॥ ७१ ॥
एतन्नगरनाथस्य राज्ञः शत्रुंदमश्रुतेः । कनकाभासमुत्पन्ना दुहिता गुणशालिनी ॥ ७२ ॥
यतोऽनया जितं पद्मं कांत्या वदनजातया । पद्मा च सर्वगात्रेण जितपद्मोदिता ततः ॥ ७३ ॥
नवयौवनसंपन्ना कलालंकारधारिणी । पुंसोऽपि त्रिदशान् द्वेष्टि मनुष्येषु कथात्र का ॥ ७४ ॥
उच्चारयति नो शब्दमपि पुल्लिंगवर्तिनं । व्यवहारः समस्तोस्याः पुरुषार्थविवर्जितः ॥ ७५ ॥
अदः पश्यसि कैलाससदृशं भवनं वरं । अत्र तिष्ठत्यसौ कन्या शतसेवनलालिता ॥ ७६ ॥
शक्तिं यः पाणिना मुक्तां पित्रास्याः सहते नरः । वृणुते तमियं दग्ध—समीहा कृच्छ्रशालिनी॥७७॥
लक्ष्मीधरः समाकर्ण्य सकोपस्मयविस्मयः । दध्यौ सा कीदृशी नाम कन्या यैवं समीहते॥७८॥
दुष्टचेष्टामिमां तावत्कन्यां पश्यामि गर्वितां । अहो पुनरभिप्रायः प्रौढोयमनया कृतः ॥ ७९ ॥
ध्यायन्निति महोक्षेति राजमार्गेण चारुणा । विमानाभान्महाशब्दान् प्रासादान्विधुपांडुरान् ८०
दंतिनो जलदाकारांस्तुरंगांश्चलचामरान् । बलभीनृत्यशालांश्च पश्यन्मंथरचक्षुषा ॥ ८१ ॥

नानानिर्यूहसंपन्नं विचित्रध्वजशोभितं । शुभ्राभ्रराशिसंकाशं प्राप शत्रुंदमालयं ॥ ८२ ॥
भास्वद्भक्तिशताकीर्णं तुंगप्राकारयोजितं । द्वारं तस्य डुढौकेसौ शक्रचापाभतोरणं ॥ ८३ ॥
शस्त्रिवृंदावृते तस्मिन्नानोपायनसंकुले । निर्गच्छद्भिर्विशद्भिश्च सामंतैरविसंकटे ॥ ८४ ॥
द्वाःस्थेन प्रविशन्नेष भाषे सौम्यया गिरा । कस्त्वमज्ञापितो भद्र विशसि क्षितिपालयं ॥ ८५ ॥
सोवोचद्द्रष्टुमिच्छामि राजानं गच्छ वेदय । स्वपदेऽन्यमसौ कृत्वा गत्वा राज्ञे न्यवेदयत् ॥८६॥
दिदृक्षुस्त्वां महाराज पुमानिंदीवरप्रभः । राजीवलोचनो श्रीमान् सौम्यो द्वारेऽवतिष्ठते ॥ ८७ ॥
अमात्यवदनं वीक्ष्य राजावोचद्विशत्विति । ततः सुतः सुमित्रायाः प्रतीहारोदितोऽविशत् ॥८८॥
तं दृष्ट्वा सुंदराकारं सुगंभीरापि सा सभा । समुद्रमूर्तिवत्क्षोभं गता शीतांशुदर्शने ॥ ८९ ॥
प्रणामरहितं दृष्ट्वा विकटांसं सुभासुरं । किंचिद्विकृतचेतस्कस्तमपृच्छदरिंदमः ॥ ९० ॥
कुतः समागतः कस्त्वं किमर्थं क कृतश्रमः । ततो लक्ष्मीधरोऽवोचत्प्रावृषेण्यघनध्वनिः ॥ ९१ ॥
वाह्योहं भरतस्यापि महीहिंडनपंडितः । विद्वान् सर्वत्र ते भंक्तुं दुहितुर्मानमागतः ॥ ९२ ॥
अभग्नमानश्रृगेयं दुष्टकन्यागवी त्वया । पोषिता सर्वलोकस्य वर्तते दुःखदायिनी ॥ ९३ ॥
सोवोचद्यो मया मुक्तां शक्तः शक्तिं प्रतीक्षितं । कोसौ न जितपद्मायाः मानस्य ध्वंसको भवेत् ॥९४॥

उवाच लक्ष्मणः शक्त्या ग्रंहणं मे किमेकया । शक्तीः पंच विमुंच त्वं मयि शक्त्या समस्तया ॥९५॥
विवादो गर्विणोरेवं प्रवृत्तो यावदेतयोः । गवाक्षा निविडा तावत्पिहिता वनिताननैः ॥ ९६ ॥
परित्यक्तनरद्वेषा दृष्ट्वा लक्ष्मणपुंगवं । निर्व्यूहस्था जितांभोजा संज्ञादानादवारयत् ॥ ९७ ॥
दक्षवद्धांजलिं भीरुं सौमित्रिरिति संज्ञया । चकार जातबोधां तां माभैषीरिति सम्मदी ॥ ९८ ॥
जगाद च किमद्यापि कातर त्वं प्रतीक्षसे । विमुंचारिंदमाभिख्य शक्तिं शक्तिं निवेदय ॥ ९९ ॥
इत्युक्तः कुपितो राजा वद्ध्वा परिकरं दृढं । ज्वलत्पावकसंकाशां शक्तिमेकामुपाददौ ॥ १०० ॥
प्रतीक्षेच्छसि मर्तुं चेदित्युक्त्वा भृकुटीं दधत् । वैशाखं स्थानकं कृत्वा तां मुमोच विधानवित् १०१
अयनेनैव सा तेन धृता दक्षिणपाणिना । वर्तिकाग्रहणे को वा बहुमानो गरुत्मतः ॥ १०२ ॥
द्वितीयेतरहस्तेन कक्षाभ्यां द्वे सुविभ्रमः । शुशुभे सुभृशं ताभिश्चतुर्दंत इव द्विपः ॥ १०३ ॥
संक्रुद्धभोगिभोगानां संप्राप्तामथ पंचमीं । दंताग्राभ्यां दधौ शक्तिं पेशीमिव मृगाधिपः ॥ १०४ ॥
ततो देवगणाः खस्था ववृषुः पुष्पसंहतिं । ननृतुस्ताडयांश्चक्रुर्दुंदुभीश्च कृतस्वनाः ॥ १०५ ॥
प्रतीक्षारिंदमेदानीं शक्तिं त्वमिति लक्ष्मणे । कृतशब्दे परां प्राप साध्वसं सकलो जनः ॥१०६॥
तमक्षततनुं दृष्ट्वा लक्ष्मीनिलयवक्षसं । विस्मितोरिंदमो जातत्रपावनमिताननः ॥ १०७ ॥

जितपद्मा ततः प्राप स्मितच्छाया नतानना । लक्ष्मीधरं समाकृष्टा रूपेणाचरितेन च ॥ १०८ ॥
धृतशक्तेः समीपेस्य सा तन्वी शुशुभेतरां । कुलिशायुधपार्श्वस्था शची विनामितानना ॥ १०९ ॥
नवेन संगमेनास्या हृदयं तस्य कंपितं । यन्नासीत्कंपितं जातु संग्रामेषु महत्स्वपि ॥ ११० ॥
पुरस्तातनरेशानां कन्यया लक्ष्मणो वृतः । विभिद्यापत्रपापालीं तद्धरन्यस्तनेत्रया ॥ १११ ॥
सद्यो विनयनम्रांगो राजानं लक्ष्मणोऽब्रवीत् । मामकार्हसि मे क्षंतुं शैशवाद्दुर्विचेष्टितं ॥११२॥
बालानां प्रतिकूलेन कर्मणा वचसापि वा । भवद्विधा सुगंभीरा नैव यांति विकारितां ॥ ११३ ॥
ततः शत्रुंदमोप्येनं सप्रमोदः ससंभ्रमः । स्तंबेरमकराभाभ्यां कराभ्यां परिषष्वजे ॥ ११४ ॥
उवाच च परिक्लिन्नगंडांश्चंडन् गजान् क्षणात् । यो जैषं भीमयुद्धेषु भद्र सोहं त्वया जितः ११५
वन्यानपि महानागान् गंडशैलसमत्विषः । विमदीकृतवानस्मि सोयमन्य इवाभवं ॥ ११६ ॥
अहोवीर्यमहो रूपं सदृशाः शुभ ते गुणाः । अहोनुद्धततात्यंतं प्रश्रयश्च तवाद्भुतः ॥ ११७ ॥
भाषमाणे गुणानेवं राज्ञि संसद्यवस्थिते । लक्ष्मीधरत्रपातोऽभूत्क्वापि यात इव क्षणं ॥ ११८ ॥
अथ लब्धांबुदव्रातघोषभेर्यः समाहताः । राजादेशात् समाध्माताः शंखा शांसितवारणाः ॥११९॥
यथेष्टं दीयमानेषु धनेषु परमस्ततः । आनंदोऽवर्तताशेषनगरक्षोभदक्षिणः ॥ १२० ॥

ततो लक्ष्मीधरोवाचि राज्ञा पुरुषपुंगव । त्वया दुहितुरिच्छामि पाणिग्रहणमीक्षितुं ॥ १२१ ॥
सोऽवोचन्नगरस्यास्य प्रदेशे निकटे मम । ज्येष्ठास्तिष्ठति तं पृच्छ स जानाति यथोचितं ॥१२२॥
ततः स्यंदनमारोप्य जितपद्मां सलक्ष्मणां । संदारबंधुरभ्यासं प्रतस्थे तस्य सादरः ॥ १२३ ॥
ततः क्षुब्धापगानाथनिर्घोषप्रतिमध्वनिं । श्रुत्वा वीक्ष्य विशालं च धूलीपटलमुद्गतं ॥ १२४ ॥
जानुन्यस्तमुहुःस्रस्तकरा कृच्छात्समुत्थिता । सीता जगाद संभ्रांता गिरा प्रस्खलिता मुहुः १२५
कृतं सौमित्रिणा नूनं राघवोद्धतचेष्टितं । आशेयमाकुलात्यन्तं दृश्यते कृत्यमाश्रय ॥ १२६ ॥
आश्लिष्य जानकीं देवि माभैषीरिति शब्दयन् । उत्तस्थौ राघवः क्षिप्रं दृष्टिं धनुषि पातयन् १२७
तावच्च नरवृंदस्य महतः स्थितमग्रतः । सुतारगीतानिस्वानमीक्षांचक्रेंगनाजनं ॥ १२८ ॥
क्रमेण गच्छतश्चास्य प्रत्यासत्तिं मनोहराः । विभ्रमाः समदृश्यंत सुदारावयवोत्थिताः ॥ १२९ ॥
नृत्यंतं च समालोक्य तारनूपुरसिंजितं । विश्रब्धः सीतया सार्कं पद्मः पुनरुपाविशत् ॥ १३० ॥
स्त्रियो मंगलहस्तास्तं सर्वालंकारभूषिताः । डुढौकिरेऽतिहारिण्यः समदस्फीतलोचनाः ॥१३१॥
रथादुत्तीर्य पद्मास्यः सहितो जितपद्मया । पतिः पपात पद्मायाः पद्मस्य चरणौ द्रुतं ॥ १३२ ॥
पद्मस्य प्रणतिं कृत्वा सीताया अपि सत्रपः । निविश्य नातिनिकटे पद्मस्य विनयी स्थितः १३३

नृपा शत्रुंदमाद्याश्च क्रमात्कृत्वा नमस्कृतिं । पद्मस्य सहसीतस्य यथास्थानमवस्थिताः ॥१३४॥
तत्र संकथया छित्वा कुशलप्रश्नपूर्वया । कृते च पुनरानंदनर्तने पार्थिवैरपि ॥ १३५ ॥
ऋद्ध्या परमया युक्तः ससीतो लक्ष्मणो बलः । प्रविष्टः स्यंदनारूढो नगरं प्रमदान्वितः ॥१३६॥
तत्र लावण्यकिंजल्कयोषित्कुवलयाकुले । महाप्रासादसरसि स्वनद्भूषणपक्षिणि ॥ १३७ ॥
नरेभकलभौ सत्यव्रतसिंहध्वनेरलं । त्रासात्संकुचितस्वांतो कुमारश्रीसमन्वितौ ॥ १३८ ॥
शत्रुंदमकृतच्छंदौ किंचित्कालं महासुखौ । उषितौ सर्वलोकस्य चित्ताह्लादनदायिनौ ॥ १३९ ॥
जितपद्मां ततो भीतां विरहादतिदुःखितां । परिसांत्व्य प्रियैर्वाक्यैर्वनमालामिवादरात् ॥१४०॥
पद्मः सीतानुगो भूत्वा निशीथे स्वैरनिर्गतः । यातो लक्ष्मीधरो दत्वा पौराणामधृतिं परां १४१

ये जन्मांतरसंचितातिसुकृताः सर्वासुभाजां प्रियाः ।
यं यं देशमुपव्रजंति विविधं कृत्यं भजंतः परं ॥
तस्मिन्सर्वहृषीकसौख्यचतुरस्तेषां विना चिंतया ।
मृष्टान्नादिविधिर्भवत्यनुपमो यो विष्टपे दुर्लभः ॥ १४२ ॥
भोगैर्नास्ति मम प्रयोजनमिमे गच्छंतु नाशं खलाः ।

इत्येषां यदि सर्वदापि कुरुते निंदामलं द्वेषकाः ॥
एतैः सर्वगुणोपपत्तिपटुभिर्यातोऽपि शृंगं गिरेः ।
नित्यं यांति तथापि निर्जितरविर्दीप्त्या जनः संगमं ॥ १४३ ॥

इत्यार्षे रविषेणाचार्यप्रोक्ते पद्मचरिते जितपद्मोपाख्यानं नामाष्टत्रिंशत्तमं पर्व ।

---

# अथैकोनचत्वारिंशत्तमं पर्व ।

अथ नानाद्रुमक्ष्मासु बहुपुष्पसुगंधिषु । लतामंडपयुक्तासु सेवितासु सुखं मृगैः ॥ १ ॥
देवोपनीतनिश्शेषशरीरस्थितिसाधनौ । आयातां रममाणौ तौ ससीतौ रामलक्ष्मणौ ॥ २ ॥
क्वचिद्विद्रुमसंकाशं रामः किशलयं लघु । गृहीत्वा कुरुते कर्णे जानक्याः साध्विति ब्रुवत् ॥ ३ ॥
सुतारौ संगतां वल्लीं क्वचिदारोप्य जानकीं । स्वैरं दोलयतः पार्श्ववर्तिनौ रामलक्ष्मणौ ॥ ४ ॥
द्रुमखंडे क्वचित्स्थित्वा नितांतघनपल्लवे । कथाभिः सुविदग्धाभिः कुरुतस्तद्विनोदनं ॥ ५ ॥
इयमेतदयं वल्लीपलाशं तरुरीक्ष्यतां । हारिणी हरिहारीति सीतोचे राघवं क्वचित् ॥ ६ ॥

क्वचिद्भ्रमरसंघातैर्मुखसौरभलोलुपैः । कृच्छ्रादरक्षतामेतौ राजपुत्रीं कदर्थितां ॥ ७ ॥
शनैर्विहरमाणौ तौ ससीतौ शुभविभ्रमौ । काननेषु विचित्रेषु स्ववनेषु सुराविव ॥ ८ ॥
नानाजनोपभोग्येषु देशेषु निहितेक्षणौ । धारौ क्रमेण संप्राप्तौ पुरं वंशस्थलद्युतिं ॥ ९ ॥
सुदीर्घोऽपि तयोः कालो गच्छतोः सहसीतयोः । पुण्यानुगतयोर्नासीदपि दुःखलवप्रदः ॥१०॥
अपश्यतां च तस्यांते वंशजालातिसंकटं । नगं वंशधराभिख्यं भित्वेव भुवमुद्गतं ॥ ११ ॥
छायया तुंगशृंगाणां यः संध्यामिव संततं । दधाति निर्झराणां च हसतीव च शीकरैः ॥ १२ ॥
निर्गच्छंतीं प्रजां दृष्ट्वा पुरादथ स एककां । रामः पप्रच्छ भोः कस्मात्त्रासोयं सुमहानिति १३
सोवोचदद्य दिवसस्तृतीयो वर्तते नरः । नक्तमुत्तिष्ठतोऽमुष्मिन्नगे नादोस्य मस्तके ॥ १४ ॥
ध्वनिरश्रुतपूर्वोयं प्रतिनादी भयावहः । कस्येति बहुविज्ञानैर्न वृद्धैरपि वेद्यते ॥ १५ ॥
संक्षुभ्यतीव भूः सर्वा नदंतीव दिशो दश । सरांसि संचरंतीव निर्मूल्यंत इवांघ्रिपाः ॥ १६ ॥
रौरवारावरौद्रेण घनेन ध्वनिनामुना । श्रवणौ सर्वलोकस्य ताड्येतेऽयोघनैरिव ॥ १७ ॥
निशागमे किमस्माकं वधार्थमयमुद्यतः । करोति क्रीडनं तावत्कोऽपि विष्टपकंटकः ॥ १८ ॥
भयेन स्वनतस्तस्मादयं लोको निशागमे । पलायते प्रभाते तु पुनरेति यथायथं ॥ १९ ॥

साग्रं योजनमेतस्माद्तीत्यान्योन्यभाषितं । शृणोत्ययं जनः किंचित्प्राप्नोति च सुखासिकां २०
निशम्योक्तमिदं सीता बभाषे रामलक्ष्मणौ । वयमप्यत्र गच्छामो यत्र याति महाजनः ॥२१॥
कालं देशं च विज्ञाय नीतिशास्त्रविशारदैः । क्रियते पौरुषं तेन न जातु विपदाप्यते ॥ २२ ॥
प्रहस्यावोचतामेतामुद्विग्नां जनकात्मजां । गच्छ त्वं यत्र लोकोयं व्रजत्यलघुसाध्वसे ॥ २३ ॥
अन्विष्यंती प्रभाते नौ लोकेन सहितामुना । अमुष्मिन् गंडशैलांते गतभीरागमिष्यति ॥ २४ ॥
अस्मिन्महीधरे रम्ये ध्वनिरत्यतभीषणः । कस्यायमिति पश्यामो वयमद्येति निश्चयः ॥ २५ ॥
प्रभीष्यते वराकोयं लोकः शिशुसमाकुलः । पशुभिः सहितः स्वंतमस्य को नु करिष्यति ॥२६॥
वैदेही सहेरवोचे सततं भवतोरिमं । हर्तुमेकं ग्रहं शक्तः कः कुलीरग्रहोपमं ॥ २७ ॥
वदती पुनरेवं सा पद्मनाभस्य पृष्ठतः । लक्ष्मीधरकुमारस्य जगामावस्थिता पुरः ॥ २८ ॥
आरोहंती गिरिं देवी प्रखिन्नक्रमपंकजा । रराज श्रंगमब्दस्य चंद्ररेखेव निर्मला ॥ २९ ॥
चंद्रकांतेंद्रनीलांतः स्थितः पुष्पमणेरसौ । शलाकेवाभवत्तस्य पर्वतस्य विभूषणं ॥ ३० ॥
भृगुपातपरित्रस्तां क्वचिदुत्क्षिप्य तामिमौ । नयतोन्यत्र विश्रब्धहस्तालंबनकोविदौ ॥ ३१ ॥
विषमग्रावसंघातं विस्तीर्य त्रासवर्जितौ । विस्तीर्णनगमूर्धानं सतीतौ तावपापतुः ॥ ३२ ॥

अथ सद्ध्यानमारूढौ प्रलंबितमहाभुजौ । साधयंतौ सुदुस्साध्यां प्रतिमां चतुराननां ॥ ३३ ॥
परेण तेजसा युक्तावब्धिधीरौ नगास्थिरौ । शरीरचेतनान्यत्ववेदिनौ मोहवर्जितौ ॥ ३४ ॥
जातरूपधरौ कांतिसागरौ नवयौवनौ । संयतौ प्रवराकारौ ददृशुस्ते यथोदितौ ॥ ३५ ॥
दध्युश्च विस्मयं प्राप्ता यथा मुक्ताशुभार्जनं । निस्सारमीहितं सर्वं संसारे दुःखकारणं ॥ ३६ ॥
मित्राणि द्रविणं दाराः पुत्राः सर्वे च बांधवाः । सुखदुःखमिदं सर्वं धर्म एकः सुखावहः ॥३७॥
ढुढौकिरे च भक्त्याढ्या मूर्धविन्यस्तपाणयः । दधानाः परमं तोषं विनयानतविग्रहाः ॥ ३८ ॥
यावद्ददृशुरत्युग्रैर्विस्फुरद्भिर्महास्वनैः । भिन्नांजनसमच्छायैश्चलजिह्वैः पृदाकुभिः ॥ ३९ ॥
समुद्यतालकैर्भीमैश्चलद्भिरनिशं घनैः । नानावर्णैरतिस्थूलैर्वेष्टितैर्वृश्चिकैश्च तौ ॥ ४० ॥
तथाविधौ च तौ दृष्ट्वा रामोऽपि सहलक्ष्मणः । सहसा त्रासमायातो भेजे स्तंभमिव क्षणं ॥४१॥
वैदेही भयसंपन्ना भर्तारं परिसस्वजे । माभैषीरिति तामूचे भयं त्यक्त्वा क्षणेन सः ॥ ४२ ॥
उपसृत्य ततः स्वैरं ताभ्यां पन्नगवृश्चिकाः । अत्यस्ता कार्मुकाग्रेण मुहुः कृतविवर्तनाः ॥ ४३ ॥
अथोद्वर्त्य चिरं पादौ तयोर्निर्झरवारिणा । गंधेन सीतया लिप्तौ चारुणा पुरुभावया ॥ ४४ ॥
आसन्नानां च वल्लीनां कुसुमैर्वनसौरभैः । लक्ष्मीधरार्पितैः शुक्लैः पूरितांतरमार्चितौ ॥ ४५ ॥

ततस्ते करयुग्माब्जमुकुलभ्राजितालकाः । चक्रुर्योगीश्वरीं भक्त्या वंदनां विधिकोविदाः ॥ ४६ ॥
वीणां च सन्निधायांके वधूमिव मनोहरां । पद्मोऽवादयदत्यध्वं गायत्सु मधुराक्षरं ॥ ४७ ॥
अन्वगायादिमं लक्ष्मीलतालिंगितपादपः । वाक्कोकिलरवः पुत्रः कैकय्या (य्या) स्तत्त्वमाचरन् ४८
महायोगेश्वरा धीरा मनसा शिरसा गिरा । वंद्यास्ते साधवो नित्यं सुरैरपि सुचेष्टिताः ॥ ४९ ॥
उपमानाविनिर्मुक्तं यैरव्याहतमुत्तमं । प्राप्तं त्रिभुवनख्यातं सुभाग्यैर्दहदक्षरं ॥ ५० ॥
भिन्नं यैध्यानदंडेन महामोहाशिलातलं । दीनं विदंति ये विश्वं धर्मानुष्ठानवर्जितं ॥ ५१ ॥
गायतोरक्षराण्येवं तयोर्गानविधिज्ञयोः । तिरश्चामपि चेतांसि परिप्राप्तानि मार्दवं ॥ ५२ ॥
ततो विदितनिश्शेषचारुनर्तनलक्षणा । मनोज्ञा कल्पसंपन्ना हारमाल्यादिभूषिता ॥ ५३ ॥
लीलया परया युक्ता दर्शिताभिनया स्फुटं । चारुबाहुलताभारा हावभावादिकोविदा ॥ ५४ ॥
लयांतरवशोत्कंपिमनोज्ञस्तनमंडला । निश्शब्दचरणांभोजविन्यासा चलितोरुका ॥ ५५ ॥
गीतानुगमसंपन्नसमस्तांगविचेष्टिता । मंदिरे श्रीरिवानृत्यज्जानकी भक्तिचोदिता ॥ ५६ ॥
उपसर्गादिव त्रस्ते यातेऽस्तं भास्करे ततः । संध्यायां चानुमार्गेण यातायां चलतेजसि ॥ ५७ ॥
नक्षत्रमंडलालोकं निघ्नलालाभ्रसंभ्रमं । व्याप्नुवानं दिशः सर्वा गहनं ध्वांतमुद्गतं ॥ ५८ ॥

जनस्याश्रावि कस्यापि दिक्षु संक्षोभनं परं । सांराविणं तथा चित्रं भिंदंतमिव पुष्करं ॥ ५९ ॥
विद्युज्ज्वालामुखैर्लंबैरंबुदैर्व्याप्तमंबरं । क्वापि यात इवाशेष आलोकस्त्रासमाकुलः ॥ ६० ॥
अलं प्रतिभयाकारा दंष्ट्रालीकुटिलाननाः । अट्टहासान् महारौद्रान् भूतानां ससृजुर्गणाः ॥ ६१ ॥
क्रव्यादा विरसं रेमुः सानलं चाशिवाः शिवाः । संस्वनुर्ननृतुर्भीमं कलेवरशतानि च ॥ ६२ ॥
मूर्धोरोभुजजंघादीन्यंगानि ववृषुर्घनाः । दुर्गंधिभिः समेतानि स्थूलशोणितबिंदुभिः ॥ ६३ ॥
करवालीकरा क्रूरविग्रहा दोलितस्तनी । लंबोष्ठी डाकिनी नग्ना दृश्यमानास्थिसंचया ॥ ६४ ॥
मांसखंडाभमग्राही शिरोघटितशेखरा । ललाटप्रसरोज्जिह्वा पेशी शोणितवर्षिणी ॥ ६५ ॥
सिंहव्याघ्रमुखैस्तप्तलोहचक्राभलोचनैः । शूलहस्तैर्विदष्टोष्ठैर्भृकुटीकुटिलालकैः ॥ ६६ ॥
राक्षसैः परुषारावैर्नृत्यद्भिरतिसंकुलं । कंपिताद्रिशिलाजालं चुक्षोभ वसुधानलं ॥ ६७ ॥
विचेष्टितमिदं व्यर्थं नाज्ञासिष्टां महामुनी । तयोर्हि ज्ञानकर्मात्तशुक्लध्यानमयं तदा ॥ ६८ ॥
तथाविधं तमालोक्य नृत्तांतं वरभीतिदं । संहृत्य जानकी नृत्यमाश्लिष्यत्कंपिनी पतिं ॥ ६९ ॥
पद्मो जगाद तां देवि मा भैषीः शुभमानसे । उपगुह्य मुनेः पादौ तिष्ठ सर्वभयच्छिदौ ॥ ७० ॥
इत्युक्त्वा पादयोः कांतां मुनेरासाद्य लांगली । लक्ष्मीधरकुमारेण साकं सन्नाहमाश्रितः ॥ ७१ ॥

सजलाविव जीमूतौ गर्जितौ तौ महाप्रभौ । निर्घातमिव मुंचंतौ समास्फालयतां धनुः ॥ ७२ ॥
ततस्तौ संभ्रमी ज्ञात्वा रामनारायणाविति । सुरो वह्निप्रभाभिख्यस्तिरोधानमुपेयिवान् ॥ ७३ ॥
ज्योतिर्वासं गते तस्मिन् समस्तं तद्विचेष्टितं । सपदि प्रलयं जातं जातं च विमलं नभः ॥७४॥
प्रातिहार्ये कृते ताभ्यामिच्छद्ध्या परमं हितं । उत्पन्नं केवलज्ञानं मुनिपुंगवयोः क्षणात् ॥ ७५ ॥
चतुर्विधास्ततो देवा नानायानसमाश्रिताः । समाजग्मुः प्रशंसंतो मुदितास्तपसः फलं ॥ ७६ ॥
प्रणम्य विधिना तत्र कृत्वा केवलपूजनं । रचितांजलयो देवा यथास्थानमुपाविशन् ॥ ७७ ॥
केवलज्ञानसंभूतिसमाकृष्टसुरागमात् । दोषादिनात्मकौ कालावभूतां भेदवर्जितौ ॥ ७८ ॥
भूमिगोचरिणो मर्त्यास्तथा विद्यामहाबलाः । उपविष्टा यथायोग्यं कृत्वा केवलिनो महं ॥ ७९ ॥
प्रसन्नमानसौ सद्यः कृत्वा केवलिपूजनं । प्रणम्य सीतया सार्कं निविष्टौ रामलक्ष्मणौ ॥ ८० ॥
अथ तत्क्षणसंभूतपरमार्हासनस्थितौ । प्रणम्य सांजलिः पद्मः पप्रच्छैवं महामुनी ॥ ८१ ॥
भगवंतौ कुतो नक्तं केनायं वामुपद्रवः । अथवा स्वस्य युवयोरिदं जातं हितं परं ॥ ८२ ॥
त्रिकालगोचरं विश्वं विदंतावपि तौ समं । गिरं यामूचतुः साम्यपरिणामामितौ क्रमात् ॥ ८३ ॥
नगर्यां पद्मिनीनाम्नि राजा विजयपर्वतः । गुणसस्योत्तमक्षेत्रं भामिनी यस्य धारिणी ॥ ८४ ॥

अमृतस्वरसंज्ञोस्य दूतः शास्त्रविशारदः । राजकर्तव्यकुशलो लोकविद्गुणवत्सलः ॥ ८५ ॥
उपयोगेति भार्यास्य द्वौ तस्यां कुक्षिसंभवौ । उदितो मुदिताख्यश्च व्यवहारविशारदौ ॥ ८६ ॥
असौ दूतोन्यदा राज्ञा प्रहितो दूतकर्मणा । प्रवासं सेवितुं सक्तः स्वामिरक्तमतिर्भृशं ॥ ८७ ॥
वसुभूतिः समं तेन सखा तद्भक्तजीवितः । निर्गतस्तत्प्रियाशक्तिनिष्ठो दुष्टेन चेतसा ॥ ८८ ॥
सुप्तं तमसिना हत्वा निवृत्तिनगरीं पुनः । जनायावेदयत्तेन किलाहं विनिवर्तितः ॥ ८९ ॥
उपयोगा जगादैवं जहि मे तनयावपि । विश्रब्धं येन तिष्ठाम इति वध्वा निवेदितं ॥ ९० ॥
त्वरितं चोदितायासौ वृत्तांतो विनिवेदितः । सा हि तेन समं श्वश्र्व्या संगं ज्ञातवती पुरा ॥९१॥
ब्राह्मण्या वसुभूतेश्च रतिकार्या समीर्ष्यया । कथितं तत्तथाभूतं परमाकुलचित्तया ॥ ९२ ॥
बभूव चोदितस्यापि संदिग्धं विदितं पुरा । मुदितस्य च खड्गस्य दर्शनात्स्फुटतां गतं ॥ ९३ ॥
ततो रोषपरीतेन हतः सन्नुदितेन सः । मृत्वा च म्लेच्छतां प्राप क्रूरकर्मपरायणः ॥ ९४ ॥
अन्यदा प्रथितः क्षोण्यां गणेशो मतिवर्धनः । विहरन् पद्मिनीं प्राप श्रमणः सुमहातपाः ॥९५॥
अनुद्धरेति विख्याता धर्म्यध्यानपरायणा । महत्तरा तदा चासीदार्यिका गणपालिनी ॥ ९६ ॥
वसंततिलकाभिख्ये तत्रोद्याने सुसुंदरे । संघेन सहितस्तस्थौ चतुर्भेदेन सद्भुवि ॥ ९७ ॥

अथोद्यानस्य संभ्रांताः पालका किंकरा भृशं । नृपं विज्ञापयन्नेवं भूमिविन्यस्तपाणयः ॥ ९८ ॥
अग्रतो भृगुरत्युग्रः शार्दूलः पृष्ठतो नृपः । वद कं शरणं यामो नाशो नः सर्वथोदितः ॥ ९९ ॥
भद्रा किं किमिति ब्रूतेत्युक्त्वा नृपतिनागदं । नाथोद्यानभुवं प्राप्य श्रमणानां गणः स्थितः १००
यद्येनं वारयामोतः शापं ध्रुवमवाप्नुमः । नचेत्ते जायते कोपः इति नः संकटो महान् ॥ १०१ ॥
कल्पोद्यानसमच्छायमुद्यानं ते प्रसादतः । नरेंद्रकृतमस्माभिरप्रवेश्यं पृथुस्तनैः ॥ १०२ ॥
नैव वारयितुं शक्या तपस्तेजोतिदुर्गमः । त्रिदशैरपि दिग्वस्त्राः किमुतास्मादृशैर्जनैः ॥ १०३ ॥
मा भैष्ट ततो राजा कृत्वा किंकरसांत्वनं । उद्यानं प्रस्थितो युक्तो विस्मयेनातिभूरिणा ॥१०४॥
ऋद्ध्या च परया युक्तो वंदिभिः कृतनिस्वनः । उद्यानभुवमासीदत् प्रतापप्रकटः क्षितीट्॥१०५॥
ददर्श च महाभागान् वनरेणुसमुक्षितान् । मुक्तियोग्यक्रियायुक्तान् प्रशांतहृदयान्मुनीन् ॥१०६॥
प्रतिमावस्थितान्कांश्चित्प्रलंबितभुजद्वयान् । षष्ठाष्टमादिभिस्तीव्रैरुपवासैर्विशोषितान् ॥ १०७ ॥
स्वाध्यायनिरतानन्यान् षडंघ्रिमधुरस्वनान् । तन्निवेशितचेतस्कान् पाणिपादसमाहितान् ॥१०८॥
अवलोक्य मुनीनित्थं रुग्लगर्वांकुरोऽभवत् । अवतीर्य गजाद्धावी ननाम जयपर्वतः ॥ १०९ ॥
क्रमेण प्रणमन् साधूनाचार्यम् समुपागतं । प्रणम्य पादयोरूचे भोगे सद्बुद्धिमुद्वहन् ॥ ११० ॥

नरप्रधानदीप्तिस्ते यथेयं शुभलक्षणा । तथा कथं न ते भोगा रताः पादतलस्थिताः ॥ १११ ॥
जगाद मुनिमुख्यस्तं का ते मतिरियं तनौ । स्थास्नुतासंगतालीका संसारपरिवर्धिनी ॥ ११२ ॥
करिवालककर्णांतचपलं ननु जीवितं । मानुष्यकं च कदली सारसाम्यं विभर्त्यदः ॥ ११३ ॥
स्वप्नप्रतिममैश्वर्यं सक्तं च सह बांधवैः । इति ज्ञात्वा रतिः कात्र चिंत्यमानातिदुःखदे ॥ ११४ ॥
नरकप्रतिमे घोरे दुर्गंधे कृमिसंकुले । रक्तश्लेष्मादिसरसि प्रभूताशुचिकर्दमे ॥ ११५ ॥
उषितोनेकशो जीवो गर्भवासेऽतिसंकटे । तथा न शंकते मोहमहाध्वांतसमावृतः ॥ ११६ ॥
धिगंत्यताशुचिं देहं सतां शुभनिधानकं । क्षणनश्वरमत्राणं कृतघ्नं मोहपूरितं ॥ ११७ ॥
स्नसाजालकसंश्लिष्टमातिच्छातत्वगावृतं । अनेकरोगविहितं जरागमजुगुप्सितं ॥ ११८ ॥
एवंधर्मिणि देहेऽस्मिन् ये कुर्वंति जना धृतिं । तेभ्यश्चैतन्यमुक्तेभ्यः स्वस्तिः संजायते कथं ॥ ११९ ॥
शरीरसार्थता तस्मिन् परलोकप्रवासिनि । मुषंतः प्रसभं लोकं तिष्ठंतींद्रियदस्यवः ॥ १२० ॥
रमते जीवनृपतिः कुमतिप्रमदावृतः । अवस्कंधेन मृत्युस्तं कदर्थयितुमिच्छति ॥ १२१ ॥
मनो विषयमार्गेषु मत्तद्विरदविभ्रमं । वैराग्यबालिना शक्यं रोद्धुं ज्ञानांकुशश्रिता ॥ १२२ ॥
परस्त्रीरूपसस्येषु विभ्राणा लोभमुत्तमं । अमी हृषीकतुरगा धृतमोहमहाजवाः ॥ १२३ ॥

शरीररथमुन्मुक्ताः पातयंति कुवर्त्मसु । चित्तप्रग्रहमत्यंतं योग्यं कुरुत तद्दृढं ॥ १२४ ॥
नमस्यत जिनं भक्त्या स्मरतानारतं तथा । संसारसागरं येन समुत्तरत निश्चितं ॥ १२५ ॥
मोहारिकंटकं हित्वा तपःसंयमहेतुभिः । लोकाग्रनगरं प्राप्य राज्यं कुरुत निर्भयाः ॥ १२६ ॥
जैनं व्याकरणं श्रुत्वा सुधीर्विजयपर्वतः । त्यक्त्वा विपुलमैश्वर्यं बभूव मुनिपुंगवः ॥ १२७ ॥
तावपि भ्रातरौ तस्मिन् श्रुत्वा भक्त्या जिनश्रुतिं । प्रव्रज्य सुतपोभारौ संगतावाटतुर्महीं १२८
सम्मेदं च व्रजंतौ ताविष्टनिर्वाणवंदनौ । कथंचिन्मार्गतो भ्रष्टावरण्यानीं समाश्रितौ ॥ १२९ ॥
वसुभूतिचरेणाथ रौद्रम्लेच्छेन वीक्षितौ । अतिक्रुद्धेन चाहूतौ गिरा क्रोशकुठारया ॥ १३० ॥
जिघांसंतं तमालोक्य ज्यायान्मुदितमब्रवीत् । माभैषीर्भ्रातरद्य त्वं समाधानं समाश्रय ॥ १३१ ॥
म्लेच्छोयं हंतुमुद्युक्तो दृश्यते नौ दुराकृतिः । चिराभ्याससमृद्धाया क्षांतेरद्य विनिश्चयः ॥१३२॥
प्रत्युवाच स तं भीतिः का नौ जिनवचस्थयोः । नूनं मूढतयास्माभिरप्ययं प्रापितो वधं ॥१३३॥
एवं तौ विहितालापौ सविचारं समाश्रितौ । प्रत्याख्यानं शरीरादेः प्रतिमायोगमागतौ ॥१३४॥
समीपतां च संप्राप्तो म्लेच्छो हंतुं समुद्यतः । आलोक्य दैवयोगेन सैनेशेन निवारितः ॥१३५॥
रामः पप्रच्छ तेनैतौ व्यापादयितुमीप्सितौ । सेनाधिपेन निर्मुक्तौ रक्षितौ केन हेतुना ॥ १३६ ॥

केवल्यास्यात्समुद्भूता भारतीति भवांतरे । सुरपः कार्षकश्चास्तां यक्षस्थाने सहोदरौ ॥१३७॥
लुब्धकेनाहृतो जीवः शकुंतिर्ग्राममन्यदा । ताभ्यां कारुण्ययुक्ताभ्यां दत्वा मूल्यं विमोचितः ॥
ततोसौ शकुनो मृत्वा बभूव म्लेच्छभूपतिः । सुरपः कर्षकश्चैतावुदितो मुदितस्तथा ॥ १३९ ॥
पक्षीभवन्नसौ यस्मादेताभ्यां रक्षितं पुरा । तस्मात्सेनापतिर्भूयो ररक्षासाविमौ मुनी ॥ १४० ॥
लुब्धको जीवमोक्षेण वसुभूतिद्विजोत्तमः । संजातो कर्मयोगेन मनुष्यभवमुत्तमं ॥ १४१ ॥
यद्यथो निर्मितं पूर्वं तद्योग्यं जायतेऽधुना । संसारवाससक्तानां जीवानां गतिरीदृशी ॥ १४२ ॥
किमधीतैरिहानर्थग्रंथैरौशनसादिभिः । एकमेव हि कर्तव्यं सुकृतं सुखकारणं ॥ १४३ ॥
निःसृतावुपसर्गात्तौ मुनी कर्मानुभावतः । निर्वाणसदनं प्राप्तावकार्ष्टां जिनवंदनां ॥ १४४ ॥
एवं तौ चारुधामानि पर्यटथ समयं चिरं । रत्नत्रयं समाराध्य मृत्वा स्वर्गमुपागतौ ॥ १४५ ॥
निंद्ययोनिषु पर्यट्य वसुभूतिः सुकृच्छ्रतः । मनुष्यत्वं समासाद्य तापसव्रतमाश्रितः ॥ १४६ ॥
कृत्वा बालतपः कष्टं कालधर्मेण संगतः । अग्निकेतुरिति ख्यातः क्रूरो ज्योतिःसुरोऽभवत् १४७
तथास्ति भरतक्षेत्रे नाम्नारिष्टमहापुरं । प्रियव्रत इति ख्यातः पुरुभोगोऽत्र पार्थिवः ॥ १४८ ॥
महादेव्यावुभे तस्य योषिद्गुणसमन्विते । कांचनाभा प्रसिद्धैका पद्मावत्यपरोदिता ॥ १४९ ॥

च्युतौ तौ सुंदरौ नाकाज्जातौ पद्मवतीसुतौ । नाम्ना रत्नरथोऽन्यश्च विचित्ररथसंज्ञकः ॥१५०॥
उत्पन्नः कनकाभायां ज्योतिर्देवः परिच्युतः । अनुंधर इति ख्यातिं गुणैस्ते चावनिं गताः १५१
राज्यं पुत्रेषु निक्षिप्य षट्दिनानि जिनालये । कृतसंलेखनः सम्यक् स्वर्गं यातः प्रियव्रतः १५२
राज्ञान्यस्य सुता नाम्ना श्रीप्रभा श्रीप्रभेव सा । लब्धा रत्नरथेनेष्टा कनकाभांगजेन च॥१५३॥
लब्धा रत्नरथेनैषा ततो द्वेषमुपागतः । अनुंधरो महीं तस्य विनाशयितुमुद्यतः ॥ १५४ ॥
ततो रत्नरथेनासौ विचित्रस्यंदनेन च । निर्जित्य समरे पंच दंडान्प्राप्य निराकृतः ॥ १५५ ॥
खलीकारात्ततः पूर्वजन्मवैराच्च कोपतः । जटावल्कलधारी स तापसोऽभूद्विषांघ्रिवत् ॥ १५६ ॥
भुक्त्वा राज्यं चिरं कालं सोदरौ नु प्रबोधिनौ । प्रव्रज्य सुतपः कृत्वा स्वर्गलोकमुपागतौ १५७
तौ महातेजसौ तत्र सुखं प्राप्य सुरोचितं । च्युतौ सिद्धार्थनगरे क्षेमंकरमहीभृतः ॥ १५८ ॥
उत्पन्नौ विमलाख्यायां महादेव्यां सुसुंदरौ । देशभूषण इत्याद्यो द्वितीयः कुलभूषणः ॥ १५९ ॥
विद्यार्जनोचितौ तौ च क्रीडंतौ तिष्ठतो गृहे । नाम्ना सागरघोषश्च विद्वान् भ्राम्यन्नुपागतः १६०
राज्ञा च संगृहीतस्य तस्य पार्श्वेऽखिलाः कलाः । शिक्षितौ तावुदारेण विनयेन समन्वितौ १६१
स्वजनेनैव तौ कंचिज्जानीतस्तद्गतात्मकौ । कर्तव्यं हि तयोः सर्वं विद्याशालगतं तदा ॥१६२॥

उपाध्यायेन चानीतौ सुचिरात्पितुरंतिकं । दृष्ट्वा योग्यौ नरेंद्रेण यथाकामं स पूजितः ॥ १६३ ॥
आवयोः किल दारार्थं पित्रा सामंतकन्यकाः । आनायिता इति श्रोत्र-पथं वार्ता तयोर्गता १६४
ततस्तौ परया द्युत्या वाह्यालीं गंतुमुद्यतौ । वातायनस्थितां कन्यां पुरशोभामपश्यतां ॥ १६५ ॥
तत्संगमार्थमन्योन्यं मानसे कुरुतां वधं । ततश्च वंदिनो वक्त्रादिति शब्दः समुत्थितः ॥ १६६ ॥
साकं विमलया देव्या श्रीमान् क्षेमंकरो नृपः । चिरं जयति यस्यैतौ तनयौ त्रिदशोपमौ ॥ १६७ ॥
वातायनस्थितैषापि कन्यका कमलोत्सवा । जयति भ्रातरावेतौ यस्याश्चारुगुणोत्कटौ ॥ १६८ ॥
ततस्तौ तद्गिरो ज्ञात्वा सोदरैषावयोरिति । वैराग्यं परमं प्राप्ताविति चिंतामुपागतौ ॥ १६९ ॥
धिग्धिग्धिगिदमत्यंतं पापमस्माभिरीहितं । अहो मोहस्य दारुण्यं सोदरा येनकांक्षिता ॥ १७० ॥
चिंतयित्वा प्रमादेन दुःखमस्माकमीदृशं । कुर्वंति ये सदा कार्यं तेषान्त्वत्यन्तसाहसम् ॥ १७१ ॥
असारोयमहोत्यन्तं संसारो दुःखपूरितः । यत्र नामेदृशा भावाः जायंते पापकर्मणाम् ॥ १७२ ॥
कुतोप्यपुण्यतः क्षिप्रं चेतनो नरकं व्रजेत् । सम्प्राप्य बोधमस्माभिः सद्वृत्तश्चित्तमुत्तमं ॥ १७३ ॥
इति संचिंत्य संत्वज्य मातरं दुःखमूर्च्छितां । स्नेहाकुलं च पितरं दीक्षां दैग्वाससीं श्रितौ ॥ १७४ ॥
नभोविहरणीं लब्धिं प्राप्य तौ सुतपोधनौ । आहिषांतां जगन्मान्यां जिनतीर्थाभिपूजितां १७५

क्षेमंकरनरेशस्तु तच्छोकानलदीपितः । युगपत्सकलं त्यक्त्वाऽऽहारे पंचत्वमागतः ॥ १७६ ॥
सर्वदारभ्य पूर्वोक्तात्स एव हि पितावयोः । तेन नौ प्रति वात्सल्यं तस्य नित्यमनुत्तमं ॥१७७॥
गरुडाधिपतिश्चासौ जातः ख्यातो मरुन्वतः । सुंदरोद्भुतविक्रांतो महालोचनसंज्ञकः ॥ १७८ ॥
क्षुब्धः स्वासनकंपेन प्रयुज्यावधिमूर्जितः । आगतोऽयं स्थितो भाति व्यंतरामरसंसदि ॥ १७९ ॥
अनुंधरस्तु विहरंस्तापसाचारतत्परः । कौमुदी नगरीं यातः शिष्यसंघेन वेष्टितः ॥ १८० ॥
नरेशः सुमुखस्तत्र रतवत्यस्य भामिनी । कांता शतप्रधानत्वं प्राप्ता परमसुंदरी ॥ १८१ ॥
अवरुद्धा च सच्चेष्टा मदनेति विलासिनी । पताका मदनेनेव जित्वा लोकमुपार्जिता ॥ १८२ ॥
साधुदत्तमुनेः पार्श्वे सम्यग्दर्शनमेदसौ । तत्प्राप्येतरतीर्थानि तृणतुल्यान्यमन्यत ॥ १८३ ॥
तस्याः पुरोऽथ रहसिं कदाचिदवदन्नृपः । अहोऽसौ तापसः स्थानं महतां तपसामिति ॥१८४॥
ततो मदनयाऽवाचि कीदृशाथेदृशां तपः । मिथ्यादृशामविज्ञानलोकदंभनकारिणां ॥ १८५ ॥
तच्छ्रुत्वा भूपतिस्तस्यै क्रुद्धः साचागदत्पुनः । मारुषः पश्यनाथेमं मेऽचिरुत्पादवर्तिनं ॥ १८६ ॥
इत्युक्त्वा स्वगृहं गत्वा शिक्षयित्वा मनोहरां । आत्मजां नागदत्ताख्यां प्रेषयत्तापसाश्रमं १८७
तस्मै सैकान्तयाताय योगस्थाय सुविभ्रमा । आस्थितामरकन्येव परमाकल्पधारिणी ॥ १८८ ॥

वातेहितांवरव्याजादूरूकांडमदर्शयत् । मारस्यांतः पुरस्थानं लावण्यरसंनिर्भरं ॥ १८९ ॥
समाधानोपदेशेन कुंकुमद्रवपिंजरं । मारवारणकुंभाभं तथा वक्षसिजद्वयं ॥ १९० ॥
कुसुमग्रहणव्याजात्स्रस्तनीविरतेर्गृहं । नाभिमण्डलमुत्तेजः कक्षोद्देशं च सुन्दरी ॥ १९१ ॥
अज्ञानयोगमेतस्य भित्त्वा लोचनमानसे । अपप्तत‍ां प्रदेशेषु तेषु तस्याः सुबन्धने ॥ १९२ ॥
ताडितः स्मरवाणैश्च समुच्छायसमाकुलः । गत्वा शनैरपृच्छत्तां त्वं बाले कात्र वर्तसे ॥ १९३ ॥
संध्याकालेऽत्र ये केचित्प्राणिनः क्षुद्रका अपि । आलयं स्वं निषेवन्ते ननु त्वं सुकुमारिका १९४
सावोचन्मधुरैर्वर्णैः भिंदंती हृदयस्थलीं । लीलया बाहुलतिकामुन्नयंती मुखं प्रति ॥ १९५ ॥
चलन्नीलोत्पलच्छाये धारयंती विलोचने । किंचिद्दैन्यमिव प्राप्ता बहुविस्फुताधरा ॥ १९६ ॥
श्रृणु ! नाथ ! दयाधार ! शरणागतवत्सल ! अंबयाऽहं विना दोषादद्य निर्वासिता गृहात् १९७
कषायप्रावृता चाहं भवदीयामिमां स्थितिं । आचरामि प्रसादं मे कुरुनाथानुमोदनात् ॥१९८॥
शुश्रूषां भवतः कृत्वा दिवा नक्तं च सक्तया । इह लोको मया लब्धः परलोकश्च जायते॥१९९॥
किं तद्धर्मार्थकामेषु न यद्भवति लभ्यते । निधानमसि काम्यानां मया पुण्येन वीक्षितः ॥२००॥
इति संभाषिते तस्याः विज्ञाय प्रगुणं मनः । स्मरेण दह्यमानोऽसावब्रवीदिति वित्तु वः ॥२०१॥

भद्रे कोहं प्रसादस्य प्रसीद त्वं ममोत्तमे । भजस्व भक्तिमेषोहं यावज्जीवं करोमि ते ॥२०२॥
इत्युक्त्वालिंगितुं क्षिप्रं तं प्रसारितबाहुकं । अगदीत्पाणिना कन्या वारयंती विशारदा ॥२०३॥
न वर्तते इदं कर्तुं कन्याहं विधिवर्जिता । पृच्छाव मातरं गत्वा गृहेऽस्मिन् दृश्यतोरणे ॥२०४॥
परा कारुण्ययुक्तेयं भवतः सेमुषी यथा । एतां प्रसादयावश्यं तुभ्यमेषा ददामि मां ॥ २०५ ॥
एवमुक्तस्तया साकं त्वरया व्याकुलक्रमः । वेश्माविशद्विलासिन्याः सवितर्यस्तमागते ॥ २०६ ॥
तत्कथाकृष्टनिःशेषहृषीकविषयो ह्यसौ । किञ्चिद्वेत्तिस्म नोपायं विशत्वारीमिव द्विपः ॥ २०७ ॥
न श्रृणोति स्मरग्रस्तो न जिघ्रति न पश्यति । न जानात्यपरस्पर्शं न विभेति न लज्जते ॥२०८॥
आचार्य मोहतः कष्टमनुतापं प्रपद्यते । अंधो निपतितः कूपे यथा पन्नगसेविते ॥ २०९ ॥
वेश्याचरणयोश्चासौ कृत्वा विलुठितं शिरः । याचते कन्यकां पूर्वसंज्ञितश्चाविशन्नृपः ॥ २१० ॥
स्थापितो बंधयित्वाऽसौ राज्ञा नक्तं समीक्षितः । खलीकारं प्रभाते च प्रकटं प्रापितः परं २११
ततोऽपमाननिर्दग्धः परं दुःखं समुद्वहन् । भ्राम्यन्महीं मृतः क्लेशयोनिषु भ्रमणं स्थितः २१२
ततःकर्मानुभावेन मनुष्यभवमागतः । दारिद्र्यपंकनिर्मग्नं जनादरविवर्जितं ॥ २१३ ॥
गर्भस्थ एव चैतस्मिन् विदेशं जनको गतः । उद्वेजितः कुटुंबिन्या कलहक्रूरवाक्यया ॥ २१४ ॥

कुमारे च हृता माता म्लेच्छेन विषयाहतौ। दुःखं च परमं प्राप्तः सर्वबंधुविवर्जितः ॥ २१५ ॥
ततस्तापसतां प्राप्य कृत्वा बालतपः परं। ज्योतिर्लोकं समारुह्य नाम्ना वह्निप्रभोऽभवत् ॥२१६॥
अनंतवीर्यनामाथ केवली सेवितः सुरैः। इत्यंतेवासिना पृष्टो धर्मचिंतागतात्मना ॥ २१७ ॥
मुनिसुव्रतनाथस्य तीर्थेऽस्मिन् भवता समः। कोन्योनुभविता भव्यो लोकस्योत्तरकारणं २१८
सोवोचन्मयि निर्वाणं गतेऽत्र श्रमणक्षितौ। देशभूषण इत्येको द्वितीयः कुलभूषणः ॥ २१९ ॥
भवितारौ जगत्सारौ केवलज्ञानदर्शिनौ। यौ समाश्रित्य लोकोयं तरिष्यति भवार्णवं ॥ २२० ॥
सोऽपि वह्निप्रभस्तस्माच्छ्रुत्वा केवलिनो मुखात्। अवस्थानं निजं यातो दध्यौ केवलिभाषितं ॥
अन्यदावधिना ज्ञात्वा योगिनाविह नौ गिरौ। अनंतवीर्यसर्वज्ञमिथ्यावाक्यं करोम्यहं ॥२२२॥
एवमुक्त्वाभिमानेन परमेणातिमोहितः। आगतः पूर्ववैरेण कर्तुं परमुपद्रवं ॥ २२३ ॥
चरमांगधरं दृष्ट्वा स भवंतमतिद्रुतं। सुरेंद्रकोपभीत्या च तिरोधानमुपागतः ॥ २२४ ॥
नारायणसमेतेन प्रातिहार्ये त्वया कृते। केवलज्ञानमस्माकं जातं घातिपरिक्षये ॥ २२५ ॥
इति गत्यागतीः श्रुत्वा प्राणिनां वैरकारिणां। वैरानुबंधमुत्सृज्य स्वस्था भवत जंतवः ॥२२६॥
महापूतमिति श्रुत्वा वचनं केवलीरितं। मुहुः सुरासुरा नेमुस्तं भीता भवदुःखतः ॥ २२७ ॥

तावच्च गरुडाधीशः परमं संपदं श्रितः । नत्वा केवलिनः पादौ शयकंजार्पितालिकः ॥ २२८ ॥
ऊचे रघुकुलोद्योतं विलसन्मणिकुंडलं । स्निग्धां प्रसारयन् दृष्टिं प्रेमतर्पितमानसः ॥ २२९ ॥
प्रातिहार्यं कृतं येन त्वया मत्सुतयोः परं । ततस्तुष्टोऽस्मि याचस्व वस्तु यत्तेऽभिरोचते ॥२३०॥
क्षणं चिंतागतः स्थित्वा जगाद रघुनंदनः । त्वया सुरप्रसन्नेन स्मर्तव्या वयमापदि ॥ २३१ ॥
साधुसेवाप्रसादेन फलमेतदुपागतं । अंगीकर्तव्यमस्माभिर्भवद्वारविनिर्गतं ॥ २३२ ॥
एवमस्त्विति तेनोक्ते दध्मुः शंखान् दिवौकसः । भेर्यश्चमेघनिनदाः सानुवाद्यः समाहताः २३३
साधुपूर्वभवं श्रुत्वा संवेगं परमं श्रिताः । प्राव्रजुर्जनाः केचिदन्येऽणुव्रतमाश्रिताः ॥ २३४ ॥

देशकुलभूषणमुनी नु जगदर्च्यौ । सर्वभवदुःखमलसंगमविमुक्तौ ॥
ग्रामपुरपर्वतमटंबपरिरम्यान् । बभ्रमतुरुत्तमगुणैरुपचितांगान् ॥ २३५ ॥
देशकुलभूषणमहामुनिभवं ये । वृत्तमातिपूतमिदमुत्कटसुभावाः ॥
श्रोतवचसोविषयतामुपनयंते । ते रविनिभा दुरितमाशु विसृजंति ॥ २३६ ॥

इत्यार्षे रविषेणाचार्यप्रोक्ते पद्मचरिते देशकुलभूषणोपाख्यानं नामैकोनचत्वारिंशत्तमं पर्व ।

# अथ चत्वारिंशत्तमं पर्व ।

श्रुत्वा केवलिनः पद्ममंत्यविग्रहधारिणं । स्तुत्वा सजयनिस्वानं प्रणेमुः सर्वपार्थिवाः ॥ १ ॥
वंशस्थलपुरेशश्च महाचित्तः सुरप्रभः । सलक्ष्मणं सपत्नीकं पद्मनाभमपूजयत् ॥ २ ॥
प्रासादशिखरच्छाया धवलीकृतपुष्करं । नावृणोन्नगरं गंतुं रामो राज्ञापि याचितः ॥ ३ ॥
वंशादिशिखिरे रम्ये हिमवच्छिशिरोपमे । समविस्तीर्णसद्वर्णरमणीयशिलातले ॥ ४ ॥
नानावृक्षलताकीर्णे नानाशकुनिनादिते । सुगंधानिलसंपूर्णे नानापुष्पफलाकुले ॥ ५ ॥
पद्मोत्पलवनाढ्याभिर्वापीभिरतिशोभिते । सर्वर्तुसहितोद्युक्ते वसंतकृतसेवने ॥ ६ ॥
सर्जिता परमा भूमिः शुद्धादर्शतलोपमा । दशार्धवर्णरजसा कल्पितानेकभक्तिका ॥ ७ ॥
कुंदातिमुक्तिकलता वकुला कमलानि च । यूथिका मल्लिका नागा अशोकाश्चारुपल्लवाः ॥ ८ ॥
एते चान्ये च भूयांसश्चारुभासः सुगंधयः । भावारम्याविलासाभिः प्रमदाभिः प्रकल्पिता ॥ ९ ॥
वद्ध्वा परिकरं पुंभिः सुविदग्धैः सुसंभ्रमैः । मंगलालापसंपन्नैः स्वामिभक्तिपरायणैः ॥ १० ॥
मेघकांडानि वस्त्राणि नानाचित्रधराणि च । प्रसारितानि रुद्राणि वैजयंतीशतानि च ॥ ११ ॥

किंकणीजालयुक्तानि मुक्तादामशतानि च । चामराणि विचित्राणि लंबूषमणिपट्टिका ॥ १२ ॥
दर्पणा बुद्बुदावल्यो विस्फुरद्भास्करांशवः । न्यस्तान्येतानि तुंगेषु तोरणेषु ध्वजेषु च ॥ १३ ॥
अवनौ पूर्णकलशाः स्थापिता विधिसंयुताः । हंसा इव निविष्टास्ते विरेजुर्नलिनीवने ॥ १४ ॥
यत्र यत्र पदन्यासं करोति रघुनंदनः । तत्र तत्रोरुपद्मानि स्थापितानि महीतले ॥ १५ ॥
शयनान्यासनैः साकं रचितानि यतस्ततः । मणिकांचनचित्राणि सुखस्पर्शधराण्यलं ॥ १६ ॥
सलवंगादितांबूलं प्रवराण्यंशुकानि च । महासुगंधयो गंधा भास्वंत्याभरणानि च ॥ १७ ॥
सूदगेहसमेतानि कंदुशालाशतानि च । बहुभेदान्नपूर्णानि कृतयत्नानि सर्वतः ॥ १८ ॥
गुडेन सर्पिषा दध्ना भूः क्वचिद्भाति पंकिला । इतिकर्तव्यताभाजा जनेनादरिणान्विता ॥ १९ ॥
स्वाहारेण क्वचित्तृप्ता पथिकाः स्वेच्छया स्थिता । प्रसादयंति विश्रब्धा संकथाबद्धगुल्मकाः २०
क्वचिन्ना शेखरी भाति मदिरामत्तलोचनः । क्वचित्सीमंतिनी मत्ता वकुलामोदवाहिनी ॥ २१ ॥
क्वचिन्नाट्यं क्वचिद्गीतं क्वचित्सुकृतसंकथा । क्वचित्कांतैः समं नार्यो रमंते चारुविभ्रमाः ॥ २२ ॥
दत्तप्रेंखा क्वचित्स्मेरैः सलीलैर्विटपुंगवैः । विलासिन्यो विराजंते गीर्वाणगणिकोपमाः ॥ २३ ॥
रामलक्ष्मणयोर्यानि रचितानि ससीतयोः । क्रीडाधामानि कस्तानि नरो वर्णयितुं क्षमः ॥२४॥

नानाभूषणयुक्तांगौ सुमाल्यांबरधारिणौ । यथेप्सितकृताहारौ श्रिया परमयान्वितौ ॥ २५ ॥
सीता चाक्लिष्टसौभाग्या दुरितासंगवर्जिता । रमते तत्र चेष्टाभिः शास्त्रदृष्टाभिरुज्ज्वलं ॥ २६ ॥
तत्र वंशगिरौ राजं रामेण जगदिंदुना । निर्मापितानि चैत्यानि जिनेशानां सहस्रशः ॥ २७ ॥
महावष्टंभसुस्तंभा युक्तविस्तारतुंगताः । गवाक्षहर्म्यवलभीप्रभृत्याकारशोभिताः ॥ २८ ॥
सतोरणमहाद्वारा सशालाः परिखान्विताः । सितचारुपताकाढ्या बृहद्धंटारवाचिताः ॥ २९ ॥
मृदंगवंशमुरजसंगीतोत्तमनिस्वनाः । झर्झरैरानकैः शंखभेरीभिश्च महारवाः ॥ ३० ॥
सततारध्वनिः शेषरम्यवस्तुमहोत्सवाः । विरेजुस्तत्र रामीया जिनप्रासादपंक्तयः ॥ ३१ ॥
रेजिरे प्रतिमास्तत्र सर्वलोकनमस्कृताः । पंचवर्णा जिनेंद्राणां सर्वलक्षणभूषिताः ॥ ३२ ॥
अन्यदाथ महीपालरामो राजीवलोचनः । लक्ष्मीधरमुवाचेदं क्रियते किमतः परं ॥ ३३ ॥
इह संप्रेरितः कालः सुखेन परमे गिरौ । जिनचैत्यसमुत्थानाः स्थापिता कीर्तिरुज्ज्वला ॥ ३४ ॥
अनेन भूभृता श्रेष्ठैरुपचारशतैर्हृता । अत्रैव हृदि तिष्ठामस्तदा कार्यं विनश्यति ॥ ३५ ॥
इह तावदलं भोगैरिति चिंतयतोपि मे । न मुंचति क्षणमपि प्रवरो भोगसंततिः ॥ ३६ ॥
इह यत्क्रियते कर्म तत्परत्रोपभुज्यते । पुराकृतानां पुण्यानां इह संपद्यते फलं ॥ ३७ ॥

अस्माकमत्र वसतां विभ्रतां सुखसंपदं । अमी ये दिवसा यांति न तेषां पुनरागमः ॥ ३८ ॥
नदीनां चंडवेगानामायुषो दिवसस्य च । यौवनस्य च सौमित्रे यद्गतं गतमेव तत् ॥ ३९ ॥
नद्या कर्णरवायास्तु परतो रोमहर्षणं । श्रूयते दंडकारण्यं दुर्गमं क्षितिचारिभिः ॥ ४० ॥
भारती न विशत्याज्ञा तस्मिन् जनपदोज्झिते । तत्रार्णवतटांकृत्वा विदध्मः कचिदालयं ॥४१॥
यदाज्ञापयसीत्युक्ते कुमारेण ससंभ्रमं । सुरेंद्रसदृशं भोगं भुक्त्वा ते निर्गतास्त्रयः ॥ ४२ ॥
अनुगत्य सुदूरं तौ बलोपेतः सुरप्रभः । कृच्छ्रान्निवर्तितस्ताभ्यां शोकी पुरमुपागतः ॥ ४३ ॥

एषोऽपि तुंगः परमो महीध्रः । श्रीमन्नितंबो बहुधानुसानुः ॥
विलंपतीभिः ककुभां समूहं । भासा चकाज्जैनगृहावलीभिः ॥ ४४ ॥
रामेण यस्मात्परमाणि तस्मिन् । जैनानि वेश्मानि विधापितानि ॥
निर्नष्टवंशाद्रिवचाः स तस्मा-द्रविप्रभो रामगिरिः प्रसिद्धः ॥ ४५ ॥

इत्यार्षे रविषेणाचार्यप्रोक्ते पद्मपुराणे रामगिर्युपाख्यानं नाम चत्वारिंशत्तमं पर्व ।

# अथैकचत्वारिंशत्तमं पर्व ।

अथानरण्यनप्तारौ श्रीमंतौ सीतयान्वितौ । दिदृक्षौ दक्षिणांभोधिमायातां सुखभोगिनौ ॥ १ ॥
पुरग्रामसमाकीर्णानतीत्य विषयान् बहून् । प्रविष्टौ तौ महारण्यं नानामृगसमाकुलं ॥ २ ॥
यस्मिन्न विद्यते पंथा स्थानं नार्यनिषेवितं । पुलिंदानामपि प्रायो दुश्चरं यन्नगाकुलं ॥ ३ ॥
नानावृक्षलताकीर्णं महाविषमगह्वरं । गुहांधकारगंभीरं वहन्निर्झरनिम्नगं ॥ ४ ॥
क्रोशं क्रोशं शनैस्तत्र गच्छंतौ जानकीवशात् । निर्भयौ क्रीडनोद्युक्तौ प्राप्तौ कर्णरवां नदीं ॥५॥
यस्यास्तटानि रम्याणि तृणैर्युक्तानि भूरिभिः । सामान्यायतदेशानि स्पर्शं विभ्रांति सौख्यदं॥६॥
अनत्युच्चैर्घनच्छायैः फलपुष्पविभूषितैः । रेजुस्तटद्रुमैस्तस्याः समीपधरणीधराः ॥ ७ ॥
वनमेतदलं चारु नदी चैतौ निरूपितौ । रम्ये तत्र तरुच्छायेऽवस्थितौ सीतयान्वितौ ॥ ८ ॥
क्षणं स्थित्वातिरम्याणि सैकतान्यवगाह्य च । जलावगाहनं चक्रुस्ते रम्यक्रीडयोचितं ॥ ९ ॥
ततो मृष्टानि पक्वानि फलानि कुसुमानि च । यथेच्छमुपभुक्तानि तैः सुखं कृतसंकथैः ॥ १० ॥
तत्र भांडोपकरणं सकलं केकयीसुतः । मृदावसैः पलाशैश्च विविधैराशु निर्ममे ॥ ११ ॥

अमीषु स्वादुचारूणि फलानि सुरभीनि च । वनजानि च सस्यानि राजपुत्री समस्करोत् ॥१२॥
अन्यदातिथिवेलायां गगनांगणचारिणौ । प्रभापटलसंवीतविग्रहौ चारुदर्शनौ ॥ १३ ॥
ज्ञानत्रितयसंपन्नौ महाव्रतपरिग्रहौ । परेण तपसा युक्तौ दुस्पृहामुक्तमानसौ ॥ १४ ॥
मासोपवासिनौ वीरौ गुण्यौ शुभसमीहितौ । यच्छंतौ नयनानंदौ बुधचंद्रमसाविव ॥ १५ ॥
मुनी सुगुप्तिगुप्ताख्यावायांतौ सम्मुखं भुवा । यथोक्ताचारसंपन्नौ सहसा सीतयेक्षितौ ॥ १६ ॥
ततः प्रमदसंभारविकसन्नेव शोभया । दयिताय तया ख्यातमिति रोमांचितांगया ॥ १७ ॥
पश्य पश्य नरश्रेष्ठ तपसा कृशविग्रहं । दैगंबरं परिश्रांतं भदंतयुगलं शुभं ॥ १८ ॥
क तत्क तत्प्रिये साध्वि पंडिते चारुदर्शने । निर्ग्रंथयुगलं दृष्टं भवत्या गुणमंडने ॥ १९ ॥
यन्निरीक्ष्य वरारोहे सुचिरं पापमर्जितं । क्षणात्प्रणाशमायाति जनानां भक्तचेतसां ॥ २० ॥
इत्युक्ते रघुचंद्रेण सीतोवाच ससंभ्रमा । इमाविमाविति प्रीत्या स तदाभूत्समाकुलः ॥ २१ ॥
ततो युगमितक्षोणीदेशविन्यस्तलोचनौ । मुनी प्रशांतगमनौ सुसमाहितविग्रहौ ॥ २२ ॥
अभ्युत्थानाभियानाभिस्तुष्टः प्रणमनादिभिः । दंपतीभ्यां कृतावेतौ पुण्यनिर्झरपर्वतौ ॥ २३ ॥
शुच्यंगया च वैदेह्या महाश्रद्धापरीतया । परिविष्टं तयोः श्राद्धं रमणेन समेतया ॥ २४ ॥

गवामरण्यजातानां महिषीणां च चारुणा । हैयंगवीनमिश्रेण पयसा तत्समुद्भवैः ॥ २५ ॥
खर्जूरैरिंगुदैराम्रैर्नालिकेरै रसान्वितैः । बदराम्लातकाद्यैश्च वैदेह्या सुप्रसाधितैः ॥ २६ ॥
आहार्यैर्विविधैः शास्त्रदृष्टिशुद्धिसमन्वितैः । पारणां चक्रतुर्गृद्धासंबंधोज्झितचेतसौ ॥ २७ ॥
एवं च पर्युपास्यैतौ मुनी रामः श्रियान्वितः । समस्तभावसंभारकृतानिर्ग्रंथमाननः ॥ २८ ॥
तावद्दुंदुभयो नेदुर्गगने दृष्टिताडिताः । ववौ समीरणः स्वैरं घ्राणरंजनकारणं ॥ २९ ॥
साधुसाध्विति देवानां मधुरो निस्वनोऽभवत् । ववर्ष पंचवर्णानि कुसुमानि नभस्तले ॥ ३० ॥
पात्रदानानुभावेन दिव्या सकलवर्णिका । पूरयंती नभोऽपप्तद्वसुधारा महाद्युतिः ॥ ३१ ॥
अथात्रैव वनोद्देशे गहनस्य महातरोः । निषण्णोऽग्रे महागृध्रः स्वेच्छयावास्थितोऽभवत् ॥ ३२ ॥
स दृष्ट्वातिशयोपेतौ मुनी कर्मानुभावतः । बहूनात्मभवान् स्मृत्वा तत्तदैवमचिंतयत् ॥ ३३ ॥
मनुष्यभावसुकरं प्रमत्तेन मया पुरा । विवेकिनापि न कृतं तपो धिग्मामचेतनं ॥ ३४ ॥
भाव प्रतप्यसे किं त्वमधुना पापचेष्टितः । कमुपायं करोम्येतां कुत्सितां योनिमागतः ॥ ३५ ॥
अनुकूलारिभिः पापैर्मित्रशब्देन धारिभिः । प्रेरितेन सता त्यक्तं धर्मरत्नं सदा मया ॥ ३६ ॥
सुभूरिचरितं पापमपकर्ण्य गुरूदितं । मोहध्वांतपरीतेन दह्ये यदधुना स्मरन् ॥ ३७ ॥

न किंचिदत्र बहुना चिंतितेन प्रयोजनं । गतिरन्या न मे लोके विद्यते दुःखसंक्षये ॥ ३८ ॥
एतौ प्रयामि शरणं साधू सर्वसुखावहौ । इतो मे परमार्थस्य प्राप्तिः संजायते ध्रुवं ॥ ३९ ॥
इति पूर्वमेव ध्यानात्परमं शोकमागतः । दर्शनाच्च महासाधोः प्रमोदं त्वरयान्वितः ॥ ४० ॥
विधूय पक्षयुगलमश्रुसंपूर्णलोचनः । पपात शाखिनो मूर्ध्नः प्रश्रयान्वितविभ्रमः ॥ ४१ ॥
नागा सिंहादयोऽप्यत्र नादेन महतामुना । विदुद्रुवुरयं दुष्टः कथं तु न खगाधमः ॥ ४२ ॥
हा मातः पश्यतामुष्य धाष्टर्यं गृध्रस्य पापिनः । चिंतयित्वेति वैदेह्या कोपाकुलितचित्तया ४३
वार्यमाणोऽपि यत्नेन कृतनिष्ठुरशब्दया । मुनिपादोदकं पक्षी सोत्साहः पातुमुद्यतः ॥ ४४ ॥
पादोदकप्रभावेण शरीरं तस्य तत्क्षणं । रत्नराशिसमं जातं परीतं चित्रतेजसा ॥ ४५ ॥
जातौ हेमप्रभौ पक्षौ पादौ वैडूर्यसन्निभौ । नानारत्नच्छविर्देहश्चंचुर्विद्रुमविभ्रमा ॥ ४६ ॥
ततः स्वमन्यथा भूतमवलोक्य सुसंमदः । विमुंचन्मधुरं नादं नर्तितुं स समुद्यतः ॥ ४७ ॥
देवदुंदुभिनादोसावेव तस्यातिसुंदरीं । आतोद्यत्वं परिप्राप्तं त्वां च वाणीं सुतेजसः ॥ ४८ ॥
मुंचन्नानंदनेत्रांभश्चक्रीकृत्य गुरुद्वयं । शुशुभे कृतनृत्योसौ शिखी मेघागमे यथा ॥ ४९ ॥
विधिना पारणं कृत्वा मुनी कृतयथोचितौ । वैडूर्यसदृशे राजन्नुपविष्टौ शिलातले ॥ ५० ॥

पद्मरागाभनेत्रश्च पक्षी संकुचितच्छदः । प्रणम्य पादयोः साधोः सुखं तस्थौ कृतांजलिः ॥ ५१ ॥
क्षणादग्निमिवालोक्य ज्वलंतं तेजसा खगं । पद्मो विकचपद्माक्षो विस्मयं परमं गतः ॥ ५२ ॥
प्रणम्य पादयोः साधुं गुणशीलविभूषणं । अपृच्छदिति विन्यस्य मुहुर्नेत्रे पतत्रिणि ॥ ५३ ॥
भगवन्नयमत्यंतं विरूपावयवः पुरा । कथं क्षणेन संजातो हेमरत्नचयच्छविः ॥ ५४ ॥
अशुचिः सर्वमांसादो गृद्धोयं दुष्टमानसः । निषद्य पादयोः शांतस्तव कस्मादवस्थितः ॥ ५५ ॥
सुगुप्तिश्रमणोऽवोचद्राजन् पूर्वमिहाभवत् । देशो जनपदाकीर्णो विषयो सुंदरो महान् ॥ ५६ ॥
पत्तनग्रामसंवाहमटंबपुटभेदनैः । घोषद्रोणमुखाद्यैश्च सन्निवेशैर्विराजितः ॥ ५७ ॥
कर्णकुंडलनामात्र पुरमासीन्मनोहरं । तस्मिन्नयमभूद्राजा प्रतापपरमोदयः ॥ ५८ ॥
चंडविक्रमसंपन्नो भग्नशात्रवकंटकः । दंडो मानमयः ख्यातो दंडको नाम साधनी ॥ ५९ ॥
घृतार्थिना जलं तेन माथितं रघुनंदन । धर्मश्रद्धापरीतेन घृतः पापागमो धिया ॥ ६० ॥
देवी मस्करिणां तस्य वरिवस्या पराभवत् । तेषामसावधीशेन संभोगं समुपागतः ॥ ६१ ॥
सोऽपि तस्याः परं वश्यस्तामेव दिशमाश्रयत् । स्त्रीचित्तहरणोद्युक्ताः किं न कुर्वंति मानवाः ६२
निष्क्रांतेनान्यदा तेन नगरात्साधुरीक्षितः । प्रलंबितभुजः श्रीमान् ध्यानसंरुद्धमानसः ॥ ६३ ॥

कृष्णसर्पो मृतस्तस्य दिग्धांगो विषलालया । कंठे निधापितस्तेन ग्रावदारुणचेतसा ॥ ६४ ॥
यावदेषोऽपनीतो न प्रदातुर्मम केनचित् । तावन्न संहरेद्योगमिति ध्यात्वा मुनिः स्थितः ॥६५॥
अतीते गणरात्रे च पुनस्तेनैव वर्त्मना । निष्क्रामन्पार्थिवोऽपश्यत्तदवस्थं महामुनिं ॥ ६६ ॥
ऋजुनैव च रूपेण गत्वा निकटतां भृशं । अप्रच्छदपनेतारं किमेतदिति सोऽवदत् ॥ ६७ ॥
नरेंद्र पश्य केनापि नगरावासमार्गिणा । योगस्थस्य मुनेरस्य कंठे सर्पः समर्पितः ॥ ६८ ॥
यस्य सर्पस्य संपर्काद्विग्रहस्य समुद्गतं । प्रतिबिंबं शितिक्लिन्नं दुर्दर्शमातिभीषणं ॥ ६९ ॥
मुनिं निःप्रतिकर्माणं दृष्ट्वा राजा तथाविधं । प्रणम्याक्षमयद्यातास्ते च स्थानं यथोचितं ॥७० ॥
ततः प्रभृति शक्तोसौ कर्तुं भक्तिमनुत्तमां । निरंबरमुनींद्राणां वारितोपद्रवक्रियः ॥ ७१ ॥
देवी विटपरिव्राजी ज्ञात्वान्यविषयं नृपं । इदं क्रोधपरीतेन विधातुमभिवांछितं ॥ ७२ ॥
जीवितस्नेहमुत्सृज्य परदुःखहितात्मकः । निर्ग्रंथरूपभृद्देव्या संपर्कमभजत्पुनः ॥ ७३ ॥
ज्ञात्वा तदीदृशं कर्म राज्ञातिक्रोधमीयुषा । अमात्याद्युपदेशं च स्मृत्वा निर्ग्रंथनिंदनं ॥ ७४ ॥
क्रूरकर्मभिरन्यैश्च प्रेरितः श्रमणाहितैः । आज्ञापयन्महर्षीणां यंत्रनिष्पीडने नरान् ॥ ७५ ॥
गणाधिपसमेतोसौ समूहो वरवाससां । यंत्रनिष्पीडनैर्नीतः पंचतां पापकर्मणां ॥ ७६ ॥

वाह्यभूमिगतस्तत्र मुनिरेकः समाव्रजन् । इत्यवार्यत लोकेन केनचित्करुणावता ॥ ७७ ॥
भो भो निर्ग्रंथ मागास्त्वं पूर्वनैर्ग्रंथ्यमाश्रय । यंत्रेणापीड्यसे तत्र द्रुतं कुरु पलायनं ॥ ७८ ॥
यंत्रेषु श्रमणाः सर्वे राज्ञा क्रुद्धेन पीडिताः । मागास्त्वमप्यवस्थां तां रक्ष धर्माश्रयं वपुः ॥७९॥
ततः क्षणमसौ संघमृत्युदुःखेन शल्यितः । वज्रस्तंभ इवाकंपस्तस्थावव्यक्तचेतनः ॥ ८० ॥
अथास्य शतदुःखेन प्रेरितः शमगव्हरात् । निरंबरमहीध्रस्य निरगात्क्रोधकेसरी ॥ ८१ ॥
रक्ताशोकप्रकाशेन निखिलं तस्य चक्षुषः । तेजसा विहितं व्योम संध्यामयमिवाभवत् ॥८२ ॥
कोपेन तप्यमानस्य मुनेः सर्वत्र विग्रहे । प्रस्वेदविंदवो जाताः प्रतिबिंबिताविष्टपाः ॥ ८३ ॥
ततः कालानलाकारो बहुलः कुटिलः पृथुः । हाकारेण मुखात्तस्य निरगात्पावकध्वजः ॥ ८४ ॥
अनुलग्नश्च तस्याग्निरुज्जगान निरंतरं । कृतं नभस्तलं येन निरिंधनविदीपितं ॥ ८५ ॥
उल्काभिर्नु जगद्व्याप्तं ज्योतिर्देवाः पतंति नु । महाप्रलयकालो नु वह्निदेवा नु रोषिताः ॥८६॥
हा हा मातः किमेतन्न तापोयमतिदुस्सहः । चक्षुरुत्पाद्यते दीर्घसंदंशैरिव वेगिभिः ॥ ८७ ॥
मूर्तिनिर्मुक्तमेवैतद्गगनं कुरुते ध्वनिं । वंशारण्यमिवोद्दीप्तं जीविताकर्षणोचितं ॥ ८८ ॥
यावदेव ध्वनिर्लोके वर्ततेत्यंतमाकुलः । वह्निस्तावदयं देशमनयद्भस्मशेषतां ॥ ८९ ॥

नांतःपुरं न देशो न पुराणि न च पर्वताः । न नद्यो नाप्यरण्यानि तदा न प्राणधारिणः ॥९०॥
महासंवेगयुक्तेन मुनिना चिरमर्जितं । क्रोधाग्निनाखिलं दग्धं तपोन्यत्किमु शिष्यतां ॥ ९१ ॥
यतोयं दंडको देशः आसीद्दंडकपार्थिवः । तेनैव ध्वनिनाद्यापि दंडकः परिकीर्त्यते ॥ ९२ ॥
काले महत्यतिक्रांते प्राप्तायां चारुतां भुवि । एतेऽत्र पादपा जाताः पर्वताश्च सनिम्नगाः ॥९३॥
मुनेस्तस्य प्रभावेण सुराणामपि भीतिदं । वनमेतदभूत्कैव वार्ता विद्यावलाश्रिता ॥ ९४ ॥
पश्चादिदं समाकीर्णं सिंहेन शरभादिभिः । नाना शकुनिवृंदैश्च सस्यभेदैश्च भूरिभिः ॥ ९५ ॥
अद्याप्यस्योरुदावस्य श्रुत्वा शब्दं परं भयं । व्रजंति मानवाः कंपं वृत्तांते नु निबोधिनः ॥९६॥
संसारेऽतिचिरं भ्रांत्वा दंडको दुःखपूरितः । अयं गृध्रत्वमायातो वनेऽत्र रतिमागतः ॥ ९७ ॥
दृष्ट्वा सातिशयावेष नौ वनेऽत्र समागतौ । पापस्य कर्मणो हान्या प्राप्तः पूर्वभवस्मृतिं ॥ ९८ ॥
योसौ परमया शक्त्या युक्तोभूद्दंडको नृपः । सोयं पश्यत संजातः कीदृशः पापकर्मभिः ॥ ९९ ॥
इति विज्ञाय विरसं फलं कटुककर्मणः । कथं न सृज्यते धर्मे दुरिताच्च विरज्यते ॥ १०० ॥
दृष्टांतः परकीयोऽपि शांतेर्भवति कारणं । असमंजसमात्मीयं किं पुनः स्मृतिमागतं ॥ १०१ ॥
पक्षिणं संयतोऽगादीन्माभैषीरधुना द्विजः । मारोदीर्यद्यथा भाव्यं कः करोति तदन्यथा ॥१०२॥

आश्वासं गच्छ विश्रब्धः कंपं मुंच सुखी भव । पश्य केयमरण्यानी क रामः सीतयान्वितः १०३
अवग्रहोस्मदीयः क क त्वमात्मार्थसंगतः । प्रबुद्धो दुःखसंबोधः कर्मणामिदमीहितं ॥ १०४ ॥
इदं कर्म विचित्रत्वाद्विचित्रं परमं जगत् । अनुभूतं श्रुतं दृष्टं यथैव प्रवदाम्यहं ॥ १०५ ॥
पक्षिणः प्रतिबोधार्थं ज्ञात्वाकूतं च सीरिणः । सुगुप्तिरवदत्स्वस्य सुगुप्तेः शमकारणं ॥ १०६ ॥
अचलो नाम विख्यातो वाणारस्यां महीपतिः । गिरिदेवीति जायास्य गुणरत्नाविभूषिता १०७
त्रिगुप्त इति विख्यातो गुणनाम्नान्यदा मुनिः । पारणार्थं गृहं तस्याः प्रविष्टः शुद्धचेष्टितः १०८
स तया परमां श्रद्धां दधत्या विधिपूर्विकां । तर्पितः परमान्नेन स्वयं व्यापारमुक्तया ॥ १०९ ॥
समाप्ताशनकृत्यश्च पादन्यस्तोत्तमांगया । पप्रच्छान्यापदेशेन स्वस्य पुत्रसमुद्भवं ॥ ११० ॥
नाथ सातिशयोयं मे गृहवासो भविष्यति । किं वा नेति प्रसादोयं क्रियतां निश्चयार्पणो॥१११॥
वचोगुप्तिं ततो भित्वा राज्ञीभक्तानुरोधतः । तस्याश्चारुसमादिष्टं मुनिना तनयद्वयं ॥ ११२ ॥
त्रिगुप्तस्य मुनेस्तस्य समादेशे नयत्स तौ । जातौ सुगुप्तिगुप्ताख्यौ पितृभ्यां तौ ततः कृतौ ११३
तौ च सर्वकलाभिज्ञौ कुमारश्रीसमन्वितौ । तिष्ठंतौ विविधैर्भावै रममाणौ जनप्रियौ ॥ ११४ ॥
वृत्तांतोऽयं च संजातो गंधावत्यां महीपतेः । पुरोहितस्य सोमस्य प्रियायास्तनयद्वयं ॥ ११५ ॥

सुकेतुरग्निकेतुश्च तयोः प्रीतिरनुत्तमा । सुकेतुरन्यदा चाभूत्कृतदारपरिग्रहः ॥ ११६ ॥
आवयोरधुना भ्रात्रोः पृथक्शयनमेतया । क्रियते जायया वश्यमिति दुःखमुपागतः ॥ ११७ ॥
सुकेतुः प्रतिबुद्धः सन् शुभकर्मानुभावतः । अनंतवीर्यपादांते श्रमणत्वं समाश्रितं ॥ ११८ ॥
अग्निकेतुर्वियोगेन भ्रातुरत्यंतदुःखितः । वाराणस्यामभूदुग्रस्तापसो धर्मचिंतया ॥ ११९ ॥
श्रुत्वा चैवंविधं तं च भ्रातरं स्नेहबंधनः । प्रतिबोधयितुं वांछन् सुकेतुर्गंतुमुद्यतः ॥ १२० ॥
स व्रजन् गुरुणावाचि सुकेतो कथयिष्यसि । वृत्तांतं सोदरायेमं येनासावुपशाम्यति ॥ १२१ ॥
कोसौ नाथेति तेनोक्ते गुरुरेवमुदाहरत् । करिष्यति त्वया सार्कं स जल्पं दुष्टभावनः ॥ १२२ ॥
युवयोः कुर्वतोर्जल्पं जाह्नवीमागमिष्यति । चारुकन्या समं स्त्रीभिस्तिसृभिर्गौरविग्रहा ॥ १२३ ॥
दिवसस्य गते यामे विचित्रांशुकधारिणी । एभिश्चिह्नैर्विदित्वा तां भाषितव्यमिदं त्वया ॥१२४॥
दृष्ट्वा तां वक्ष्यसीदं त्वं ज्ञानं चेदस्ति ते मते । वदैतस्याः कुमार्याः किं भवितेति शुभाशुभं १२५
अज्ञानोसौ विलक्षःसंस्तापसस्त्वां भणिश्यति । भवान्, जानात्विति त्वं च वक्ष्यस्येवं सुनिश्चितः ॥
अस्त्यत्र प्रवरो नाम वणिजः संपदान्वितः । तस्येयं दुहिता नाम्ना रुचिरेति प्रकीर्तिता ॥१२७॥
ततीयेऽहनि पंचत्वं वराकीयं प्रपत्स्यते । ततो जाकंवरग्रामे विलासस्य भविष्यति ॥ १२८ ॥

वृकेण मारिता मेषी महिषी च ततः पितुः । मातुलस्य विलासस्य भविष्यति शरीरजा ॥१२९॥
एवमस्त्विति संभाष्य प्रणम्य प्रमादी गुरुं । सुकेतुः क्रमतः प्राप्तस्तापसानां निकेतनं ॥ १३० ॥
गुरुणा च यथादिष्टं तां दृष्ट्वा तमुदाहरत् । तथा वृत्तं च तत्सर्वं यातमग्रेः समक्षतां ॥ १३१ ॥
ततोऽसौ विधुरा नाम्ना विलासस्य शरीरजा । याचिता श्रेष्ठिना लब्धा प्रवरेण मनोहरा ॥१३२॥
विवाहसमये प्राप्ते प्रवराय न्यवेदयत् । अग्निकेतुर्यथेयं तं दुहितासीद्भवांतरे ॥ १३३ ॥
विलासायापि ते सर्वे भवास्तेन निवेदिताः । श्रुत्वा तत्कन्यका जाता जातिस्मरणकोविदा १३४
ततः प्रव्रजितुं वांछां सा संवेगपराकरोत् । प्रवरश्च विलासेन व्यवहारं दुराशयः ॥ १३५ ॥
सभायां पितुरस्माकं प्रवरे भंगतां गते । आर्यिकात्वमिता कन्या श्रमणत्वं च तापसः ॥१३६॥
वृत्तांतमीदृशं श्रुत्वा वयं वैराग्यपूरिताः । सकाशेऽनंतवीर्यस्य जैनेंद्रव्रतमाश्रिताः ॥ १३७ ॥
एवं मोहपरीतानां प्राणिनामतिभूरिशः । जायंते कुत्सिताचारा भवसंततिदायिनः ॥ १३८ ॥
मातापितृसुहृन्मित्रभार्यापत्यादिकं जनः । सुखदुःखादिकं चायं विवर्तं लभते भवे ॥ १३९ ॥
तच्छ्रुत्वा सुतरां पक्षी भीतोऽभूद्भवदुःखतः । चकार च मुहुःशब्दं धर्मग्रहणवांछया ॥ १४० ॥
उक्तं च गुरुणा भद्र माभैषीरधुना व्रतं । गृहाण येन नो भूयः प्राप्यते दुःखसंततिः ॥ १४१ ॥

प्रशांतो भव मा पीड़ा कार्षीः सर्वासुधारिणां । अनृतं स्तेयतां भार्यां परकीयां विवर्जय ॥१४२॥
एकांतब्रह्मचर्यं वा गृहीत्वा सत्क्षमान्वितः । रात्रिभुक्तिं परित्यज्य भव शोभनचेष्टितः ॥१४३॥
प्रयतोऽग्निक्षिपायां च जिनेंद्रान्बहुचेतसा । उपवासादिकं शक्त्या सुधीर्नियममाचर ॥ १४४ ॥
इंद्रियाण्यप्रमत्तः सन्नुत्सुकान्यात्मगोचरे । कुरु युक्तव्यवस्थानि साधूनां भक्तितत्परः ॥ १४५ ॥
इत्युक्त्वा सांजलिः पक्षी शिरो विनमयन्मुहुः । कुर्वाणो मधुरं शब्दं जग्राह मुनिभाषितं ॥१४६॥
श्रावकोयं विनीतात्मा जातोस्माकं विनोदकृत् । इत्युक्ता सस्मिता सीता तं कराभ्यां समस्पृशत् ॥
साधुभ्यामुक्तमित्येतं रक्षितुं वाधुनोचितं । तपस्वी शांतचित्तोयं क्व वा गच्छतु पक्षभृत् ॥१४८॥
अस्मिन्सुगहनेऽरण्ये क्रूरप्राणिनिषेविते । सम्यग्दृष्टेः खगस्यास्य रक्षा कार्या त्वया सदा ॥१४९॥
ततो गुरुवचः प्राप्य सुतरां स्नेहपूर्णया । सीतयानुगृहीतोऽसौ परिपालनचिंतया ॥ १५० ॥
पल्लवस्पर्शहस्ताभ्यां तं परामृशती सती । जनकस्यांगजा रेजे विनीता गरुडं यथा ॥ १५१ ॥
निर्ग्रंथपुंगवावेभिः स्तुतिपूर्वं नमस्कृतौ । बहूपकारिसंचारौ यातावात्मोचितं पदं ॥ १५२ ॥
नभः समुत्पतंतौ तौ शुशुभाते महामुनी । दानधर्मसमुद्रस्य कल्लोलाविव पुष्कलौ ॥ १५३ ॥
प्रभिन्नं वारुणं तावद्वशीकृत्य वनोत्थितं । आरुह्य लक्ष्मणः श्रुत्वा ध्वनिमागात्समाकुलः ॥१५४॥

रत्नकांचनराशिं च दृष्ट्वा पर्वतसन्निधिं । नानावर्णप्रभाजालसमुद्गतसुरायुधं ॥ १५५ ॥
विकसन्नयनांभोजमहाकौतुकपूरिताः । कृतो विदितवृत्तांतः पद्मेन मुदितात्मना ॥ १५६ ॥
प्राप्तबोधिरसौ पक्षी नायासीत्तौ विना क्वचित् । निर्ग्रंथवचनं सर्वं कुर्वन्नुद्यतमानसः ॥ १५७ ॥
स्मर्यमाणोपदेशोसौ सीतयाणुव्रताश्रमे । पद्मलक्ष्मणमार्गेण रममाणो भ्रमन्महीं ॥ १५८ ॥
धर्मस्य पश्यतौदार्यं यदस्मिन्नेव जन्मनि । शाकपत्रोपमो गृध्रो जातस्तामरसोपमः ॥ १५९ ॥
पुरा योनेकमांसादो दुर्गंधोभूज्जुगुप्सितः । सोयं कांचनकुंभाभः सुरभिः सुंदरोभवत् ॥ १६० ॥
क्वचिद्वह्निशिखाकारः क्वचिद्वैडूर्यसन्निभः । क्वचिच्चामीकरच्छायो हरिन्मणिरुचिः क्वचित् १६१
रामलक्ष्मणयोरग्रे स्थितोसौ बहुचाटकः । बुभुजे साधु संपन्नमन्नं सीतोपसाधितं ॥ १६२ ॥
चंदनेन स दिग्धांगो हेमकिंकिण्यलंकृतः । बिभ्राणः शकुनो रेजे रत्नांशुजटिलं शिरः ॥ १६३ ॥
यस्मादंशुजटास्तस्य चिरेजू रत्नहेमजाः । जटायुरिति तेनासावाहूतस्तैरतिप्रियः ॥ १६४ ॥
जितहंसगतिं कांतं चारुविभ्रमभूषितं । तमन्यपक्षिणो दृष्ट्वा भयवंतो विसिस्मियुः ॥ १६५ ॥
त्रिसंध्यं सीतया साकं वंदनामकरोदसौ । भक्तिप्रह्वो जिनेंद्राणां सिद्धानां योगिनां तथा ॥१६६॥
तत्र प्रीतिं महाप्राप्ता जानकी करुणा परा । अप्रमत्ता सदा रक्षां कुर्वंती धर्मवत्सला ॥ १६७ ॥

आस्वादमानो निजयेच्छयासौ । फलानि शुद्धान्यमृतोपमानि ॥
जलं प्रशस्तं च पिबन्नरण्ये । बभूव नित्यं सुविधिः पतत्री ॥ १६८ ॥
सतालशब्दं जनकात्मजायां । धर्माश्रयोच्चारितगीतिकायां ॥
कृतानुगीत्यां पतिदेवराभ्यां । ननर्त हृष्टो रविरुग्जटायुः ॥ १६९ ॥

इत्यार्षे रविषेणाचार्यप्रोक्ते पद्मचरिते जटायुरुपाख्यानं नामैकचत्वारिंशत्तमं पर्व ।

---

# अथ द्विचत्वारिंशत्तमं पर्व ।

पात्रदानप्रभावेण ससीतौ रामलक्ष्मणौ । इहैव रत्नहेमानि संपद्युक्तौ बभूवतुः ॥ १ ॥
ततश्चामीकरानेकभक्तिविन्याससुंदरं । सुस्तंभवेदिकागर्भगृहसंगतमुन्नतं ॥ २ ॥
स्थूलमुक्ताफलस्रग्भिर्विराजत्पवनायनं । वुद्बुदादर्शलंबूषखंडचंद्रादिमंडितं ॥ ३ ॥
शयनासनवादित्रवस्त्रगंधादिपूरितं । चतुर्भिर्वारणैर्युक्तं विमानप्रतिमं रथं ॥ ४ ॥
आरूढौ विचरंत्येते प्रतिघातविवर्जिताः । जटायुसहिता रम्ये वने सत्ववतां नृणां ॥ ५ ॥

क्वचिद्दिनं क्वचित्पक्षं क्वचिन्मासं मनोहरे । यथेप्सितकृतक्रीडाः प्रदेशे तेऽवतस्थिरे ॥ ६ ॥
निवासमत्र कुर्मोत्र कुर्म इत्यभिलाषिणः । महोक्षनवशष्येच्छा विचेरुस्ते वनं सुखं ॥ ७ ॥
महानिर्झरगंभीरां कांश्चिदुच्चावचान्बहून् । उत्तुंगपादपान्देशान् जग्मुरुल्लंघ्य ते शनैः ॥ ८ ॥
स्वेच्छया पर्यटंतस्ते सिंहा इव भयोज्झितां । मध्यं दंडककक्षस्य प्रविष्टा भीरुदुःखदं ॥ ९ ॥
विचित्रशिखरा यत्र हिमाद्रिगिरिसन्निभाः । रम्या निर्झरनद्यश्च मुक्ताहारोपमाः स्थिताः ॥१०॥
अश्वत्थैस्तिंतिड़ीकाभिर्वदरीभिर्विभीतकैः । शिरीषैः कदलैर्लक्षैरकोठैः सरलैर्धवैः ॥ ११ ॥
कदंबैस्तिलकैर्लोध्रैरशोकैर्नीललोहितैः । जंबूभिः पाटलाभिश्च चूतैराम्रतकैः शुभैः ॥ १२ ॥
चंपकैः कर्णिकारैश्च सालैस्तालैः प्रियंगुभिः । सप्तपर्णैस्तमालैश्च नागैर्नंदिभिरर्जुनैः ॥ १३ ॥
केसरैश्चंदनैर्नीपैर्भूर्जैर्हिं गुलकैर्वटैः । सितासितैरगुरुभिः कुंदै रंभाभिरिंदुगैः ॥ १४ ॥
पद्मकैर्मुचिलिंदैश्च कुटिलैः पारिजातिकैः । बंधूकैः केतकीभिश्च मधुकैः खदिरैस्तथा ॥ १५ ॥
मदनैर्खदिरैर्निंबैः खजूरैश्छत्रकैस्तथा । नारिंगैर्मातुलिंगीभिर्द्राडिमीभिस्तथासनैः ॥ १६ ॥
नालिकेरैः कपित्थैश्च रसैरामलकैर्वनैः । समीहरीतकीभिश्च कोविदारैरगस्तिभिः ॥ १७ ॥
करंजकुष्टकालीयैरुत्कचैरजमोदकैः । कंकोलत्वग्लवंगीभिर्मरिचाजातिभिस्तथा ॥ १८ ॥

चविभिर्धातकीभिश्च कुर्षकैरतिमुक्तकैः । पूगैस्तांबूलवल्लीभिरेलाभी रक्तचंदनैः ॥ १९ ॥
वेत्रैः श्यामलताभिश्च मेषशृंगैर्हरिद्रुभिः । पलाशैः स्पंदनैर्बिल्वैश्चिरबिल्वैः समेथिकैः ॥ २० ॥
चंदनैररडूकैश्च शाल्मलीवीजकैस्तथा । एभिरन्यैश्च भूरुह्भिस्तदरण्यं विराजितं ॥ २१ ॥
सत्यैर्बहुप्रकारैश्च स्वयंभूतै रसोत्तमैः । पुंड्रेक्षुभिश्च विस्तीर्णाः प्रदेशास्तस्य संकुलाः ॥ २२ ॥
चित्रपादपसंघातैर्नानावल्लीसमाकुलैः । अशोभत वनं वाढं द्वितीयमिव नंदनं ॥ २३ ॥
मंदमारुतनिक्षिप्तैः पल्लवैरतिकोमलैः । ननर्ते वाड़वी तोषा पद्माद्यागमजन्मनः ॥ २४ ॥
वायुतो ह्रीयमाणेन रजसाभ्युत्थितेव च । आलिलिंगे च सद्गंधवाहिना नित्ययायिना ॥ २५ ॥
अगायदिव भृंगाणां झंकारेण मनोहरं । जहासेव सितं रम्यं शैलनिर्झरशीकरैः ॥ २६ ॥
जीवं जीवकभेरुंडहंससारसकोकिलाः । मयूरश्येनकुरराः शुककौशिकशारिकाः ॥ २७ ॥
कपोतभृंगराजश्च भारद्वाजादयस्तथा । अरमंत द्विजास्तस्मिन् प्रयुक्तकलनिस्वनाः ॥ २८ ॥
कोलाहलेन रम्येण तद्वनं तेन संभ्रमि । जगाद स्वागतमिव प्राप्तकर्तव्यदक्षिणं ॥ २९ ॥
कुतः किं राजपुत्रीति कस्मिन्नागच्छ साध्विति । इति कोमलभारत्या संजजल्पुरिव द्विजाः ॥३०॥
सितासितरुणांभोजसंछन्नैरतिनिर्मलैः । सरोभिर्वीक्षितुमिव प्रवृत्तं सुकुतूहलात् ॥ ३१ ॥

फलभारनतैरग्रैर्नमेव महीधरं । मुमोचानंदनिश्वासमिव सद्गंधवायुना ॥ ३२ ॥
ततः सौमनसाकारं वनं तद्वीक्ष्य राघवः । जगाद विकचांभोजलोचनां जनकात्मजां ॥ ३३ ॥
वल्लीभिर्गुल्मकैः स्तंबैः समासन्नैरमी नगाः । सकुटुंबा इवाभांति प्रिये यच्छात्र लोचने ॥३४॥
प्रियंगुलतिकां पश्य संगतां वकुलोरसि । कांतस्येव वरारोहा शंके निर्भरसौहृदं ॥ ३५ ॥
चलता पल्लवेनेयं संप्रत्यग्रेण माधवी । परामृशति सौहार्दादिव चूतमनुत्तरात् ॥ ३६ ॥
अयं मदालसे क्षीणः करी करेणुचोदितः । मधुकरविघटितदलनिचयः प्रविशति सीते कमलवनं ॥

वहन्नसौ दर्पमुदारमुच्चै—र्वल्मीकशृंगं गवलीसुनीलः ॥
लीलान्वितो वज्रसमेन धीरं । भिन्ने विषाणे न लसत्खुराग्रः ॥ ३८ ॥

अमुमिंद्रनीलवर्णं । विवरान्निर्यातदूरतनुभागं ॥
पश्य मयूरं दृष्ट्वा । प्रविशंतमहिं भयाकुलितं ॥ ३९ ॥

पश्यामुष्यमहानुभावचरितं सिंहस्य सिंहेक्षणे ।
रम्येऽस्मिन्नचले गुहामुखगतस्याराद्विकाशिद्युते ॥
यच्छ्रुत्वा रथनादमुन्नतमना निद्रां विहायक्षणं ।

वीक्ष्यापांगदृशा विजृंभ्यशनकैर्भूयस्तथैव स्थितः ॥ ४० ॥
नानामृगक्षतजपानसुरक्तवक्त्रो । दर्पोद्धुरः कपिलनेत्रमरीचिदक्षः ॥
मूर्धोपनीतलसदुज्ज्वलवालपुच्छो । व्याघ्रो नखैःखनति पादपमेष मूले ४१
अंतःकृत्वा शिशुगणमिमे कामिनीभिः समेतं ।
दूरन्यस्तप्रचलनयना भूरिशः सावधानाः ॥
किंचिद्दूर्वाग्रहणचतुराः प्रांतयाताः कुरंगाः ।
पश्यंति त्वां विपुलनयनालंबिनः कौतुकेन ॥ ४२ ॥
सुंदरि पश्य वराहं दंष्ट्रान्तरलग्नमुस्तमुन्नतसत्वं ।
अभिनवगृहीतपंकं गच्छंतं मंथरं सघोणं ॥ ४३ ॥
अयं प्रयत्नादिव चित्रगांगको । विनातिवर्णैर्बहुभिः सुलोचने ॥
भजत्यरिक्रीडनमर्भकैः समं । वनैकदेशे तृणभाजि चित्रकः ॥ ४४ ॥
श्येनयुवैष लघुभ्रमपक्षो । दूरत एव निरूप्य समंतात् ॥
स्वापमितस्य परं शरभस्य । ते नयति द्रुतमामिषमत्स्यात् ॥ ४५ ॥

कमलजालकराजितमस्तकः । ककुदमुन्नतमाचलितं वहन् ॥
अयमुदानरवोत्र विराजते । सुरभिपुत्रपतिर्वरविभ्रमः ॥ ४६ ॥
क्वचिदिदमतिघनवरनगकलितं । क्वचिदणुबहुविधतृणपरिनिचितं ॥
क्वचिदपगतभयमृगपुरुपटलं । क्वचिदतिभययुतरुरुहितगहनं ॥ ४७ ॥
क्वचिदुरुमदगजपातितवृक्षं । क्वचिदभिनवतरुजालकयुक्तं ॥
क्वचिदलिकुलकलझंकृतरम्यं । क्वचिदातिखररवसंभृतकक्षं ॥ ४८ ॥
क्वचिद्विभ्रांतसत्वकं क्वचिद्विश्रब्धसत्वकं । क्वचिन्निरंबुगह्वरं क्वचिद्विस्रस्तगह्वरं ॥ ४९ ॥
अरुणं धवलं कपिलं । हरितं बलितं निभृतं सरवं विरवं ॥
विरलं गहनं सुभगं । विरसं तरुणं पृथुकं विषमं सुसमं ॥ ५० ॥
इदं तद्दंडकारण्यं प्रसिद्धं दयिते वनं । पश्यानेकविधं कर्म प्रपंचमिव जानकि ॥ ५१ ॥
नगोयं दंडको नाम शृंगालीढांबरांगणः । सुवक्त्रे यस्य नाम्नेदं दंडकारण्यमुच्यते ॥ ५२ ॥
तुंगया शिखिरेध्वस्य प्रभया धातुजन्मना । रक्तया पुष्यपद्मेव प्रावृतं भाति पुष्करं ॥ ५३ ॥
अस्य गह्वरदेशेषु पश्यौषधिमहाशिखाः । निर्वातस्थप्रदीपाभा दूरंध्वस्ततमश्चयाः ॥ ५४ ॥

अस्मिन्नुच्चैर्निर्झराः संपतंत—स्ताराराचा ग्रावसंघातसक्ताः ॥
मुक्ताकारान्सीकरानुत्सृजंतो—राजंत्येते स्पष्टभासानुकाराः ॥ ५५ ॥
अस्योद्देशाः शुभ्रा केचि—त्केचिन्नीला रक्ताः केचित् ॥
दृश्यंतेऽमी वृक्षैर्व्याप्ता । प्रांते कांतेऽत्यंतं कांताः ॥ ५६ ॥
अमी समीरणेरिते वरोष्ठि वृक्षमस्तके । विभांति गह्वरे लवा रवेः कराः क्वचित्क्वचित् ॥ ५७ ॥
अयं क्वचित्फलभरनम्रपादपः । क्वचित्स्थितैः कुसुमपटैरलंकृतः ॥
क्वचित्खगैः कलरवकारिभिश्रितो । विभात्यलं वरमुखि दंडको गिरिः॥५८॥
इह चमरीगणोयमतिदुष्टमृगोपगतः । प्रियतरवालिधिः प्रियतमैरनुयातपथः ॥
अनतिविसृष्टमंदगतिरिंदुरुचिः । पुरुषं प्राविशति गह्वरं न पृथुकाहितचंचलदृक् ॥५९॥
एषा नीला शिला स्यात्तिमिरमुपचितं कंदराणां मुखेषु ।
स्यादेतत्किं विहायः स्फटिकमणिशिला किंनु वृक्षांतरस्था ॥
एष स्याद्दंडशैलः किमुत गजपतिः सेवते गाढनिद्रां ।
कांते क्षोणीधरेऽस्मिन्नतिसदृशतया दुर्गमा भूविभागाः ॥ ६० ॥

एषा क्रौंचरवा नाम नदी जगति विश्रुता । जलं यस्याः प्रिये वीडं त्वदीयमिव चेष्टितं ॥ ६१ ॥
मृदुमरुदीरभंगुरमलं तटस्थतरुपुष्पसहितधरं । भवशयनीयरूपसुभगं सुकेशि जलमत्र राजतितरां ॥
हंसकुलाभफेनपटलप्रभिन्नं बहुपुष्पपुंजकलितांतरे । निनादपूरितवना क्वचिद्विकटसंकटोपलचलैः ६३
ग्राहसहस्रचारविषमा क्वचिच्च पुरुवेगसंगतजला ।
घोरतपस्विचेष्टितसमा क्वचिच्च वहति प्रशांगुरियं ॥ ६४ ॥
परमशितिशिलौघरश्मिभिन्नं क्वचिदनुलग्नसितोपलांशुयुक्तं ।
जलमिह सितदंति भाति वाढं हरिहरयोरिव संगतं शरीरं ॥ ६५ ॥
रक्तशिलौघरश्मिनिचिता क्वचिदियममला । भाति समुद्यदर्कसमये दिगिव सुरपतेः ॥
भिन्नजला क्वचित्क हरितैरुपलकरचयैः । शैवलशंकयागमकृतो विरसयति खगान् ॥ ६६ ॥
कमलनिकरेष्वत्र स्वेच्छंकृताातिकलस्वनं । निभृतपवनासंगात्कंपेष्वभीक्ष्णकृतभ्रमं ॥
परमसुरभैर्गंधाद्वक्त्राात्तवेव समुद्गता—न्मधुकपटलं कांते क्षीवं विभाति रजोरुणं ॥ ६७ ॥
विषिक्तं पाताले क्वचिदिह जलं मुक्तवहनं । परं गंभीरत्वं वहति दयिते ते मन इव ॥
क्वचिन्नीलांभोजैरनतिचलितै षट्पदचितै—र्विभर्त्यक्षिच्छायां प्रवरवनितालोचनभुवम् ६८

अत्र विभाति व्योमगवृंदं, बहुविधजलभववनकृतचरणं ।
प्रेमनिवद्धं तारचिरावं, क्वचिदतिमदवशपरिचितकलहं ॥ ६९ ॥
सैकतमस्या राजति चेदं । सवनितखगकुलकृतपदपदवि ॥
त्वज्जघनस्य प्राप्तसुसमत्वं गतघनसुरपथशशधरवदने ॥ ७० ॥
एषा यातानेकविलासाकुलितांबु—स्तोयाधीशं वीचिवरभ्रूरतिकांता ॥
तद्वच्चारुस्फीतगुणौघं शुभचेष्टं । विष्टपसुंदरमुत्तमशीला भरतेशं ॥ ७१ ॥
इमे प्रिये फलकुसुमैरलंकृता—स्तटीरुहो विविधविहंगसंकुलाः ।
निरंतराः सजलघनौघसंन्निभाः । इमामिता रतिमिव कर्तुमावयोः ॥ ७२ ॥
इति निगदति राघवोत्तमे । परमविचित्रपदार्थसंगतं ॥
प्रमदभरवशंगता सती । जनकसुता निजगाद सादरं ॥ ७३ ॥
नद्येषा विमलजला तरंगरम्या । हंसाद्यैः खगनिवहैः कृताभिलापाः ॥
एतस्यां प्रियतम ते मनोगतं चे—त्तोयेऽस्याः किमिति रतिक्षणं न कुर्मः ॥७४॥
अथ राजसुतासमीरितं । तद्वाक्यं राघवगोत्रचंद्रमाः ॥

अनुजानुगतोऽभिनंदनात् । भेजे रम्यभुवं रथालयात् ॥ ७५ ॥

पूर्वं चक्रे लक्ष्मीनाथस्नपनमभिनवधृतं । गजपतिवनपथपरिचितश्रमप्रतिनोदनं ॥

तस्मादूर्ध्वं नानास्वादप्रवरकिसलय—कुसुमसमुच्चयमुचितां च परिक्रियां ॥ ७६ ॥

पश्चात्स्रोतः संसक्ताग्रद्रुमनिवहपरिचलन—करणवरसहितमतुलं विचेष्टितमीप्सितं ।

रामणामा स्नातुं सक्तो विविधजलविहृतिविषय—परमविधि समुपचितं गुणाकरमानसः ॥

सफेनवलया लसत्प्रकटवीचिमालाकुला । विमर्दितसितासितारुणपयोजपत्राचिता ॥

समुद्गतकलस्वनातिरहसंगमासेविता । समं रघुकुलेंदुना रतिमिवाकरोदापगा ॥ ७८ ॥

विनिमय्य सुदूरयायिना । विशिनीखंडतिरोहितात्मना ॥

पुनराशुसमागमाश्रिता । रघुपुत्रेण रता नृपात्मजा ॥ ७९ ॥

मुक्त्वा नानाकृत्यासंगं । कुसुमवनचरणजरजोविराजिगरुद्धृतं ॥

गत्वा क्षिप्रं तीरोद्देशं । त्वरितकृतविविधरसिताः पुरोगतयोषितः ॥ ८० ॥

तेषां द्रष्टुं शक्ता श्रेष्ठा—मपरविषयगमनरहितं विधाय मनो भृशं ।

तिर्यंचोऽपि ह्येते रम्यं । परुषकृतिरहितमनसां विदंति समीहितं ॥ ८१ ॥

अतिमधुररवं कराभिघातै—र्मुरजारवादपि सुंदरं विचित्रं ॥
अनुगतदयितो रघुप्रधानः—सलिलमवादयदन्वितं सुगीत्या ॥ ८२ ॥
परितोऽकरोद्भ्रमणमस्य जलरमणसक्तचेतसो—
दारचतुरकरणेऽनुगतक्रियस्य हलहेतिर्लक्ष्मणः ।
अतिवेगवान्पुनरपेतजवनिपुणचारतत्परो—
भ्रातृगुणनिरतधीः परमं समुद्रवचापलक्षितः ॥ ८३ ॥
इति सुविमललीलः स्वेच्छयांभोविहारं । प्रमदमुपनयंतं तीरभाजां मृगाणां ॥
रघुपतिरनुभूय भ्रातृदारानुयातो । गजपतिरिव तीरं सेवितुं संप्रवृत्तः ॥ ८४ ॥
शरीरयातं च विधाय वर्तनं । महाप्रशस्तैर्वनजन्मवस्तुभिः ॥
स्थितालतामंडपरुद्धभास्करे । सुरा इवामी कृतचित्रसंकथाः ॥ ८५ ॥
सीतापतिस्ततोवोचदिति विश्रब्धमानसः । जटायुमूर्धकरया सीतयालंकृतांतिकः ॥ ८६ ॥
संत्यस्मिन्विविधा भ्रातर्द्रुमाः स्वादुफलान्विताः । सरितः स्वच्छतोयाश्च मंडपाश्च लतात्मकाः॥
अनेकरत्नसंपूर्णो दंडकोयं महागिरिः । प्रदेशैर्विविधैर्युक्तः परक्रीडनकोचितैः ॥ ८८ ॥

उपकंठेस्य नगरं विदध्मः सुमनोहरं । नैजिकी वनसंभूता गृह्णीमो महिषीस्तथा ॥ ८९ ॥
अस्मिन्नगोचरेऽन्येषामरण्येत्यंतसुंदरे । विषयावासनं कुर्मः परमा धृतिरत्र मे ॥ ९० ॥
अस्मिन्निहितचेतस्के नूनं शोकवशीकृते । सहितैः स्वजनैः सर्वैः परिवर्गसमन्वितैः ॥ ९१ ॥
व्रजानय जनन्यौ नौ त्वरितं न न नाथवा । तिष्ठ सुंदर नैवं मे मानसं शुद्धिमश्नुते ॥ ९२ ॥
स्वयमेव गमिष्यामि शरत्समयसंगमे । प्रतिजाग्रद्भवां सीतामिह स्थास्यति यत्नवान् ॥ ९३ ॥
ततो लक्ष्मीधरे नम्रे प्रस्थितेऽवस्थिते तथा । प्रेमार्द्रीकृतचेतस्कः पुनः पद्मो जगाविति ॥ ९४ ॥
समयेस्मिन्नतिक्रांते दीप्तभास्करदारुणे । प्राप्तोऽत्यंतमयं भीमः कालः संप्रति जालदः ॥ ९५ ॥
क्षुब्धाकूपारनिर्घोषाश्चला जननगोपमाः । दिशोंऽधकारयंत्येते विद्युद्वंतो वलाहकाः ॥ ९६ ॥
निरंतरं तिरोधाय गगनं घनविग्रहाः । मुंचंति कं यथा देवा रत्नराशिं जिनोद्भवे ॥ ९७ ॥

विधाय तुंगानचलान्महांतो—धाराभिरुच्चैर्ध्वनयः पयोदाः ।
नभोंगणेऽमी निभृतं चरंतः । क्षणप्रभासंगमिनो विभांति ॥ ९८ ॥

पयोमुचः केचिदमी विपांडुराः । समीरिता वेगवता नभस्वता ॥
भ्रमंति निष्णातमसंयतात्मनां । मनोविशेषा इव यौवनश्रिताः ॥ ९९ ॥

अयं सस्यभुवं मुक्त्वा मेघो भूभृति वर्षति । अनिश्चितविशेषः सन् कुपात्रे द्रविणी यथा ॥१००॥

अतिजवमिह काले सिंधवः संप्रवृत्ताः । विषमतमविहारोदारपंका धरित्री ॥

जलपरिमलशीतो वाति चंडश्च वायुः । न तव गमनयुक्तं ते न मन्ये सुभावाः १०१

इति निगदति पद्मे केकयीसूनुरूचे । प्रवदसि यदधीशस्त्वं तथाहं करोमि ॥

विविधरसकथाभिः सुंदरे स्वाश्रये ते । रविपरिचयमुक्तं कालमस्थुः सुखेन ॥ १०२ ॥

इत्यार्षे रविषेणाचार्यप्रोक्ते पद्मपुराणे दंडकारण्यनिवासाभिधानं नाम द्विचत्वारिंशत्तमं पर्व ।

---

# अथ त्रिचत्वारिंशत्तमं पर्व ।

ततः शरदृतुर्जित्वा शशांककरपत्रिभिः । घनौघं विशदं चक्रे राज्यमाक्रांतविष्टपः ॥ १ ॥

विकसत्पुष्पसंघातात्पादपान् स्निग्धचेतसः । अलंकारोत्तमांस्तस्य जगृहुः ककुबंगनाः ॥ २ ॥

जीमूतमलनिर्मुक्तं भिन्नांजनसमद्युति । अंबुनेव चिरं धौतं रराज गगनांगणं ॥ ३ ॥

प्रावृट्कालगजो मेघकलशैर्धरिणीश्रियं । अभिषिच्य गतः क्वापि विद्युत्कक्षाविराजितः ॥ ४ ॥

चिरात्कमलिनीगेहं प्राप्य पक्षभृतां गणाः । उद्भूतमधुरालापाः कामप्यापुः सुखासिकां ॥ ५ ॥
सिंधवः स्वच्छकीलाला उन्मज्जत्पुलिनाः परां । कांतिमीयुः समासाद्य शरत्समयकार्मुकं ॥ ६ ॥
वर्षावातविमुक्तानि चिरात्प्राप्य सुखासिकां । काननानि व्यराजंत संगतानीव निद्रया ॥ ७ ॥
सरांसि पंकजाढ्यानि समं रोधसमुत्थितैः । पादपैः पक्षिनादेन समालापमिवाभजन् ॥ ८ ॥
नानापुष्पकृतामोदा रजनीविमलांबरा । मृगांकतिलकं भेजे सुकाले शमिवोषती ॥ ९ ॥
केतकीसूतिरजसा पांडुरीकृतविग्रहः । ववौ समीरणो मंदं मदयन्कामिनीजनं ॥ १० ॥
इति प्रसन्नतां प्राप्ते काले सोत्साहविष्टपे । मृगेंद्रगतिराश्लिष्टविक्रमैकमहारसः ॥ ११ ॥
लब्धानुगमनं ज्येष्ठादाशानिहितवीक्षणः । कदाचिल्लक्ष्मणो भ्राम्यन्नेककस्तद्वनांतिकं ॥ १२ ॥
अजिघ्रदामरं गंधं विनीतपवनाहृतं । अचिंतयच्च कस्यैष भवेद्गंधो मनोहरः ॥ १३ ॥
पादपानां किमेतेषां स्फुटकुसुमधारिणां । आहोस्विन्मम देहस्य कुसुमोत्करशायिनः ॥ १४ ॥
वैदेह्या संगतो रामः किमुतोपरि तिष्ठति । किंवा कश्चित्समायातो भवेदत्र त्रिविष्टपी ॥ १५ ॥
ततो मगधराजेंद्रः पप्रच्छ श्रमणोत्तमं । भगवन् कस्य गंधोसौ चक्रे विस्मयनं हरेः ॥ १६ ॥
ततो गणधरोऽवोचज्ज्ञातलोकविचेष्टितः । संदेहतिमिरादित्यः पापधूलीसमीरणः ॥ १७ ॥

द्वितीयस्य जिनेंद्रस्य द्युतिवाससमागमे । विद्याधराय विज्ञाय पाताय शरणं विभुं ॥ १८ ॥
राक्षसानामधीशेन महाभीमेन धीमता । अंभोद्वाहनायासीत्कृपयेत्युदितो वरः ॥ १९ ॥
विपुले राक्षसद्वीपे त्रिकूटं नाम पर्वतं । मेघवाहनविश्रब्धो गच्छ दक्षिणसागरे ॥ २० ॥
जंबूद्वीपस्य जगतीमिमामाश्रित्य दक्षिणं । लंकेति नगरी तत्र रक्षोभिर्विनिवेशिता ॥ २१ ॥
रहस्यमिदमेकं च विद्याधर परं श्रृणु । जंबूभरतवर्षस्य दक्षिणाशां समाश्रयत् ॥ २२ ॥
आश्रयित्वोत्तरं तीरं लवणस्य महोदधेः । वसुंधरोदरस्थानस्वभावार्पितमायतं ॥ २३ ॥
योजनस्याष्टमं भागं दंडकाग्रौ गुहाश्रयं । अधोगत्वा महाद्वारं प्रविश्य मणितोरणं ॥ २४ ॥
अलंकरोदयं नाम स्थितं पुरमनुत्तमं । स्थानीयशतधर्मस्थं दिव्यदेशं निरीक्ष्यते ॥ २५ ॥
नानाप्रकाररत्नांशुसंतानपरिराजितं । विस्मयोत्पादने शक्तमपि त्रिदिवसद्मनां ॥ २६ ॥
अप्रतर्क्यं गगनगैर्दुर्गं विद्याविवर्जितैः । सर्वकामगुणोपेतं विचित्रालयसंकुलं ॥ २७ ॥
परचक्रसमाक्रांतो यद्यापत्सु कदाचन । भवे दुर्गं समास्तृत्य तिष्ठेस्त्वं निर्भयस्ततः ॥ २८ ॥
इत्युक्तस्तेन यातोसौ यो विद्याधरबालकः । लंकापुरीमभूत्तस्मात्संतानोऽनेकपुंगवः ॥ २९ ॥
यथावस्थितभावानां श्रद्धानं परमं सुखं । मिथ्याविकल्पितार्थानां ग्रहणं दुःखमुत्तमं ॥ ३० ॥

विद्याभृतां सुराणां च ज्ञेयो भेदो विचक्षणैः । तिलपर्वतयोस्तुल्यः शक्तिकांत्यादिभिर्गुणैः ॥३१॥
पंकचंदनयोर्यद्वदथवोपलरत्नयोः । तद्वत् खेचरलोकस्य देवलोकस्य चांतरं ॥ ३२ ॥
गर्भवासपरिक्लेशमनुभूय विधेर्वशात् । ततः समुपजायंते विद्यामात्रोपजीविनः ॥ ३३ ॥
क्षेत्रवंशसमुद्भूताः खे चरंतीति खेचराः । अमराणां स्वभावस्तु मनोज्ञेयं विबुध्यतां ॥ ३४ ॥
सुरूपशुचिसर्वांगा गर्भवासविवर्जिता । मांसास्थिक्लेदरहिता देवा अनिमिषेक्षणाः ॥ ३५ ॥
जरारोगविहीनाश्च सततं यौवनान्विताः । उदारतेजसा युक्ताः सुखसौभाग्यसागराः ॥ ३६ ॥
स्वभावविद्यासंपन्ना अवधिज्ञानलोचनाः । कामरूपधरा धीराः स्वच्छंदगतिधारिणः ॥ ३७ ॥
अमी लंकाश्रिता राजन् न देवा न च राक्षसाः । रक्षंति रक्षसां क्षेत्रमाहूतास्तेन राक्षसाः ॥३८॥
तद्वंशानुक्रमो ज्ञेयो युगानामंतरैः सह । पारंपर्याद्व्यतिक्रांतः कालो नैकार्णवोपमः ॥ ३९ ॥
रक्षःप्रभृतिषु श्लाघ्येष्वतीतेषु बहुष्वपि । खंडत्रयाधिपस्तस्य रावणोभवदन्वये ॥ ४० ॥
भगिनी दुर्नखा तस्य रूपेण प्रतिमा भुवि । प्राप्तस्तया महावीर्यो रमणः खरदूषणः ॥ ४१ ॥
चतुर्दशसहस्राणि नृणां तस्य महात्मनां । प्रतीतो दूषणाख्यश्च सेनाधिपतिरूर्जितः ॥ ४२ ॥
दिक्कुमार इवोदारो धरणीजठरे स्थितं । अलंकारपुरं तस्य स्थानमासीन्महौजसः ॥ ४३ ॥

शंबूको नाम सुंदश्च सुतौ तस्य बभूवतुः । बंधुतश्च दशग्रीवाद्भुवि गौरवमाप सः ॥ ४४ ॥
गुरुभिर्वार्यमाणोऽपि मृत्युपाशावलोकितः । शंबूकः सूर्यहासार्थं प्राविशद्भीषणं वनं ॥ ४५ ॥
यथोक्तमाचरन् राजन्नाराधयितुमुद्यतः । एकान्नभुग्विशुद्धात्मा ब्रह्मचारी जितेंद्रियः ॥ ४६ ॥
असमाप्तोपयोगस्य यो मे दृष्टिपथे स्थितः । वध्योऽसाविति भाषित्वा वंशस्थलमुपाविशत् ॥४७॥
दंडकारण्यभागांतं तां च क्रौंचरवां नदीं । सागरस्योत्तरं तीरं संसृत्यासाववस्थितः ॥ ४८ ॥
नीत्वा द्वादशवर्षाणि ततोसाविसिरुद्गतः । ग्राह्यः सप्तदिनं स्थित्वा हन्यात्साधकमन्यथा ॥ ४९ ॥
कैकसेयी सुतस्नेहाद्द्रष्टुमागात्क्षणे क्षणे । अपश्यच्चासिमुद्भूतं काले देवैरधिष्ठितं ॥ ५० ॥
प्रसन्नवदना भर्तुर्निजगाद यथाविधि । शंबूकस्य महाराज सिद्धं तद्योगकारणं ॥ ५१ ॥
आगमिष्यति मे पुत्रो मेरुं कृत्वा प्रदक्षिणं । अहोभिस्त्रिभिरद्यापि नियमो न समाप्यते ॥ ५२ ॥
एवं मनोरथं सिद्धं दध्यौ चंद्रनखा सदा । लक्ष्मणश्च तमुद्देशं संप्राप्तः पर्यटन्वने ॥ ५३ ॥
सहस्रामरपूज्यस्य सद्गंधस्य स्वभावतः । अनंतस्यादिहीनस्य खड्गरत्नस्य तस्य सः ॥ ५४ ॥
दिव्यगंधानुलिप्तस्य दिव्यस्रग्भूषितस्य च । गंधो भास्करहासस्य लक्ष्मीधरमुपेयिवान् ॥५५॥
लक्ष्मणो विस्मयं प्राप्तः परित्यज्य क्रियांतरं । अयासीद्गंधमार्गेण केसरीव भयोज्झितः ॥ ५६ ॥

अपश्यच्च तरुच्छन्नं प्रदेशमतिदुर्गमं । लताजालावलीरुद्धं तुंगपाषाणवेष्टितं ॥ ५७ ॥
मध्ये च गहनस्यास्य सुसमं धरणीतलं । विचित्ररत्ननिर्माणमर्चितं कनकांबुजैः ॥ ५८ ॥
मध्ये तस्यापि विपुलं वंशस्तं वंशमुत्थितं । सौधर्ममिव संद्रष्टुमविज्ञानकुतूहलं ॥ ५९ ॥
अथांते तस्य निस्त्रिंशं विस्फुरत्करमंडलं । सकीचकवनं येन प्रदीप्तमिव लक्ष्यते ॥ ६० ॥
नष्टशंकस्तमादाय लक्ष्मीवाञ्जातविस्मयः । जिज्ञासंस्तीक्ष्णतामस्य तं वेणुस्तंबमच्छिनत् ॥ ६१ ॥
गृहीतसायकं दृष्ट्वा तं सर्वास्तत्र देवताः । अस्माकं स्वाम्यसीत्युक्त्वा सनमस्यमपूजयम् ॥ ६२ ॥
अथावोचत सीतेशः किंचिदस्राकुलेक्षणः । सौमित्रिश्चिरयत्यद्य क्वनु यातो भविष्यति ॥ ६३ ॥
भद्रोत्तिष्ठ जटायुः खं दूरमुत्पत्य सद्द्रुतं । लक्ष्मीधरकुमारस्य निपुणान्वेषणं कुरु ॥ ६४ ॥
इत्युक्तः करणं यावत्करोत्युत्पतितुं खगः । अंगुली तावदायुस्य (?) जनकस्यांगजावदत् ॥६५॥
अयं कुंकुमपंकेन लिप्तांगो नाथ लक्ष्मणः । चित्रमाल्यांबरधरः समायाति स्वलंकृतः ॥ ६६ ॥
गृहीतश्चायमेतेन मंडलाग्रो महाप्रभः । राजतेत्यंतमेतेन शैलः केसरिणा यथा ॥ ६७ ॥
दृष्ट्वा तमीदृशं रामो विस्मयव्याप्तमानसः । असहः प्रमदं रोद्धुमुत्थाय परिषस्वजे ॥ ६८ ॥
पृष्टश्च लक्ष्मणः कृत्स्नं स्ववृत्तांतमवेदयत् । स्थिताश्च ते विचित्राभिः संकथाभिर्यथासुखं ॥६९॥

दृष्ट्वा प्रतिदिनं खड्गं सुतं च नियमस्थितं । यायासीत्सा दिने तस्मिन् कैकसेय्यागतैकका ॥७०॥
अपश्यच्च विसाराणां वनं कृत्तमशेषतः । अचिंतयच्च यातः क्व पुत्र स्थित्वाटवीमिमां ॥ ७१ ॥
स्थितश्च यत्र संसिद्धमसिरत्नमिदं वनं । छिंदानेन परीक्षार्थं न युक्तं सुनुना कृतं ॥ ७२ ॥
तावच्चास्तस्थितादित्यमंडलप्रतिमं शिरः । सत्कुंडलं च बंधं च ददर्श स्थाणुमध्यगं ॥ ७३ ॥
उपकारः कृतस्तस्याः परमो मूर्छया क्षणं । पुत्रमृत्युसमुत्थेन दुःखेन परिपीडिता ॥ ७४ ॥
ततः संज्ञां समासाद्य हाकारमुखरं मुखं । उत्क्षिप्य कृच्छ्रतो दृष्टिं तत्र मूर्धन्यपातयत् ॥ ७५ ॥
विललाप च शोकार्ता गलदस्राकुलेक्षणा । कुररीवैकिकारण्ये हृदयाघातिकारिणी ॥ ७६ ॥
स्थितो द्वादशवर्षाणि दिनानां च चतुष्टयं । पुत्रो मे हा परं क्षांतं न विधे दिवसत्रयं ॥ ७७ ॥
कृतांतापकृतं किं ते मया परमनिष्ठुर । येन दृष्टिनिधिः पुत्रः सहसा विनिपातितः ॥ ७८ ॥
अपुण्यया मया नूनमन्यजन्मनि बालकः । कस्या अपहृतो मृत्युं तत्प्रत्यागतमद्य ते ॥ ७९ ॥
मयापि पुत्र जातोऽसि कथमेतां स्थितिं गतः । ईदृशोऽपि प्रयच्छैकां वाचमार्तिविनाशिनीं॥८०॥
एहि वत्स निजं रूपं प्रतिपद्य मनोहरं । अमंगलमिदं मायाक्रीडनं न विराजते ॥ ८१ ॥
स्फुटं यातोसि हा वत्स परलोकं विधेर्वशात् । अन्यथा चिंतितं कार्यमिदमुद्भूतमन्यथा ॥८२॥

अनुष्ठितं त्वया मातुः प्रतिकूलं न जातुचित् । अधुना कारणोन्मुक्तं किमिदं विनयोज्झितं ॥८३॥
संसिद्धसूर्यहासश्चेदजीविष्यस्त्वमत्र ते । अस्थास्यत्कः पुरो लोके चंद्रहासभृतो यथा ॥ ८४ ॥
भजता चंद्रहासेन पदं मम सहोदरे । सूर्यहासस्य न क्षांतं नूनमात्मविरोधिनः ॥ ८५ ॥
एककं भीषणेऽरण्ये निर्दोषं नियमस्थितं । कुशत्रोः कस्य हंतुं त्वां मूढस्य प्रसृतः करः ॥ ८६ ॥
अदीर्घोपेक्षिता तेन भवंतं निघ्नतोदिता । क्व गमिष्यति पापोसौ सांप्रतं हतचेतनः ॥ ८७ ॥
विलापमिति कुर्वाणा कृत्वांके सुतमुत्तमं । चुचुंबे विद्रुमच्छायलोचना करसंगतं ॥ ८८ ॥
ततः क्षणात्परित्यज्य शोकं नष्टास्रसंततिः । गृहीत्वा परमं क्रोधमच्छायस्फुरिताननना ॥ ८९ ॥
संचरंती तमुद्देशं स्वैरं मार्गानुलाक्षितं । निरैक्षत युवानौ तौ चित्तबंधनकारिणौ ॥ ९० ॥
विनाशमगमत्तस्याः क्रोधोसौ तादृशोऽपि सन् । आदेश इव तस्याभूत्स्थाने रागरसः परः ९१
ततोऽचिंतयदेताभ्यां नराभ्यामभिलाषिणं । वृणोमि नरमित्युच्चैरूर्मिकं दधती मनः ॥ ९२ ॥
इति संचिंत्य संसाधुकन्याकल्पं समाश्रिता । हृदयेनातुरात्यंतं भावगह्वरवर्तिना ॥ ९३ ॥
हंसीव पद्मिनीखंडे महिषीव महाह्रदे । सस्ये सारंगबालेव तत्राभूत्साभिलाषिणी ॥ ९४ ॥
भंजनं करशाखानां कुर्वंती स्फुटनिस्वनं । उपविश्य किलोद्विग्ना पुन्नागस्य तलेऽरुदत् ॥ ९५ ॥

अतिदीनकृतारावां धूसरां वनरेणुना । दृष्ट्वा तां रामरमणी कृपावष्टब्धमानसा ॥ ९६ ॥
उत्थायांतिकमागत्य करामर्शनतत्परा । माभैषीरिति भाषित्वा गृहीत्वा पाणिपल्लवे ॥ ९७ ॥
किंचित्किल त्रपाभाजं मलिनांशुकधारिणीं । सांत्वयंती शुभैर्वाक्यै रमणांतिकमानयत् ॥ ९८ ॥
ततः पद्मो जगादैतां का त्वं श्वापदसेविते । एकाकिनी वने कन्ये चरसीहातिदुःखिता ॥ ९९ ॥
ततः संभाषणं प्राप्य स्फुटं तामरसेक्षणा । जगाद भ्रमरौघस्य वाचानुकृतिमेतया ॥ १०० ॥
पुरुषोत्तम मे माता निःसंज्ञायां मृतिं गता । तद्भवेन च शोकेन तातोऽपि विनिपातितः ॥१०१॥
साहं पूर्वकृतात्पापाद्बंधुभिः परिवर्जिता । प्रविष्टा दंडकारण्यं वैराग्यं दधती परं ॥ १०२ ॥
पश्य पापस्य माहात्म्यं यद्वांछंत्यपि पंचतां । अरण्येऽस्मिन् महाभीमे व्यालैरपि विवर्जिता १०३
चिरान्मानुषनिर्मुक्ते भ्रमंत्यास्मिन्वने मया । भवंतः साधवो दृष्टाः क्षयात्पापस्य कर्मणः १०४
जनो विदितपूर्वो यो जने बध्नाति सौहृदं । अनाहूतश्च सामीप्यं व्रजति त्रपयोज्झितः ॥१०५॥
अनादृतः प्रभूतं च भाषते शून्यमानसः । उत्पादयति विद्वेषं कस्य नासौ क्रमोज्झितः ॥१०६॥
एवं भूतापितो यावत्प्राणान्मुंचति सुंदर । तावदद्यैव मामिच्छ दुःखितायां दयां कुरु ॥ १०७ ॥
न्यायेन संगतां साध्वीं सर्वोपप्लववर्जितां । कोवा नेच्छति लोकेस्मिन् कल्याणप्रकृतिस्थितिं १०८

श्रुत्वा तद्वचनं तस्यास्त्रपया परिवर्जितं । परस्परं समालोक्य स्थितौ तूष्णीं नरोत्तमौ ॥ १०९ ॥
सर्वशास्त्रार्थबोधांबुक्षालितं हि तयोर्मनः । कृत्याकृत्यविवेकेषु मलमुक्तं प्रकाशते ॥ ११० ॥
निर्मुक्तदुःखनिश्वासं गच्छामीति तयोदिते । पद्मनाभादिभिः सोक्ता यथेष्टं क्रियतामिति १११
तस्यां प्रयातमात्रायां तदाशालीनताहृतौ । ससीतौ विस्मितौ वीरौ स्मेरवक्त्रौ बभूवतुः ॥११२॥
अंतर्हित्य च सक्रुद्धा समुत्पत्य त्वरावती । याता चंद्रनखा धाम निजं शोकसमाकुला ॥११३॥
शोभयापहृतस्तस्या लक्ष्मणस्तरलेक्षणः । पुनरालोकनाकांक्षो विरहादाकुलोऽभवत् ॥ ११४ ॥
उत्थायाज्ञाय देशेन रामदेवसकाशतः । अटवीं पादपद्माभ्यां बभ्रामान्वेषणातुरः ॥ ११५ ॥
अचिंतयच्च खिन्नात्मा बाष्पव्याकुललोचनः । आत्मन्यनादृतप्रीतिरिति तत्प्रेमनिर्भरः ॥ ११६ ॥
रूपयौवनलावण्यगुणपूर्णा घनस्तनी । मदनाविष्टनागेंद्रवनितासमगामिनी ॥ ११७ ॥
आयांत्येव सती कस्माद्दृष्टमात्रा न सा मया । स्तनोपपीडनाश्लेषं परिरब्धा हतात्मना ॥११८॥
आयोगं मे हृतं चेतश्च्युतं कर्तव्यवस्तुनः । सांप्रतं शोकशिखिना दह्यते मे निरंकुशं ॥ ११९ ॥
जाता सा विषये कस्मिन् कस्य वा दुहिता भवेत् । यूथभ्रष्टा मृगीवेयं कुतः प्राप्ता सुलोचना ॥
संचिंत्येति कृतभ्रांतिस्तामपश्यत्समाकुलः । मेने तद्वनमाकाशपुष्पतुल्यं समंततः ॥ १२१ ॥

अविदितपरमार्थैरेवमर्थेन हीनं । न खलु विमलचित्तैः कार्यमारंभणीयं ।
अविषयकृतचित्ता सत्समाशक्तिमुक्ता । दधति परमशोकं बालवद्बुद्धिहीनाः ॥१२२॥
किमिदमिह मतो मे किं नियोज्यं तदिष्टं । कथमनुगतकृत्यैः प्राप्यते शं मनुष्यैः ॥
इति कृतमतिरुच्चैर्यो विवेकस्य कर्ता । रविरिव विमलोसौ राजते लोकमार्गे ॥१२३॥

इत्यार्षे रविषेणाचार्यप्रोक्ते पद्मचरिते शंबूकवधाख्यानं नाम त्रिचत्वारिंशत्तमं पर्व ।

---

# अथ चतुश्चत्वारिंशत्तमं पर्व ।

अनिच्छयाथ विध्वस्ते खरवध्वा मनोभवे । दुःखपूरः पुनः प्राप्तो भग्नरोधो यथा नदः ॥ १ ॥
चकार व्याकुलीभूता विविधं परिदेवनं । शोकपावकतप्तांगा विवत्सा वहुला यथा ॥ २ ॥
वहंती चापमानं तं क्रोधदैन्यस्थमानसा । विगलद्भूरिनेत्रांबुदूषणेन निरैक्षत ॥ ३ ॥
तां विनष्टधृतिं दृष्ट्वा धरणीधूलिधूसरां । प्रकीर्णकेशसंभारां शिथिलीभूतमेखलां ॥ ४ ॥
नखविक्षतकक्षोरुकुचक्षोणी सशोणितां । कर्णाभरणनिर्मुक्तां हारलावण्यवर्जितां ॥ ५ ॥

विच्छिन्नकंचुकां भ्रष्टस्वभावतनुतेजसां । आलोडितां गजेनेव नलिनीं मद्वाहिनी ॥ ६ ॥
पप्रच्छ परिसांत्व्यैष कांते शीघ्रं निवेदय । अवस्थामिकां केन प्रापितासि दुरात्मनः ॥ ७ ॥
अद्येंदुरष्टमः कस्य मृत्युना कोवलोकितः । गिरेः स्वपिति कः शृंगे मूढः क्रीडति कोहिना ॥८॥
कोंधः कूपं समापन्नो दैवं कस्याशुभावहं । मत्क्रोधाग्नावयं दीप्ते शलभः कः पतिष्यति ॥ ९ ॥
धिक् तं पशुसमं पापं विवेकत्यक्तमानसं । अपवित्रसमाचारं लोकद्वितयदूषितं ॥ १० ॥
अलं रुदित्वा नान्येव काचित्त्वं प्राकृताबला । स्पृष्टा येनासितं संस वाडवाग्निशिखासमा ॥११॥
अद्यैव तं दुराचारं कृत्वा हस्ततलाहतं । नेष्ये प्रेतगतिं सिंहो यथा नागं निरंकुशं ॥ १२ ॥
एवमुक्ता विसृज्यासौ रुदितं कृच्छ्रतः परात् । अस्राक्लिन्नालकाच्छिन्नगंडागाद्दीत्सगद्गदं ॥ १३ ॥
वनांतरस्थितं पुत्रं द्रष्टुं यातास्मि सांप्रतं । अपश्यत्तं च केनापि प्रत्यग्रच्छिन्नमूर्धकं ॥ १४ ॥
ततः शोणितधाराभिर्निःसृताभिर्निरंतरं । प्रदीप्तमिव तन्मूले लक्ष्यते कीचकस्थलं ॥ १५ ॥
प्रशांतोऽवस्थितं हत्वा मे केनापि सुपुत्रकं । खड्गरत्नं समुत्पन्नं प्राप्तं पूजासमन्वितं ॥ १६ ॥
साहं दुःखसहस्राणां भाजनं भाग्यवर्जिता । तन्मूर्धानं निधायांके विप्रलापं प्रसेविता ॥ १७ ॥
तावच्च तेन दुष्टेन शंबूकवधकारिणा । उपगूढास्मि बाहुभ्यां कर्तुं किमपि वांछिता ॥ १८ ॥

उक्तोऽपि मुंच मुंचेति घनं स्पर्शवशं गतः । न मुंचति हतात्मा मां कोपि नीचकुलोद्गतः ॥१९॥
नखैर्विलुप्य दंतैश्च तेनाहं विजने वने । एतिकां प्रापितावस्थां क्वाबला क्व पुमान् बली ॥२०॥
तथापि पुण्यशेषेण केनापि परिरक्षिता । अविखंडितचारित्रा कृच्छ्राद्य निःसृता ततः ॥ २१ ॥
सर्वविद्याधराधीशस्त्रिलोकः क्षोभकारणः । भ्राता मे रावणः ख्यातः शक्रेणाप्यपराजितः ॥२२॥
खरदूषणनामा त्वं भर्ता कोपि विवर्ण्यसे । संप्राप्ताऽस्मि तथाप्येतामवस्थां दैवयोगतः ॥ २३ ॥
ततस्तद्वचनं श्रुत्वा शोकक्रोधसमाहितः । स्वयं महाजवो गत्वा दृष्ट्वा व्यापादितं सुतं ॥ २४ ॥
संपूर्णेंदुसमानोऽपि पूर्वसारंगलोचनः । बभूव भीषणाकारो मध्यग्रीष्मार्कसन्निभः ॥ २५ ॥
आगतश्च द्रुतं भूपः प्रविश्य भवनं निजं । सुहृद्भिः सहितश्चक्रे स्वल्पकालप्रधारणं ॥ २६ ॥
तत्र केचिद्द्रुतं प्रोचुः सचिवाः कर्कशाशयाः । राजकीयमभिप्रायं बुद्ध्वा सेवापरायणाः ॥ २७ ॥
शंबूकः साधितो येन खड्गरत्नं च हस्तितं । असावुपेक्षितो राजन्वद किं न करिष्यति ॥ २८ ॥
ऊचुरन्ये विवेकस्था नाथ नेदं लघुक्रियः । सामंतान् ढौकयाशेषान् रावणाय च कथ्यतां ॥२९॥
यस्यासिरत्नमुत्पन्नं सुसाध्यः स कथं भवेत् । तस्मात्संघातकार्येऽस्मिंस्त्वया कर्तुं न युज्यते ३०
गुरुवाक्यानुरोधेन राक्षसाधिप संविदे । दूतःसंप्रेषितस्तेन युवा लंकां महाजवः ॥ ३१ ॥

राजधैर्यात्कुतोप्येष चिरं यावदवस्थितः । रावणस्यांतिके दूतः कार्यसाधनतत्परः ॥ ३२ ॥
तीव्रक्रोधपरीतात्मा तावच्च खरदूषणः । अभाषत पुनः पुत्रगुणप्रेषितमानसः ॥ ३३ ॥
मायाविनिहतैः क्षुद्रैर्जंतुभिर्भूमिगोचरैः । दिव्यसेनार्णवः क्षुब्धस्तरितुं नैव शक्यते ॥ ३४ ॥
धिगिदं शौर्यमस्माकं सहायान्यदि वांछति । द्वितीयोऽपि कथं बाहुरिष्यते मम बाहुना ॥ ३५ ॥
इत्युक्त्वा परमं बिभ्रदभिमानं त्वरान्वितः । उत्पपात सुहृन्मध्यादाकाशं स्फुरिताननः ॥ ३६ ॥
तमेकांतपरं दृष्ट्वा सन्नद्धानि क्षणांतरे । चतुर्दशसहस्राणि सुहृदां निर्ययुः पुरात् ॥ ३७ ॥
तस्य राक्षससैन्यस्य श्रुत्वा वादित्रनिस्वनं । क्षुब्धसागरनिर्घोषं मैथिली त्रासमागता ॥ ३८ ॥
किं किमेतदहो नाथ प्राप्तमित्युद्गतस्वनः । आलिंगतिस्म जीवेशं वल्ली कल्पतरुं यथा ॥ ३९ ॥
न भेत्तव्यं न भेत्तव्यं इति तां परिसांत्व्य सः । अचिंतयदयं कस्य भवेच्छब्दः सुदुर्द्धरः ॥४०॥
रवः किमेष सिंहस्य भवेज्जलधरस्य वा । आहोश्विदंबुनाथस्य पूरयत्यखिलं नभः ॥ ४१ ॥
उवाच च प्रिये नूनममी चतुरगामिनः । नादिनः प्रचलत्पक्षा राजहंसा नभोंगणे ॥ ४२ ॥
किं वा दुष्टद्विजाः केचिदन्ये त्वद्भयकारिणः । समर्पय प्रिये चापं प्रलयं प्रापयाम्यमून् ॥ ४३ ॥
अथासन्नत्वमागच्छद्विविधायुधसंकुलं । वातेरिताभ्रवृंदाभं निरीक्ष्य सुमहद्बलं ॥ ४४ ॥

जगाद राघवः किंनु नंदीश्वरममी सुराः । जिनेंद्रान्वंदितुं भक्त्या प्रस्थिताः स्युर्महौजसः ४५
आहो वंशस्थलं छित्वा हत्वा कमपि मानवं । असिरत्ने गृहितेऽस्मिन् प्राप्ता मायाविवैरिणः ४६
दुश्शीलया तया नूनं स्त्रिया मायाप्रवीणया । निजाः संक्षोभिता एते स्युरस्मद्दुःखकृतिं प्रति ४७
नात्र युक्तमवज्ञातुं सैन्यमभ्यर्णतामितं । इत्युक्त्वा कवचे दृष्टिं कार्मुके च न्यपातयत् ॥ ४८ ॥
ततस्तमंजलिं कृत्वा सुमित्रातनयोऽगदत् । मयि स्थिते न संरंभस्तव देवो विराजते ॥ ४९ ॥
संरक्ष राजपुत्रीं त्वं प्रत्यरातिं व्रजाम्यहं । ज्ञेया च सिंहनादेन मम यद्यापदुद्भवेत् ॥ ५० ॥
इत्युक्त्वा कंकटच्छन्नसमुपात्तमहायुधः । योद्धुमभ्युद्यतः श्रीमांल्लक्ष्मणः प्रत्यरिं स्थितः ॥५१॥
दृष्ट्वा तमुत्तमाकारं वीरं पुरुषपुंगवं । पर्यस्तृणन्विहायस्था जलदा इव पर्वतं ॥ ५२ ॥
शक्तिमुद्गरचक्राणि कुन्तबाणांश्च खेचरैः । परिकीर्णान्यसौ सम्यक् शस्त्रैरेव न्यवारयत् ॥ ५३ ॥
निरुध्य सर्वशास्त्राणि खेचरैः प्रहितानि सः । वज्रदण्डान् शरान्मोक्तुं प्रवृत्तो व्योमगाहिनः ५४
एककेनैव सा तेन विद्याधरमहाचमूः । रुद्धा वाणैः कदिच्छेव विज्ञानैः संयतात्मना ॥ ५५ ॥
माणिक्यशकलांकानि राजमानानि कुंडलैः । पेतुः शिरांसि खाद्भूमिः खसरः कमलानि वा ५६
शैलाभा द्विरदाः पेतुरश्वैः सह महाभटाः । कुर्वते निनदं भीमं संदष्टरदवासस ॥ ५७ ॥

अयमस्य महान्लाभो निघ्नतस्तस्य तानभूत् । यदर्धगैः शरैर्योद्धान् विव्याध सह वाहनान ५८

अत्रांतरे परिप्राप्तः पुष्पकस्थो दशाननः । क्रुद्धः कृताशयो हंतुं शंबूकवधकारिणं ॥ ५९ ॥

अपश्यच्च महामोहसंप्रावेशनकारिणीं । रत्यरत्योः समुद्धात्रीं साक्षाल्लक्ष्मीमिव स्थितां ॥ ६० ॥

चंद्रमःकांतवदनां बंधूकाभधराधरां । तनूदरीं च लक्ष्मीं च जलदच्छदलोचनां ॥ ६१ ॥

महेभकुंभशिखरः प्रोत्तुंगाविपुलस्तनीं । यौवनोदयसंपन्नां सर्वस्त्रीगुणसङ्गतां ॥ ६२ ॥

सहितामिव कामेन कांतिज्यां दृष्टिसायकां । निजां चापलतां हंतुं सुखेनैव यथेप्सितं ॥ ६३ ॥

सर्वस्मृतिमहाचारीं रूपातिशयवर्तिनीं । सीतां मनोभवोदारज्वरग्रहणकारिणीं ॥ ६४ ॥

तस्यामीक्षितमात्रायां क्रोधोस्य प्रलयं गतः । अजायतापरो भावश्चित्रा हि मनसो गतिः ॥६५॥

अचिंतयच्च किं नाम जीवितं मेऽनया विना । अयुक्तस्यानया का वा श्रीर्मदीयस्य वेश्मनः ६६

इमामप्रतिमाकारां ललितां नवयौवनां । हराम्यद्यैव यावन्नो कश्चिज्जानात्युपागतं ॥ ६७ ॥

आरब्धं प्रसभं कार्यं न मे शक्तिर्न विद्यते । किंत्विदमीदृशं वस्तु यत्कौपीनत्वमर्हति ॥ ६८ ॥

निवेयन् गुणांस्तावल्लोकेऽलं याति लाघवं । ईदृशन् किं पुनर्दोषान् ख्यापयन्ना प्रियो भवेत् ६९

वितत्य सकलं लोकं शशांककरनिर्मला । कीर्तिव्यवस्थिता माभूत्सैवं सति मलीमसा ॥ ७० ॥

तस्मादकीर्तिसंभूतिमकुर्वन् स्वार्थतत्परः । रहः प्रयत्नमारेभे लोको हि परमो गुरुः ॥ ७१ ॥
इति ध्यात्वावलोकिन्या विद्ययोपायमंजसा । विवेद हरणे तस्यास्तेषां नामकुलादि यत् ॥ ७२ ॥
अयं स लक्ष्मणः ख्यातो बहुभिः कृतरोधनः । अयं स रामः सीतेयं सा गुणैः परिकीर्तिता ७३
अमुष्य व्यसनं कृत्वा सिंहनादं स धन्विनः । गरुत्मानिव गृध्रस्य सीतां पेशीमिवाददे ॥ ७४ ॥
जायावैरप्रदीप्तोयमजय्यः खरदूषणः । शक्त्यादिभिः क्षणादेतौ भ्रातरौ मारयिष्यति ॥ ७५ ॥
महाप्रकृष्टपूरस्य नदस्योदाररंहसः । तटयोः पातने शक्तिः केन न प्रतिपद्यते ॥ ७६ ॥
इति संचिंत्य कामार्तः शिशुवत्स्वल्पमानसः । विषवन्मरणोपायं हरणं प्रति निश्चितः ॥ ७७ ॥
शस्त्रांधकारिते जाते तयोरथ महाहवे । कृत्वा सिंहरवं रामरामेति च मुहुर्जगौ ॥ ७८ ॥
तं च सिंहरवं श्रुत्वा स्फुटं लक्ष्मणभाषितं । प्रीत्यारतिमयात्पद्मो व्याकुलीभूतमानसः ॥ ७९ ॥
निर्माल्यैर्जानकीं सम्यक् प्रच्छाद्यात्यंतभूरिभिः । क्षणमेकं प्रिये तिष्ठ माभैषीरिति संगदन्॥८०॥
वयस्य वनितां तावज्जटायू रक्ष यत्नतः । किंचिदस्मत्कृतं भद्र स्मरस्युपकृतं यदि ॥ ८१ ॥
इत्युक्तो वार्यमाणोऽपि शकुनैः क्रंदनाकुलैः । सतीं मुक्त्वा जनेऽरण्ये वेगवान् प्राविशद्रणं॥८२॥
अत्रांतरे समागत्य विद्यालोकेन कोविदः । सीतामुत्क्षिप्य बाहुभ्यां नलिनीमिव वारणः ॥८३॥

कामदाहगृहीतात्मा विस्मृताशेषधर्मधीः । आरोपयितुमारेभे पुष्पकं गगनस्थितं ॥ ८४ ॥
ह्रियमाणामथ प्रेक्ष्य स्वामिनो वनितां प्रियां । संरंभवह्निदीप्तात्मा समुत्पत्य महाजवः ॥ ८५ ॥
तीक्ष्णकोटिभिरत्यंतं जटायुर्नखलांगुलैः । दशाननपुरःक्षेत्रं चकर्षासृक्समाद्रितं ॥ ८६ ॥
परुषैश्छदनांतैश्च वातसंपाटितांशुकैः । जघान जवनैर्भूयः सर्वकायमलं बलः ॥ ८७ ॥
इष्टवस्तुविघातेन रावणः कोपवानथ । हत्वा हस्ततलेनैव महीतलमजीगमत् ॥ ८८ ॥
ततोऽसौ परुषाघाताद्विकलीभूतमानसः । कुर्वन् केकायितं दुःखी खगो मूर्छामुपागतः ॥ ८९ ॥
ततो निर्विघ्नमारोप्य पुष्पकं जनकात्मजां । जानानः संगतं कामं रावणः स्वेच्छया ययौ ॥९०॥
ज्ञात्वापहृतमात्मानं रामरागातिशायिनात् । सीता शोकवशीभूता विललापार्तनिस्वनात् ॥ ९१ ॥
ततः स्वपुरुषासक्तहृदयां कृतरोदनां । दृष्ट्वा सीतामभूत्किंचिद्विरागीव दशाननः ॥ ९२ ॥
अचिंतयच्च मे कास्था कृतेन्यस्यैव कस्यचित् । यदियं रौति सक्तासुः करुणं विरहाकुला ९३
कीर्तयंति गुणान् भूयः साधूनामभिसम्मतां । पुरुषांतरसंबंधानतिशोकपरायणा ॥ ९४ ॥
तत्किमेतेन खड्गेन मूढा व्यादयाम्यमुं । अथवा न स्त्रियं हंतुं मम चेतः प्रवर्तते ॥ ९५ ॥
न प्रसादयितुं शक्यः क्रुद्धः शीघ्रं नरेश्वरः । अभीष्टाल्लब्धुमथवा द्युतिर्वा कीर्तिरेव वा ॥ ९६ ॥

विद्या वाभिमता लब्धुं परलोकक्रियापि वा । प्रिया वा मनसो भार्या यद्वा किंचित्समीहितं ९७
साधूनामग्रतः पूर्वं व्रतमेतन्मयार्जितं । अप्रसन्ना न भोक्तव्या परस्य स्त्रीर्मयेति च ॥ ९८ ॥
रक्षन्निदं व्रतं तस्मात्प्रसादं प्रापयाम्यमुं । भविष्यत्यनुकूलेयं कालेन मम संपदा ॥ ९९ ॥
इति संचित्य तामंकात्तले स्वस्मिन्नतिष्ठिपत् । प्रतिक्ष्यते हि तत्कालं मृत्युः कर्मप्रचोदितः १००
अथेषुवारिधाराभिराकुलं रणमंडलं । प्रविष्टं राममालोक्य सुमित्रातनयोऽगदत् ॥ १०१ ॥
हा कष्टं देव कस्मात्त्वं भूमिमेतामुपागतः । एकाकीं मैथिलीं मुक्त्वा विपिने विघ्नसंकुले॥१०२॥
तेनोक्तस्त्वद्रवं श्रुत्वा प्राप्तोऽस्मि त्वरयान्वितः। सोऽवोचद्गम्यतां शीघ्रं न साधु भवता कृतं१०३
सर्वथा परमोत्साहो जय त्वं बलिनं रिपुं । इत्युक्त्वा शंकया युक्तो जानकीं प्रति चंचलः १०४
क्षणान्निवर्तते यावत्तावत्तत्र न दृश्यते । सीतेति हतवचेतो रामश्च्युतममन्यत ॥ १०५ ॥
हा सीते इति भाषित्वा मूर्छितो धरणीमगात् । भर्ता तेन परिष्वक्ता सा बभूव विभूषिता १०६
संज्ञां प्राप्य ततो दृष्टिं निक्षिपन् वृक्षसंकुले । इति प्रेम परीतात्मा जगादात्यंतमाकुलः ॥१०७॥
अयि देवि क्व यातासि प्रयच्छ वचनं द्रुतं । चिरं किं प्रतिहासेन दृष्टासि तरुमध्यगा ॥१०८॥
एह्यागच्छ (प्र) यातोऽस्मि कार्यं कोपेन किं प्रिये । जानास्येव चिरं कोपस्तव देवि न मे सुखं ॥

एवं कृतध्वनिर्भ्राम्यन् प्रदेशं तं सुगह्वरं । गृध्रं मुमूर्षुमैक्षिष्ट कृतकेकास्वनं शनैः ॥ ११० ॥
ततोत्यंतविषण्णात्मा म्रियमाणस्य पक्षिणः । कर्णजापं ददौ प्राप्तस्स तेनामरकायतां ॥ १११ ॥
तस्मिन्काले गते पद्मः शोकार्तः केवले वने । वियोगदहनव्याप्तः पुनर्मूर्छामशिश्रियत् ॥ ११२ ॥
समाश्वास्य च सर्वत्र न्यस्य दृष्टिं समाकुलः । दीनं ललाप नैष स्याद्भूतोनैत्रार्तमानसः ॥११३॥
रंध्रं प्राप्य वने भीमे हा केनास्मि दुरात्मना । हरता जानकीं कष्टं हतो दुष्करकारिणा ॥११४॥
दर्शयंस्तामथोत्सृष्टां हरं शोकमशेषतः । को नाम बांधवत्वं मे वनेस्मिन् परमेष्यति ॥ ११५ ॥
भो वृक्षाश्वंपकच्छाया सरोजदललोचना । सुकुमारांगिकी भीरुस्वभावा वरगामिनी ॥ ११६ ॥
चित्तोत्सवकरी पद्मरजोगंधिमुखानिला । अपूर्वा योषिती सृष्टिर्दृष्टा स्यात्काचिदंगना ॥ ११७ ॥
कथं निरुत्तरा यूयमित्युक्त्वा तद्गुणैर्हृतः । पुनर्मूर्छापरीतात्मा धरणीतलमागमत् ॥ ११८ ॥
समाश्वास्य च संक्रुद्धो वज्रावर्तं महाधनुः । आरोप्यास्फालयन्मुक्तं टंकारपुरुनिस्वनं ॥ ११९ ॥
सिंहानां भीतिजननं नृसिंहः सिंहनिस्वनं । मुमोच मुहुरत्युग्रमुत्कर्णद्विरदश्रुतं ॥ १२० ॥
भूयो विषादमागत्य त्यक्तचापोत्तरीयकं । उपविश्य प्रमादं स्वं शुशोच फलितं क्षणात् ॥१२१॥
दुःश्रुत्य दुर्विमर्शेण भजता त्वरितां गतिं । धर्मधीरिव मूढेन हारिता हा मया प्रिया ॥ १२२ ॥

मानुषत्वं परिभ्रष्टं गहने भवसंकटे । प्राप्तुमत्यद्भुतं भूयः पाणिना शुभकर्मणा ॥ १२३ ॥
त्रैलोक्यगुणवद्रत्नं पतितं निम्नगापतौ । लभेत कः पुनर्धन्यः कालेन महताप्यलं ॥ १२४ ॥
वनितामृतमेतन्मे करांकस्थं महागुणं । प्रनष्टसंगतिं भूयः केनोपायेन यास्यति ॥ १२५ ॥
वनेऽस्मिञ्जननिर्मुक्ते कस्य दोषः प्रदीयते । नूनं मत्त्यागकोपेन क्वापि याता तपस्विनी ॥१२६॥
अरण्यं निर्मनुष्येऽस्मिन्कमुपेत्य प्रसाद्य च । पृच्छामि दुष्कृताचारो यो मे वार्ता निवेदयेत् १२७
इयं ते प्राणितुल्येति चेतःश्रवणयोः परं । कुर्यात्प्रह्लादनं को मे वचसामृतदायिना ॥ १२८ ॥
दयावानीदृशः कोऽस्मिन् लोके पुरुषपुंगवः । यो मे स्मिताननः कांतां दर्शयेदघवर्जितां ॥१२९॥
हृदयागारमुद्दीप्तं कांताविरहवह्निना । उदंतजलदानेन को मे निर्वापयिष्यति ॥ १३० ॥
इत्युक्त्वा परमोद्विग्नो महीनिहितलोचनः । असकृत्किमपि ध्यायंस्तस्थौ निश्चलविग्रहः ॥१३१॥
अथ नात्यंतदूरस्थचक्रवाकी स्वनं कलं । समाकर्ण्य दृशं तस्यां श्रवणं च न्यधापयत् ॥ १३२ ॥
अचिंतयदमुष्याद्रेस्तत्संगे गंधसूचितं । किमिदं पंकजवनं भवेद्याता कुतूहलात् ॥ १३३ ॥
दृष्टिपूर्वं मनोहारि नानाकुसुमसंकुलं । स्थानं हरति चेतोस्याः कदाचित्क्षणमात्रकं ॥ १३४ ॥
जगाम च तमुद्देशं यावच्चक्राहसुंदरी । मया विना क्व यातीति पुनरुद्वेगमागमत् ॥ १३५ ॥

भो भो महीधराधीश ! धातुभिर्विविधैश्रित ! सूनुर्दशरथस्य त्वां पद्माख्यः परिपृच्छते ॥१३६॥
विपुलस्तननम्रांगा बिम्बोष्ठी हंसगामिनी । सन्नितम्बं भवेद्दृष्टा सीता मे मनसः प्रिया ॥१३७॥
दृष्टादृष्टेति किं वक्षि ब्रूहि ब्रूहि क्व सा क्व सा । केवलं निमदस्यैवं प्रतिशब्दोयमीदृशः ॥१३८॥
इत्युक्त्वा पुनरध्यासीत्किमदृष्टेन चोदिता । कृतांतशत्रुणा बाला समासन्ना सती सती ॥१३९॥
चंडोर्म्मिमालयाऽत्यन्तं वेगवत्या विवेकया । कांता हृता भवेन्नद्या विद्येव दुरितेच्छया ॥१४०॥
किंवाऽत्यन्तक्षुधार्तेन, नितान्तक्रूरचेतसा । इभारिणा भवेद्भुक्ता साधुवर्गस्य वत्सला ॥१४१॥
पशोर्भीमैककार्यस्य सिंहस्योत्केसरस्य सा । म्रियते दृष्टिमात्रेण न व्याहिस्पर्शनाद्विना ॥१४२॥
भ्राता मम मृधे भीमे लक्ष्मणः संशयं श्रितः । सीतया विरहश्चायं तेन जानामि नो रतिं १४३
जीवलोकमिमं वेद्मि सकलं प्राप्तसंशयं । जानामि च पुनः शून्यमहो दुःखस्य चित्रता ॥१४४॥
दुःखस्य यावदेकस्य नावसानं व्रजाम्यहम् । द्वितीयं तावदायातमहो दुःखार्णवो महान् ॥१४५॥
खंजपादस्य खंडोयं हिमदग्धस्य पावकः । स्खलितस्यावटे पातः प्रायोनर्था बहुत्वगाः ॥१४६॥
ततः पर्यट्य विपिने पश्यन्मृगगरुत्मतः । विवेश स्वाश्रयं भूयः श्रियाशून्यमरण्यकं ॥१४७॥
अत्यन्तदीनवदनः कृत्वा निष्वां धनुर्लतां । सितश्लक्ष्णपटच्छिन्नस्तस्थौ पर्यस्य भूतले ॥१४८॥

भूयो भूयो बहु ध्यायन् क्षणनिश्चलविग्रहः । निराशतां परिप्राप्तः सूत्कारमुखरानन: ॥ १४९ ॥

महानरानिति पुरुदुःखलंघितान् । पुराकृतादसुकृतकर्मजृम्भणात् ॥

अहो जना भृशमवलोक्य दीयतां । मतिः सदा जिनवरधर्मकर्मणि ॥ १५० ॥

न ये भवप्रभवविकारसंगतेः । परांमुखा जिनवचनान्युपासते ॥

वशीकृतान् शरणविवर्जितानमू—न्तपत्यलं स्वकृतरविः सुदुस्सहः ॥ १५१ ॥

इत्यार्षे रविषेणाचार्यप्रोक्ते पद्मचरिते सीताहरणरामविलापाभिधानं नामचतुश्चत्वारिंशत्तमं पर्व ।

---

# अथ पंचचत्वारिंशत्तमं पर्व ।

एतस्मिन्नगरे प्राप्तः पूर्वशिष्टो विराधितः । समेतः सचिवैश्चैरः सन्नद्धः शस्त्रसंकुलः ॥ १ ॥

एकाकिनमसौ ज्ञात्वा युद्ध्यमानं महानरं । सार्थसम्यद्धिसंभूतिं दीप्यमानं महौजसा ॥ २ ॥

जातुं क्षितितले न्यस्य मूर्द्धन्यस्तकरद्वयः । अब्रवीदिति नम्रांगः परमं विनयं वहन् ॥ ३ ॥

नाथ ! भक्तोस्मि ते किञ्चिद्विज्ञाप्यंश्रूयतां मम । त्वद्विधानां हि संसर्गो निकारक्षयकारणं ॥४॥

क्रुताद्धभीषणस्यास्य करं विन्यस्य मस्तके । पृष्ठतस्तिष्ठ माभैषीरित्यवोचत लक्ष्मणः ॥ ५ ॥
ततः प्रणम्य भूयोऽसौ महाविस्मयसंगतः । जगाद क्षणसंजातमहातेजाः प्रियं वचः ॥ ६ ॥
महाशक्तिमिमं शत्रुं त्वमेकं विनवारय । रणाजिरे भटान् शेषान् निधनं प्रापयाम्यहम् ॥ ७ ॥
इत्युक्त्वा दौषणं सैन्यं तेन शीघ्रं विराधितम् । अधावद्धतसंपन्नप्रह्लद्धेतिसंहतिः ॥ ८ ॥
उवाच वचः सोत्साहं चन्द्रोदरनृपात्मजः । प्राप्तो विराधितः ख्यातो रणातिथ्यसमुत्सुकः ॥९॥
क्केदानीं गम्यते साधु स्थीयतां युद्धशौंडिकैः । अद्य तद्वः प्रदास्यामि यत्कृतान्तोऽतिदारुणः १०
इत्युक्ते वैरसंपन्नो भटानामतिसंकुलः । बभूव शस्त्रसंपातः सुमहान् जनसंक्षयः ॥ ११ ॥
पत्तयः पत्तिभिर्लग्नाः सादिनः सादिभिः समम् । गजिनो गजिभिः सत्रा रथिनो रथिभिः सह १२
परस्परकृताह्वानैरिरितिसंहर्षिभिर्भटैः । संकुलैर्जनिते युद्धे कृतान्योन्यमहायुधैः ॥ १३ ॥
रणाजिरे परं तेजो भजमानो नवं नवं । दिव्यकार्मुकमुद्यम्य शरच्छन्नदिगम्बरः ॥ १४ ॥
खरेण सह संग्रामं चक्रे परमभैरवम् । लक्ष्मीधरः शुनासीरः स्वामिनेव सुरद्विषाम् ॥ १५ ॥
ततः क्रोधपरीतेन खरेण खरनिस्वनम् । अवाचि लक्ष्मणः संख्ये स्फुरल्लोहितचक्षुषा ॥ १६ ॥
ममात्मजमुदासीनं हत्वा परमचापल । कांताकुचौ च संमृश्य पापाद्यापि क्व गम्यते ॥ १७ ॥

अद्य ते निशितैर्बाणैर्जीवितं नाशयाम्यहम् । कृत्वा तथाविधं कर्म्म फलं तस्यानुभूयताम् ॥१८॥
अत्यन्तक्षुद्र निर्लज्ज परस्त्रीसंगलोलुप । ममाभिमुखतां गत्वा परलोकं व्रजाधुना ॥ १९ ॥
ततस्तैः परुषैर्वाक्यैः समुद्दीपितमानसः । उवाच लक्ष्मणो वाचं पूरयन् सकलं नभः ॥ २० ॥
किं वृथा गर्जसि क्षुद्र दुःखे वर शुना समः । अहं नयामि तत्र त्वां यत्र ते तनयो गतः ॥२१॥
इत्युक्त्वावस्थितं व्योम्नि विरथं खरदूषणम् । चकार लक्ष्मणः छिन्नचापकेतुं च निःप्रभम् २२
ततोऽसौ पतितः क्षोण्यां नभस्तः क्रोधलोहितः । प्रक्षीणेष्विव पुण्येषु ग्रहस्तरलविग्रहः ॥ २३ ॥
खड्गांशुलीनदेहश्च सौमित्रिं प्रत्यधावत । असिरत्नं समाकृष्य सोप्यस्याभिमुखं ययौ ॥ २४ ॥
इत्यासन्नं तयोरासीच्चित्रयुद्धं भयानकम् । मुमुचुः स्वस्थिता देवाः सपुष्पान् साधुनिश्वनान् ॥२५॥
तावच्छिरसि संक्रुद्धो दूषणस्य न्यपातयत् । सूर्यहासं यथार्थाख्यं लक्ष्मणोऽक्षतविग्रहः ॥ २६ ॥
निर्जीवः पतितः क्षोण्यां बभूव खरदूषणः । आलेख्यरविसंकाशो यद्वत्स्वर्गच्युतो महः ॥ २७ ॥
अथवा दयितो रत्या निश्चेष्टीभूतविग्रहः । रत्नपर्वतखंडो वा दिग्गजेन निपातितः ॥ २८ ॥
अथ सेनापतिर्नाम्ना दूषणः खरदूषणः । विरथं कर्तुमारेभे चन्द्रोदरनृपात्मजम् ॥ २९ ॥
लक्ष्मणेनेषुणा तावद्गाढं कर्म्मणि ताड़ितः । घूर्णमानो गतो भूमिं समाश्वासनमाप्नुतः ॥ ३० ॥

दत्वा विराधितायाथ तद्बलं खरदूषणम् । प्रययौ लक्ष्मणः प्रीतः प्रदेशं पद्मसंश्रितम् ॥ ३१ ॥
यावत्पश्यति तं सुप्तं भूमौ सीताविवर्जितम् । जगौ चोत्तिष्ठ किं नाथ याता क्व वद जानकी ३२
उत्थाय सहसा दृष्ट्वा लक्ष्मणं निर्व्रणांगकम् । किंचित्प्रमोदमायातः परिष्वजनतत्परः ॥ ३३ ॥
जगाद भद्र नो वेद्मि देवी केनापि किं हृता । उत सिंहेन निर्भुक्ता न दृष्टात्र गवेषिता ॥ ३४ ॥
पातालं किं भवेन्नीता नभः शिखरमेव वा । उद्वेगेन विलीना वा सुकुमारशरीरिका ॥ ३५ ॥
ततः क्रोधपरीतांगो विषादी लक्ष्मणोऽगदत् । देवोद्वेगानुबन्धेन न किंचिदपि कारणम् ॥ ३६ ॥
नूनं दैत्येन केनापि हृता केनापि जानकी । ध्रियमाणामिमां लप्स्ये कर्तव्योऽत्र न संशयः॥३७॥
परिसांत्वोत्तमैर्वाक्यैर्विविधैः श्रुतिपेशलैः । विमलेनांभसा तस्य मुखं प्रक्षालयन् सुधीः ॥ ३८ ॥
श्रुत्वा तावदलं तारं शब्दमुत्तानिताननः । अपृच्छत् श्रीधरं रामः संभ्रमं किंचिदापयन् ॥ ३९ ॥
किमेषा नर्दति क्षोणी गगनात्किमयं ध्वनिः । किं कृतं भवता पूर्वं शत्रुशेषं मयोज्झितम् ॥४०॥
सुमित्राजस्ततोऽवोचन्नाथोऽत्र हि महाहवे । उपकारो महान्काले खेचरेण कृतो मम ॥ ४१ ॥
चन्द्रोदरसुतः सोऽयं विराधित इति श्रुतः । प्रस्रवे दैवतेनैष हितेन परिढौकितः ॥ ४२ ॥
चतुर्विधेन महता बलेनास्य सुचेतसः । आगच्छतो महानेषः शब्दः श्रुतिमुपागतः ॥ ४३ ॥

विश्रब्धचेससोर्यावत् कथेयं वर्त्तते तयोः । तावन्महाबलोपेतः परिप्राप्तो विराधितः ॥ ४४ ॥
ततो जयजयस्वानं कृत्वा विरचिताञ्जलिः । जगाद खेचरस्वामी प्रणतैः सचिवैः समम् ॥४५॥
स्वामी त्वं परमोऽस्माभिश्चिरात्प्राप्तो नरोत्तमः । अतः प्रदीयतामाज्ञा नाथ कर्तव्यवस्तुनि ॥४६॥
इत्युक्तो लक्ष्मणोऽभाणीत् साधो शृणु सुवर्तनम् । गुरोः केनापि मे पत्नी हृता दुर्नयवर्तिना ॥४७॥
तया विरहितः सोऽयं पद्मः शोकवशीकृतः । यदि नाम त्यजेत्प्राणांस्तावद्वह्निं विशाम्यहम् ॥४८॥
एतत्प्राणदृढासक्ता भद्र प्राणानवैहि मे । ततोऽत्र प्रकृते किंचित्कर्तव्यं कारणं परम् ॥ ४९ ॥
ततो नताननः किंचित्खगप्रभुरचिंतयत् । कृत्वापि श्रममेतं मे कष्टमाशा न पूरिता ॥ ५० ॥
सुखं संवसता स्वेष्टं नानावनविहारिणा । पश्यात्मा योजितः कष्टे कथं संशयगह्वरे ॥ ५१ ॥
दुःखार्णवतटं प्राप्तो यां यां गृह्णाम्यहं लताम् । दैवेनोन्मूल्यते सा सा कृत्स्नं विधिवशं जगत् ५२
तथाप्युत्साहमावृत्य कर्तव्यं समुपागतम् । करोमि कुर्वतो भद्रमभद्रं वा स्वकर्मजम् ॥ ५३ ॥
इति ध्यात्वा वहीरूपं भजमु(न्नु)त्साहसंस्तुतम् । जगाद सविवान् धीरो वचसा स्फुटतेजसा ५४
पत्नी महानरस्यास्य नीता यदि महीतलम् । अथाकाशं गिरिं वारि स्थलं वा विपिनं पुरं ॥५५॥
गवेषयतो यत्नेन सर्वाशा सुसमं ततः । यदिच्छितकृतार्थानां तद्दास्यामि महाभटाः ॥ ५६ ॥

इत्युक्ताः सम्मदोपेताः सन्नद्धाः परमौजसः । नानाकल्पाः खगा जग्मुर्दिशो दश यशोर्थिनः ५७
अथार्कजटिनः सुनुर्नाम्ना रत्नजटी खगः । खड्गी द्रागिति सुश्राव दूरतो रुदितध्वनिम् ॥ ५८ ॥
आशां च भजमानस्तामाकर्णयति निस्वनम् । हा राम हा कुमारेति जलधेरूर्ध्वमम्बरे ॥ ५९ ॥
यदि देवेन निस्वानं श्रुत्वा तं सपरिस्फुटम् । समुत्पपात तं देशं विमानं यावदीक्षते ॥ ६० ॥
अस्योपरि परिक्रन्दं कुर्वन्तीं मतिविह्वलाम् । वैदेहीं स समालोक्य बभाण क्रोधपूरितः ॥ ६१ ॥
तिष्ठ तिष्ठ महापाप दुष्ट विद्याधराधम । कृत्वापराधमीदृक्षं क्व त्वया गम्यतेऽधुना ॥ ६२ ॥
दयितां रामदेवस्य प्रभामण्डलसोदराम् । मुञ्च शीघ्रमभीष्टं ते जीवितं यदि दुर्मते ॥ ६३ ॥
ततो दशाननोऽप्येनमाक्रोश्य परुषस्वनम् । युद्धे समुद्यतः क्रुद्धो विह्वलीभूतमानसः ॥ ६४ ॥
पुनश्चाचिन्तयद्युद्धे प्रवर्त्ते मतिविह्वला । मया निरूपिता सीता कदाचित्पंचतां भजेत् ॥ ६५ ॥
आकुलां रक्षितां चैतां परमव्याकुलात्मनाम् । न व्यापादयितुं शक्यः क्षुद्रोऽप्येष नभश्चरः ॥६६॥
इति सचिंत्य संभ्रान्तश्लथमौल्युत्तराम्बरः । स्वस्थस्य रत्नजटिनो बली विद्यामपाहरत् ॥ ६७ ॥
अथ रत्नजटी त्रस्तः किंचिन्मंत्रप्रभावतः । पपात शनकैरुल्कास्फुलिंग इव मेदनीम् ॥ ६८ ॥
समुद्रजलमध्यस्थं कंबुद्वीपं समाश्रितः । आयुर्वर्तनसामर्थ्याद्भग्नपोतो यथा वणिक् ॥ ६९ ॥

निश्चलश्च क्षणं स्थित्वा समुच्छ्वस्यायतं भृशम् । कंबुपर्वतमारुह्य दिशाचक्रं व्यलोकयत् ॥ ७० ॥
ततः समुद्रवातेन शिशिरत्वमुपेयुषा । अपरीतश्रमस्वेदसमासश्वासदुःखितः ॥ ७१ ॥
यथा स्वन्वेषणं कर्तुं गतास्तेऽन्विष्य शक्तितः । राघवस्यान्तिकं प्राप्ताः प्रणष्टवदनौजसः ॥७२॥
तेषां ज्ञात्वा मनः शून्यं महीविन्यस्तचक्षुषाम् । पद्मो जगाद दीर्घोष्णं निश्वस्य म्लानलोचनः ७३
निजां शक्तिममुंचद्भिर्भवद्भिः साधुखेचराः । अस्मत्कार्ये कृतो यत्नो दैवं तु प्रतिकूलकम् ॥ ७४ ॥
तिष्ठतः स्वेच्छयेदानीं यात वा स्वं समाश्रयम् । वाडवास्यां गतं रत्नं करात्किं पुनरीक्ष्यते ७५
नूनं सर्वं कृतं कर्म प्रापणीयं फलं मया । तत्कर्तुमन्यथा शक्यं न भवद्भिर्मयापि वा ॥ ७६ ॥
विमुक्तं बन्धुभिः कष्टं विकष्टं वनमाश्रितम् । अनुकंपा न तत्रापि जनिता दैवशत्रुणा ॥ ७७ ॥
मन्ये यथानुबन्धेन लग्नोऽयं विधिरुद्धतः । तथैतस्मात्परं दुःखं किं नामान्यत्करिष्यति ॥ ७८ ॥
परिदेवनमारब्धे कर्तुमेवं नराधिपे । धीरं विराधितोऽवोचत्परिसान्त्वनपण्डितः ॥ ७९ ॥
विषादमतुलं देव किमेवमनुसेवसे । स्वल्पैरेव दिनैः पश्य प्रियामनघविग्रहाम् ॥ ८० ॥
शोको हि नाम कोऽप्येष विषभेदो महत्तमः । नाशयत्याश्रितं देहं का कथान्येषु वस्तुषु ॥८१॥
तस्मादवलम्ब्यतां धैर्यं महापुरुषसेवितम् । भवद्विधा विवेकानां भवनं क्षेत्रमुत्तमम् ॥ ८२ ॥

जीवं पश्यति भद्राणि धीरश्चिरतरादपि । ग्रही ह्रस्वमतिर्भद्रं कृच्छ्रादपि न पश्यति ॥ ८३ ॥
कालो नैष विषादस्य दीयतां कारणे मनः । उदासीनमिहानर्थं कुरुते परमं पुरा ॥ ८४ ॥
विद्याधरमहाराजे निहते खरदूषणे । अर्थान्तरमनुप्राप्तं दुरंतमवधार्यताम् ॥ ८५ ॥
किष्किंधेन्द्रेन्द्रजिद्वीरौ भानुकर्णस्तथैव च । त्रिशिराः क्षोभणो भीमः क्रूरकर्मा महोदरः ॥८६॥
एवमाद्या महायोधा नानाविद्यामहौजसः । यास्यन्ति सांप्रतं क्षोभं मित्रस्वजनदुःखतः ॥ ८७ ॥
नानायुद्धसहस्रेषु सर्वे संप्राप्तकीर्त्तयः । विजयार्धनगावासखगेन्द्रेणाप्यसाधिताः ॥ ८८ ॥
पवनस्यात्मजः ख्यातो यस्य वानरलक्षितम् । केतुं दूरात्समालोक्य विद्रवति द्विषां गणः ॥८९॥
तस्याभिमुखतां प्राप्य दैवयोगात्सुरा अपि । त्यजन्ति विषये बुद्धिं स हि कोपि महायशः ॥९०॥
तस्मादुत्तिष्ठ तत्स्थानमलंकाराख्यमाश्रिताः । भामंडलस्वसुवार्तां स्वस्थीभूता लभामहे ॥ ९१ ॥
तद्धि नः पुरमायातमन्वयेन रसातले । तत्र दुर्गे स्थिताः कार्यं चिन्तयामो यथोचितम् ॥ ९२ ॥
इत्युक्ते चतुरैरश्वैश्चतुर्भिर्युक्तमुत्तमम् । भास्वरं रथमारुह्य प्रथितौ रघुनन्दनौ ॥ ९३ ॥
शुशुभाते तदात्यन्तं न तौ पुरुषसत्तमौ । सीतया रहितौ सम्यग्दृष्टिर्बोधशमाविव ॥ ९४ ॥
चतुर्विधमहासैन्यसागरेण समावृतः । त्वरावानग्रतस्तस्थौ चन्द्रोदरनृपात्मजः ॥ ९५ ॥

राजपुत्रकरं प्राप्ता कृत्रिमासौ मयूरिका । कथं लभ्या वधो यस्माल्लभ्यते यत्र तत्परैः ॥ १५२ ॥
त्रिवर्णांभोजनेत्राणां कन्यानां कनकत्विषाम् । पीवरस्तनकुंभानां विशालजघनाश्रियाम् ॥ १५३ ॥
वक्त्रकान्तिजितेन्दूनां पूर्णानां चारुभिर्गुणैः । पतिर्भव महाभोग प्रसीद रघुनन्दन ॥ १५४ ॥
अनुबन्धमिदं हास्यं त्यज दुःखविवर्धनम् । मयूरशष्पशोकार्तो माभूः क्षुद्रकवद्बुध ॥ १५५ ॥
सर्वदा सुलभाः पुंसः शिखिशिष्योपमाः श्रियः । ब्रवीति राघवं त्वाहं प्राज्ञैः शोको न धार्यते ॥
ततो लक्ष्मीधरोऽवोचत्परमो वाक्यवर्त्मनि । जांबूनदेदृशं नेदमिदमेतादृशं शृणु ॥ १५७ ॥
आसीद्गृहपतिः ख्यातः पुरे कुसुमनामनि । प्रभवाख्या प्रिया तस्य यमुनेति प्रकीर्तिता ॥१५८॥
धनं वन्धुगृहक्षेत्रपशुप्रभृतयः सुताः । पालांतास्तस्य सेवन्ते शब्दानामन्तमागतः ॥ १५९ ॥
अन्वर्थसंज्ञकास्ते च कुटुंबार्थं सदोद्यताः । कुर्वन्ति कर्म विश्रान्ति लक्षमप्यनुपागताः ॥ १६० ॥
आत्मश्रेयोभिधानश्च सुतोऽस्यैवाखिला धरा । पुण्योदयादसौ भोगान् भुंक्ते देवकुमारवत् १६१
मातृभिः स पितृभ्यां च चिरं कटुकैरक्षरैः । निर्भर्त्सितोऽन्यदा यातो मानी वाह्यं परिभ्रमन् १६२
सुकुमारशरीरोऽसौ निर्वेदं परमं गतः । कर्म कर्तुमशक्तात्मा मरणं स्वस्य वांछति ॥ १६३ ॥
पूर्वकर्मानुभावेन प्रेरितः पथिकश्च तम् । समागत्याभणीदेवं श्रूयतामयि मानव ॥ १६४ ॥

पृथुस्थानाधिपस्याहं सुभानुरिति नन्दनः। गोत्रिकाक्रांतदेशः सन् कुर्वन्नैमित्तभाषितम् ॥१६५॥
पर्यटन् वसुधामेतां दैवात् कूर्म्मपुरं गतः। आचार्येणाभियोग्येन संगं प्राप्तोऽस्मि तत्र च १६६
अयोमयमिदं तेन दत्तं मे वलयं शुभम्। मार्गदुःखाभिभूताय कारुण्याकारचेतसां ॥ १६७ ॥
एतच्च सर्वरोगाणां शमनं बुद्धिवर्धनम्। ग्रहोरगापिशाचादिवशीकरणमुत्तमम् ॥ १६८ ॥
नैमित्तादिष्टकालस्य संप्राप्तश्च ममावधिः। आत्मीयमधुना राज्यं कर्तुं यामि निजं पुरम् ॥१६९॥
राज्यस्थस्य प्रमादाश्च जायन्ते गणनोज्झिताः। एतच्च छिद्रमासाद्य नियतं नाशकारणम् ॥१७०॥
गृहाणैतत्ततस्तुभ्यं यच्छामि वलयं पुरम्। उपसर्गविनिर्मुक्तं यदि वांछसि जीवितम् ॥ १७१ ॥
लब्धस्य च पुनर्दानं शंसन्ति सुमहाफलम्। यशश्च प्राप्यते लोके पूजयन्ति च तं जनाः ॥१७२॥
ततस्तमेवमित्युक्त्वा गृहीतांगदमायसम्। आत्मश्रेयो गतो धाम सुभानुश्च निजं निजम् ॥१७३॥
यावत्पत्नी नरेन्द्रस्य दष्टा श्वसनभोगिना। निश्चेष्टा दग्धुमानीता चितोद्देशे स पश्यति ॥१७४॥
कटकस्य प्रसादेन तस्य लोहमयस्य ताम्। जीवयित्वा परं प्रापदसौ पूजां नरेन्द्रतः ॥ १७५ ॥
महान्तस्तस्य संजाता भोगाः परमसौख्यदाः। सर्वबन्धुसमेतस्य पुण्यकर्मानुभावतः ॥ १७६ ॥
उत्तरीयांशुकस्योर्द्ध्वं निधाय वलयं सरः। प्रविष्टो यावदादाय गोधेरो नश्यदूर्द्धतः ॥ १७७ ॥

महातरोरधस्तावत् प्रविवेश विलं महत् । शिलानिकरसंछन्नं निर्हारं घोरनिश्वनम् ॥ १७८ ॥
तेन गोधेरशब्देन किल नित्यप्रवृत्तिना । बभूव स्थानमप्येतत्प्रलयाशंकि मानसम् ॥ १७९ ॥
आत्मश्रेयस्ततो वृक्षमुन्मूल्य स शिलाघनम् । गोधेरं नाशयित्वा तं निधानं प्राप्य सांगदम् १८०
आत्मश्रेयः समः पद्मः सीता वलयमूर्तिवत् । प्रमादवच्च कोसीद्यं शब्दस्तच्छब्दवद्रियोः (?) १८१
महानिधानवल्लंका गोधेरो दशवक्त्रकः । जनास्त इव निर्भीता यूयं भवत सांप्रतम् ॥ १८२ ॥
तच्छ्रुत्वा समुपाख्यानं जितजाम्बूनदोदितम् । बहवो विस्मयापन्ना बभूवुः स्मितकारिणः॥१८३॥
जाम्बूनदादयः सर्वे ततः कृत्वा प्रधारणम् । इदमूचुः पुनः पद्मं श्रृणु राजन् समाहितः ॥१८४॥
अनन्तवीर्ययोगीन्द्रं संप्रणम्य पुरा मुदा । रावणेनात्मनो मृत्युं परिपृष्टः समादिशत् ॥ १८५ ॥
यो निर्वाणशिलां पुण्यामतुलामर्चितां सुरैः । समुद्यतां स ते मृत्योः कारणत्वं गमिष्यति ॥१८६॥
सर्वज्ञोक्तं निशम्यैतदचिन्तयदसाविदम् । भविता पुरुषः कोसौ तां यश्चालयितुं क्षमः ॥ १८७ ॥
नास्त्येव मरणे हेतुर्ममेत्युक्तं भवत्यदः । वचोयुक्तिर्विचित्रा हि विदुषामर्थदेशने ॥ १८८ ॥
ततो लक्ष्मीधरोऽवोचद्गच्छामो न चिरं हितम् । ईक्षामहे शिलां सैद्धीं भव्यानां रोमहर्षणीम् १८९
रहस्यमेतत्सन्मंत्र्य सुनिश्चित्य समं ततः । सर्वे ते गन्तुमुद्युक्ताः प्रमादपरिवर्जिताः ॥ १९० ॥

जांबूनदो महाबुद्धिः किष्किन्धाधिपतिस्तथा । विराधितोऽर्कमाली च नलनीलौ विचक्षणौ १९१
सपुरस्कारमारोप्य विमाने रामलक्ष्मणौ । संप्रयाता द्रुतं व्योम्नि रात्रौ तमसि गह्वरे ॥ १९२ ॥
अवतेरुः समीपे च यत्र सा सुमनोहरा । शिला परमगंभीरा सुरासुरनमस्कृता ॥ १९३ ॥
उपसस्तुश्च ते सर्वे मस्तकन्यस्तपाणयः । आशारक्षानवस्थाप्य प्रयातान् सुसमाहितान् ॥१९४॥
सुगंधिभिर्महांभोजैः पूर्णेन्दुपरिमंडलैः । अन्यैश्च कुसुमैश्चित्रैरर्चिता तैरसौ शिला ॥ १९५ ॥
सितचन्दनदिग्धांगा कुंकुमांशुकधारिणी । धृतालंकरणा भाति सा शचीव मनोरमा ॥ १९६ ॥
तस्यां सिद्धान्नमस्कृत्य शिरसि करकुड्मलाः । भक्त्या प्रदक्षिणं चक्रुः क्रमेण विधिपण्डिताः १९७
ततः परिकरं बद्ध्वा सौमित्रिर्विनयं वहन् । नमस्कारपरो भक्तस्तुतिं कर्तुं समुद्यतः ॥ १९८ ॥
जयशब्दं समुद्घोष्य प्रहृष्टा वानरध्वजा । स्तोत्रं परिपठन्तीदमुत्तमं सिद्धमंगलम् ॥ १९९ ॥
स्थितांस्त्रैलोक्यशिखरे स्वयं परमभास्वरे । स्वरूपभूतया स्थित्या पुनर्जन्मविवर्जितान् ॥२००॥
भवार्णवसमुत्तीर्णान्निःश्रेयसः समुद्भवान् । आधारान्मुक्तिसौख्यस्य केवलज्ञानदर्शनान् ॥२०१॥
अनन्तवीर्यसंपन्नान् स्वभावसमवस्थितान् । सुसमीचीनतायुक्तान्निःशेषक्षीणकर्मणः ॥ २०२ ॥
अवगाहनधर्मोक्तानमूर्तान् सूक्ष्मतायुजः । गुरुत्वलघुतामुक्तानसंख्यातप्रदेशिनः ॥ २०३ ॥

अप्रमेयगुणाधारान् क्रमादिपरिवर्जितान् । साधारणान् स्वरूपेण स्वार्थकाष्ठामुपागतान् ॥२०४॥
सर्वथा शुद्धभावांश्च ज्ञातज्ञेयान्निरंजनान् । दग्धकर्ममहाकक्षान् विशुद्धध्यानतेजसा ॥ २०५ ॥
तेजःपटपरीतेन भक्तितो वज्रपाणिना । संस्तुतान् भवभीतेन चक्रवर्त्यादिभिस्तथा ॥ २०६ ॥
संसारधर्मनिर्मुक्तान् सिद्धधर्मसमाश्रितान् । सर्वान् वंदामहे सिद्धान् सर्वसिद्धिसमावहान् २०७
अस्यां च ये गताः सिद्धिं शिलायां शीलधारिणः । उपगीताः पुराणेषु सर्वकर्मविवर्जिताः २०८
जिनेन्द्रसमतां याताः कृतकृत्या महौजसः । मंगलस्मरणेनैतान् भक्त्या वंदामहे मुहुः ॥२०९॥
एवं च सुचिरं श्रुत्वा पुनरेवं बभाषिरे । लक्ष्मीधरं समुद्दिश्य स्थापितैकाग्रमानसाः ॥ २१० ॥
शिलायामिह ये सिद्धा ये चान्ये हतकिल्विषाः । ते विघ्नसूदनाः सर्वे भवन्तु तव मंगलम् २११
अर्हन्तो मंगलं सन्तु तव सिद्धाश्च मंगलम् । मंगलं साधवः सर्वे मंगलं जिनशासनम् ॥ २१२ ॥
इति मंगलनिस्वानैर्विहाय तलचारिणाम् । शिलामचालयत् क्षिप्रं लक्ष्मणो विमलद्युतिः ॥२१३॥
सा लक्ष्मणकुमारेण नानालंकारभूषणा । केयूरकान्तबाहुभ्यां धृता कुलवधूरिव ॥ २१४ ॥
अथांतरिक्षे देवानां महाशब्दो महानभूत् । सुग्रीवाद्याश्च राजेन्द्रा विस्मयं परमं ययुः ॥ २१५ ॥
ततः सिद्धान् प्रमोदाढ्याः प्रणम्य भयवर्जितान् । सम्मेदशिखरस्थं च जिनेन्द्रं मुनिसुव्रतम् २१६

निषद्य ऋषभादीनामभ्यर्च्य च यथाविधि । सकलं भरतक्षेत्रं बभ्रमुस्ते प्रदक्षिणम् ॥ २१७ ॥
सायाह्ने सौम्यवपुषो दिव्यैर्यानैर्मनोजवैः । कृताभिवंदनाशब्दैर्जयनन्दादिभिर्भृशम् ॥ २१८ ॥
परिवार्य महावीर्यं रामं लक्ष्मणसंगतम् । किष्किन्धनगरं प्रापुर्विविशुश्च महर्द्धयः ॥ २१९ ॥
शयिताश्च यथास्थानं विस्मितेनांतरात्मना । एकीभूय पुनः प्रीता इत्यन्योन्यं बभाषिरे ॥ २२० ॥
वीक्ष्यध्वं वासरैः स्वल्पैः पृथिव्यां राज्यमेतयोः । निःशेषैः कंटकैर्मुक्तं शक्तिं धारयतोः पराम् ॥
सा निर्वाणशिला येन चालयित्वा समुद्धृता । उत्सादयत्ययं क्षिप्रं रावणं नात्र संशयः ॥२२२॥
तथापरे वचः प्राहुः कैलाशो येन भूधरः । तदा समुद्धृतः सोयं शिलोद्धारस्य किं समः॥२२३॥
आहुरन्ये समुद्धारः कैलाशस्य कृतो यदि । विद्याबले यतस्तत्र विस्मयः कस्य जायते ॥२२४॥
एके च वचनं प्रोचुः किं विवादैरिमैर्मुधा । जगद्धिताय संध्यर्थं किं नोपायो निरूप्यते ॥२२५॥
तस्मादानीयतां सीतां समभ्यर्च्य दशाननम् । राघवायार्पयिष्यामि विग्रहे किं प्रयोजनम् ॥२२६॥
संग्रामे तारको नष्टो मेरुकश्च महाबलः । कृतवीर्यसुताद्याश्च महासैन्यसमन्विताः ॥ २२७ ॥
एते खण्डत्रयाधीशा महाभागा महौजसः । अन्येहि बहवो नष्टा रणे सामंततः परम् ॥ २२८ ॥
अन्योन्यमभिमंत्र्यैवं विद्याविधिविशारदाः । राघवं विनयोपेताः संभूय ययुरादरात् ॥ २२९ ॥

सुग्रीवाद्याः समासीना नयनानन्दकारिणम् । विरेजुः परितो राममरेन्द्रमिवामराः ॥ २३० ॥
पद्मनाभस्ततोऽवोचत्किमद्याप्यवलंब्यते । मया विनान्तरे द्वीपे दुःखं तिष्ठति मैथिली ॥ २३१ ॥
दीर्घस्तत्र त्वमुत्सृज्य क्षिप्रमद्यैव सर्वथा । त्रिकूटगमने सद्भिः क्रियते न किमुद्यमः ॥ २३२ ॥
तमूचुर्मंत्रिणो वृद्धा नयविस्तरकोविदाः । संशयेनात्र किं देव कथ्यतामेकनिश्चयः ॥ २३३ ॥
किं त्वमिच्छसि वैदेहीं विरोधमथ रक्षसाम् । विजयः प्राप्यते दुःखं नायं सदृशविग्रहः ॥ २३४ ॥
भरतस्य त्रिखंडस्य प्रतिपक्षोज्झितप्रभुः । सामरद्वीपविख्यात एक एव दशाननः ॥ २३५ ॥
शंकितो धातकी द्वीपो द्योतिषामपि भीतिदः । जंबूद्वीपे परं प्राप्तो महिमानं खगाधिपः ॥ २३६ ॥
शिल्पीभूतोऽस्य विश्वस्य कृतानेकाद्भुतक्रियः । ईदृशो राक्षसो राम कथं संसाध्यते त्वया २३७
तस्माद्बुद्धिं रणे त्यक्त्वा यद्वयं संवदामहे । प्रसीद क्रियतां देव तदेवोद्यच्छ शान्तये ॥२३८॥
मा भूत्तस्मिन् कृतक्रोधे जगदेतन्महाभयम् । विध्वस्तप्राणिसंघातं नष्टनिःशेषसक्रियम् ॥२३९॥
योऽसौ विभीषणः ख्यातः स्वयं ब्रह्मा स कीर्तितः । क्रूरकर्मनिवृत्तात्मा भावितोऽणुव्रतैर्दृढम् २४०
अलंघ्यवचनं तस्य कुरुते खेचराधिपः । तयोर्हि परमा प्रीतिरंतरायविवर्जिता ॥ २४१ ॥
बोधितस्तेन दाक्षिण्याद्यशः पालनतोऽपि वा । लज्जया वा विदेहस्य तनयां प्रेषयिष्यति ॥२४२॥

विज्ञापनवचोयुक्तिकुशलो नयपेशलः । अन्विष्यतामरं कश्चित्प्रसादी रावणस्य यः ॥ २४३ ॥
ततो महोदधिनाम्ना ख्यातो विद्याधराधिपः । अब्रवीदेष वृत्तान्तो भवतां नागतः श्रुतिम् २४४
यंत्रैर्बहुजनक्षोदैर्लंकाऽगम्या निरंतरम् । कृतातिशयदुःप्रेक्षा सुभीमात्यंतगह्वरा ॥ २४५ ॥
एषां मध्ये न पश्यामि महाविद्यं नभश्चरम् । लंकां गत्वा द्रुतं भूयो यः समर्थो निवर्तितुम् २४६
पवनंजयराजस्य श्रीशैलः प्रथितः सुतः । विद्यासत्वप्रतापाढ्यो बालोत्तुंगः स याच्यताम् ॥२४७॥
समं दशाननेनास्य विद्यते जयमुत्तमम् । युक्तः करोत्यसौ साम्यं निर्विघ्नं पुरुषोत्तमः ॥ २४८ ॥
प्रतिपन्नैस्ततः सर्वैरेवमस्त्विवति सादरैः । मारुतेरंतिकं दूतः श्रीभूतिः प्रहितो द्रुतम् ॥ २४९ ॥

शक्तिं दधतापि परां प्राप्यापि परं बोधमारभ्यः ।
भवितव्यं नयरतिना रविरिव काले स यात्युदयम् ॥ २५० ॥

इत्यार्षे रविषेणाचार्यप्रोक्ते पद्मपुराणे कोटिशिलाक्षेपणाभिधानं नाम अष्टचत्वारिंशत्तमं पर्व ।

---

# अथ एकोनपंचाशत्तमं पर्व ।

ततो नभः समुत्पत्य जगामासौ मरुज्जवः । अत्युत्तुंगैर्गृहैः पूर्णं श्रीपुरं श्रीनिकेतनम् ॥ १ ॥
तत्र हेमद्रवन्यस्तलेप्यतेजः समुज्वलम् । कुंदाभवलभीशोभि रत्ननिर्मितशेखरम् ॥ २ ॥
मुक्तादामसमाकीर्णं वातायनविराजितम् । उद्यानाकीर्णपर्यन्तं प्राविशन्मारुतेर्गृहम् ॥ ३ ॥
अपूर्वलोकसंघातं पश्यतस्तस्य साद्भुतम् । मनोगतागतं भूयो गतं कृच्छ्रेण धीरताम् ॥ ४ ॥
प्रविष्टे मारुतेर्गेहं तस्मिन् दूते ससंभ्रमे । अनंगकुसुमोत्पातं जगामेन्दुनखात्मजा ॥ ५ ॥
सस्पंदं दक्षिणं चक्षुरवधार्य व्यचिन्तयत् । प्राप्तव्यं विधियोगेन कर्म कर्तुं न शक्यते ॥ ६ ॥
क्षुद्रशक्तिसमासक्ता मानुषास्तावदासताम् । न सुरैरपि कर्माणि शक्यन्ते कर्तुमन्यथा ॥ ७ ॥
वेदितागमनस्तावद्दूतो नर्मदया सभाम् । प्रस्वेदकणसंपूर्णः प्रतीहार्या प्रवेशितः ॥ ८ ॥
जगादाथ यथावृत्तं निःशेषं प्रणताननः । दंडकाद्रिं समायाताः पद्मनाभादयः पुरा ॥ ९ ॥
शंबूकस्य वधं युद्धं विषमं खरदूषणम् । पंचतागमनं तस्य मानवैरुत्तमैः सह ॥ १० ॥
ततो निशम्य तां वार्तां शोकविह्वलविग्रहा । अनंगकुसुमा मूर्छामुपेता मुकुलेक्षणा ॥ ११ ॥

चान्दनेन द्रवेणैतां सिच्यमानां क्रियोज्झिताम् । विलोक्यांतःपुरांभोधिः परमं क्षोभमागतः १२
वीणातंत्रीसहस्राणां प्राप्तानां कोणताडनम् । रुदन्तीनां समं रम्यो ध्वनिः स्त्रीणां समुद्गतः ॥१३॥
अनंगकुसुमा कृच्छ्राल्लंभिता प्राणसंगमम् । अश्रुसिक्तस्तनी तारं विललापातिदुःखिता ॥ १४ ॥
हा तात क्व प्रयातोसि प्रयच्छ वचनं मम । हा भ्रातः किमिदं जातं दीयतां दर्शनं सकृत् ॥१५॥
वनेऽतिभीषणे कष्टं रणाभिमुखतां गतः । भूगोचरैः कथं तात मरणत्वमुपाहृतः ॥ १६ ॥
शोकाकुलजनाकीर्णे जाते श्रीशैलवेश्मनि । नीतो नर्मदया दूतः प्रदेशं वचनोदितम् ॥ १७ ॥
पितुर्भ्रातुश्च दुःखेन तप्ता चन्द्रनखात्मजा । कृच्छ्रेण शमनं नीता सद्भिः प्रशमकोविदैः ॥१८॥
जिनमार्गप्रवीणासौ बुध्वा संसारसंस्थितिम् । लोकाचारानुकूलत्वाच्चक्रे प्रेतक्रियाविधिम् ॥१९॥
अन्येद्युर्दूतमाहूय पवनंजयनन्दनः । अपृच्छच्छोकसंस्पृष्टः मौललोकसमावृतः ॥ २० ॥
निःशेषं दूत यद्वृत्तं तन्निवेदय सांप्रतम् । इत्युक्त्वा कारणं मृत्योः खरदूषणमस्मरत् ॥ २१ ॥
ततोऽस्य क्रोधसंरुद्धसर्वांगस्य महाद्युतेः । भ्रूस्तरंगवती रेजे तडिद्रेखेव चंचला ॥ २२ ॥
ततस्त्रासपरीतांगो मुहुर्दूतः प्रतापवान् । जगाद मधुरं प्राज्ञः कोपविध्वंसकारणम् ॥ २३ ॥
ज्ञातमेव हि देवस्य किष्किन्धाधिपतेः परम् । दयितादुःखमुत्पन्नं तत्समाकारहेतुकम् ॥ २४ ॥

आर्तस्तेन स दुःखेन पद्मं शरणमागमत् । प्रतीक्ष्य सोऽर्तिविध्वंसं किष्किंधनगरं गतः ॥ २५ ॥
सुग्रीवाकृतिचौरेण समं तत्र महानभूत् । चिरं श्रान्तमहायोधः संग्रामः श्वसुरस्य ते ॥ २६ ॥
उत्थाय पद्मनाभेन ततो भूयो महौजसा । तस्याहूतस्य नष्टासौ वेताली स्तेयकारणम् ॥ २७ ॥
ततः साहसगत्याख्यः स्वस्वभावं समाश्रितः । विज्ञातो रामनिर्मुक्तैर्मृत्युं नीतः शिलीमुखैः ॥२८॥
तच्छ्रुत्वा विगतक्रोधो जातः पवननन्दनः । पुनरुक्तं जगौ तुष्टः विकसन्मुखपंकजः ॥ २९ ॥
कृतं कृतमहो साधु प्रियं पद्मेन नः परम् । यत्सुग्रीवकुलं मज्जदकीर्तौ क्षिप्रमुद्धृतम् ॥ ३० ॥
हेमकुंभोपमं गोत्रं अयशःकूपगह्वरे । निमज्जद्गुणहस्तेन तेनसन्मतिनोद्धृतम् ॥ ३१ ॥
एवमादिपरं भूरि प्रशंसन् रामलक्ष्मणौ । कस्मिन्नपि ममज्जासौ सारसौख्यमहार्णवे ॥ ३२ ॥
श्रुत्वा पंकजरागायाः पितुः शोकपरिक्षयम् । उत्सवः सुमहान्जातो दानपूजादिसंस्तुतः ॥ ३३ ॥
उद्वेगानन्दसंपन्नं हतछायासमुज्वलम् । श्रीशैलभवनं जातं रसद्वयसमुत्कटम् ॥ ३४ ॥
एवं विषमतां प्राप्ते स्वजने पावनंजयिः । किंचित्समत्वमाधाय किष्किन्धाभिमुखं ययौ ॥ ३५ ॥
ऋध्याभिगच्छतस्तस्य बलेनात्यर्थभूरिणा । जगादन्यदिवोद्भूतमाकाशपरिवर्जितम् ॥ ३६ ॥
विमानं सुमहं तस्य मणिरत्नसमुज्वलम् । प्रभां दिवसरत्नस्य जहार स्वमरीचिभिः ॥ ३७ ॥

गच्छतं तं महाभाग्यं शतशो बन्धुपार्थिवाः । अनुजग्मुः सुनासीरं यथा त्रिदशपुंगवाः ॥ ३८ ॥
अग्रतः पृष्ठतश्चास्य पार्श्वतश्च जयस्वनैः । गच्छतां खेचरेंद्राणामासीच्छब्दमयं नभः ॥ ३९ ॥
चित्रमासीद्यदश्वानां विहायस्तलगामिनाम् । मनोहारी गजानां च विलासः स्वतनूचितः ॥४०॥
महातुरंगसंयुक्तैः रथैरुच्छ्रितकेतुभिः । विहायसस्तलं जातं मन्ये कल्पनगाकुलम् ॥ ४१ ॥
सितानामातपत्राणां मण्डलेन महीयसा । जातं च कुन्दखण्डानामिव पूर्णं वियत्तलम् ॥ ४२ ॥
गंभीरो दौंदुभो धीरो ध्वानो ध्वस्तापरध्वनिः । चक्रवालं दिशां व्याप्य प्रतिध्वनिघनः स्थितः ॥
संकुलं चलता तेन सैन्येन गगनांगणम् । खण्डखण्डैरिवच्छन्नमन्तरेषु व्यलोक्यते ॥ ४४ ॥
भासां भूषणजातानां बहुवर्णयुजां वयैः । विशिष्टशिल्पिना रक्तं नभो वस्त्रमिवाभवत् ॥ ४५ ॥
ध्वनिं मारुतितूर्यस्य श्रुत्वा सन्नह्य गह्वरम् । तोषं कपिध्वजाः प्रापुः शिखिनोऽब्दध्वनिं यथा ॥४६॥
कृतापणमहाशोभं ध्वजमालासमाकुलम् । रत्नतोरणसंयुक्तं किष्किंधनगरं कृतम् ॥ ४७ ॥
बहुभिः पूज्यमानोऽसौ विभवैस्त्रिदशोपमैः । विवेश नगरं सद्म सुग्रीवस्य च पुष्कलम् ॥ ४८ ॥
सुग्रीवेण प्रतीष्टश्च यथार्हं रचितादरः । कथितं चाखिलं तस्य पद्मनाभादिचेष्टितम् ॥ ४९ ॥
अनेनैव ततो युक्ताः सुग्रीवाद्या नरेश्वराः । धारयन्तः परं हर्षं पद्मनाभमुपाययुः ॥ ५० ॥

अपश्यच्च नरश्रेष्ठं तं लक्ष्मीधरपूर्वजम् । नीलकुंचितसूक्ष्मातिस्निग्धकेशं मरुत्सुतः ॥ ५१ ॥
लक्ष्मीलताविषक्तांगं कुमारमिव भास्करम् । शशांकमिव लिंपंतं कान्तिपङ्केन पुष्करम् ॥ ५२ ॥
नयनानां समानन्दं मनोहरणकोविदम् । अपूर्वकर्मणां सर्गं स्वर्गादिव समागतम् ॥ ५३ ॥
ज्वलद्विशुद्धरुक्मांबु—रुहगर्भसमप्रभम् । मनोज्ञां गतनासाग्रं संगतश्रवणद्वयम् ॥ ५४ ॥
मूर्तिमन्तमिवानंगं पुंडरीकनिभेक्षणम् । चापानतभ्रुवं पूर्णशारदेन्दुनिभाननम् ॥ ५५ ॥
विम्बप्रवालरक्तोष्ठं कुंदश्वेतद्विजावलिम् । कंबुकंठमृगेन्द्राभवक्षोभाजं महाभुजम् ॥ ५६ ॥
श्रीवत्सकान्तिसंपूर्णमहाशोभस्तनान्तरम् । गंभीरनाभिवत्क्षाममध्यदेशविराजितम् ॥ ५७ ॥
प्रशान्तगुणसंपूर्णं नानालक्षणभूषितम् । सुकुमारकरं वृत्तपीवरोरुद्वयस्तुतम् ॥ ५८ ॥
कूर्मपृष्ठमहातेजः सुकुमारक्रमद्वयम् । चन्द्राकुंरारुणच्छायानखपंक्तिसमुज्वलम् ॥ ५९ ॥
अक्षोभ्यसत्वगंभीरं वज्रसंघातविग्रहम् । सर्वसुन्दरसंदोहमिव कृत्वा विनिर्मितम् ॥ ६० ॥
महाप्रभावसंपन्नं न्यग्रोधपरिमंडलम् । प्रियांगनावियोगेन बालसिंहमिवाकुलम् ॥ ६१ ॥
शच्येव रहितं शक्रं रोहिण्येव विना विधुम् । रूपसौभाग्यसंपन्नं सर्वशास्त्रविशारदम् ॥ ६२ ॥
शौर्यमाहात्म्यसंयुक्तं मेधादिगुणसंयुतम् । एवंविधं समालोक्य मारुतिः क्षोभमागतः ॥ ६३ ॥

अचिंतयच्च संभ्रान्तस्तत्प्रभाववशीकृतः । तच्छरीरप्रभाजालसमालिंगितविग्रहः ॥ ६४ ॥
श्रीमानयमसौ राजा रामो दशरथात्मजः । यस्येह लक्ष्मणो भ्राता लोकश्रेष्ठः स्थितो वशे॥६५॥
यस्यालोक्य तदा संख्ये छत्रं शीतांशुसन्निभम् । सा साहसगतेर्माया वैताली परिनिःसृता ॥६६॥
दृष्ट्वा वज्रधरं सर्वं हृदयं यन्न कंपितम् । तदद्य मम दृष्ट्वैनं संक्षोभं परमं गतम् ॥ ६७ ॥
इति विस्मयमापन्नः समनुस्मृत्य तान् गुणान् । ससार पावनिः पद्मं श्रीमदंभोजलोचनम् ॥६८॥
दूरादुत्थाय दृष्ट्वैवं पद्मलक्ष्मीधरादिभिः । असौ प्रहृष्टचेतोभिः परिष्वक्तो यथाक्रमम् ॥ ६९ ॥
परस्परं समालोक्य संभाष्य विनयोचितम् । उपधानविचित्रेषु स्वासनेष्ववतस्थिते ॥ ७० ॥
तत्र भद्रासने रम्ये स्थितः काकुस्थनन्दनः । केयूरभूषितभुजो ज्वलंल्लक्ष्म्या समंततः ॥ ७१ ॥
स्वस्थनीलांबरधरश्चूडामणिरिवोज्ज्वलः । रराज वरहारेण सोडुचन्द्र इवोद्गतः ॥ ७२ ॥
दिव्यपीताम्बरधरो हारकेयूरकुण्डली । सुमित्रातनयो रेजे सतडिज्जलदो यथा ॥ ७३ ॥
वानराभोगमुकुटसुरवारणविक्रमः । अभात्सुग्रीवराजोऽपि लोकपाल इवार्जितः ॥ ७४ ॥
विराधितः कुमारोऽपि सौमित्रेः पृष्ठतः स्थितः । अलक्ष्यत नृसिंहस्य चक्ररत्नमिवौजसः ॥७५॥
हनूमानप्यलं रेजे पद्मनाभस्य धीमतः । समीपे पूर्णचन्द्रस्य स्फीतो बुध इवोदितः ॥ ७६ ॥

सुगंध्यमाल्यवस्त्राद्यैरलंकारैश्च भूषितौ । अंगांगदावभासन्तौ यमवैश्रवणाविव ॥ ७७ ॥
नलनीलप्रभृतयः शतशोऽन्ये च पार्थिवाः । आसीना रेजुरत्यन्तमावृत्य रघुनन्दनम् ॥ ७८ ॥
पंचसद्गन्धताम्बूलगंधसंगतमारुता । विभूषणकृतोद्योता सा सभेन्द्रसभोपमा ॥ ७९ ॥
विस्मित्य सुचिरं रामं प्रीतः पात्रनिरब्रवीत् । समक्षं न गुणा ग्राह्या भवतो रघुनन्दन ॥ ८० ॥
इहापि निखिले लोके दृश्यते स्थितिरीदृशी । किमपि प्रियवक्तॄणां प्रत्यक्षगुणकीर्तनम् ॥ ८१ ॥
आसीद्यस्याधिमाहात्म्यं श्रुतमस्माभिरूर्जितम् । दृष्टः सत्वहितः स त्वं सत्ववान् चक्षुषा स्वयम् ॥
सर्वसौन्दर्ययुक्तस्य गुणरत्नाकरस्य ते । शुभ्रेण यशसा राजन् जगदेतदलंकृतम् ॥ ८३ ॥
धनुर्लाभाद्द्वये लब्धे सहस्रामररक्षिते । सीतास्वयंवरेऽस्माभिः श्रुतस्तत्र पराक्रमः ॥ ८४ ॥
पिता दशरथो यस्य यस्य भामंडलः सुहृत् । भ्राता यस्य च सौमित्रिः स त्वं राम जगत्पतिः ॥
अहो शक्तिरहोरूपमेष नारायणः स्वयम् । समुद्रावर्तचापेशो यस्याज्ञाकरणे रतः ॥ ८६ ॥
अहो धैर्यमहो त्यागो यत्पितुः पालयन् वचः । महाप्रातिभयाकारं प्रविष्टो दण्डकं वनम् ॥ ८७ ॥
एतन्न कुरुते बन्धुस्तुष्टश्च त्रिदशाधिपः । अहो त्वया नाथ कृतं यदस्माकमतिप्रियम् ॥ ८८ ॥
सुग्रीवरूपसंपन्नं हत्वा संयति साहसम् । यत्कपिध्वजवंशस्य कलंको दूरमुज्झितः ॥ ८९ ॥

विद्याबलविधिज्ञैर्यद्यस्य मायामयं वपुः । अस्माभिरपि नो सह्यं दुर्जयं च विशेषतः ॥ ९० ॥
तेन सुग्रीवरूपेण गृहीतुं प्लावगं बलम् । दर्शनादेव युष्माकं तद्रूपं तस्य निसृतम् ॥ ९१ ॥
कर्तुं प्रत्युपकारं यो न शक्तोऽत्युपकारिणः । सुलभां भावशुद्धिं स तस्मै न कुरुते कुतः ॥ ९२ ॥
का तस्य बुद्धिर्न्यायेषु भवेदेकमपि क्षणम् । यः कृतस्योपकारस्य विशेषं नावबुध्यते ॥ ९३ ॥
स्वपाकादपि पापीयान् लुब्धकादपि निर्घृणः । असंभाष्यः सतां नित्यं योऽकृतज्ञो नराधमः ९४
स्वशरीरमपि त्यक्त्वा सत्यं वयमनन्यगाः । सर्वे समुद्युताः कर्तुमुपकारं तव प्रभो ॥ ९५ ॥
गत्वा प्रबोधयिष्यामि त्रिकूटाधिपतिं बुधम् । तव पत्नीं महाबाहो त्वरावानानयाम्यहम् ॥९६॥
सीताया वदनांभोजं प्रसन्नेन्दुमिवोदितम् । संदेहेन विनिर्मुक्तं शीघ्रं पश्यसि राघव ॥ ९७ ॥
मंत्री जाम्बूनदोऽवोचत्ततो वाक्यं परं हितम् । वत्स वत्स मरुत्पुत्र त्वमेकोऽस्माकमाश्रयः ॥९८॥
अप्रमत्तेन गंतव्यं लंकां रावणपालिताम् । न विरोधः क्वचित्कार्यः कदाचित्केनचित्सह ॥ ९९ ॥
एवमस्त्विति संभाष्य तं संप्रस्थितमुन्नतम् । विलोक्य परमां प्रीतिं पद्मनाभः समागमत् ॥१००॥
पुनः पुनः समाहूय मारुतिं चारुलक्षणम् । सर्वादरं जगादेदं स्फीतया राजीवलोचनः ॥ १०१ ॥
मद्वाक्याद‍ुच्यतां सीता त्वद्वियोगात् स राघवः । अधुना विंदते साध्वि न मनोनिर्वृतिं क्वचित्१०२

अत्यन्तं तदहं मन्ये हतं पौरुषमात्मनः । प्रतिरोधं प्रपन्नासि वर्तमानेऽपि यन्मयि ॥ १०३ ॥
वेद्मि निर्मलशीलाढ्या यथा त्वं मदनुवृता । जीवितुं वांछसि त्यक्तुं मद्वियोगेन दुःखिता ॥१०४॥
अलं तथापि सद्वक्त्रे दुःसमाधानमृत्युना । धार्यतां मैथिली प्राणा न जीवं त्यक्तुमर्हसि ॥१०५॥
दुर्लभः संगमो भूयः पूजितः सर्ववस्तुषु । ततोऽपि दुर्लभो धर्मो जिनेन्द्रवदनोद्गतः ॥ १०६ ॥
दुर्लभादप्यलं तस्मान्मरणं सुसमाहितम् । तस्मिन्नसति जन्मेदं तुषनिःसारमीक्षितम् ॥ १०७ ॥
इदं च प्रत्ययोत्पादि प्रियायै मम जीवतः । सततं संस्तुतं देयमंगुलीयकमुत्तमम् ॥ १०८ ॥
वायुपुत्र द्रुतं गत्वा सीतायास्तं महाप्रभम् । ममापि प्रत्ययकरं चूडामणिमिहानय ॥ १०९ ॥
यथाज्ञापयसीत्युक्त्वा रत्नवानरमौलिभृत् । कृतांजलिपुटो नत्वा सौमित्रिं च कृतांजलिः ॥११०॥
वहिर्विनिर्ययौ हृष्टः पूर्यमाणो विभूतिभिः । क्षोभयन्तेजसा सर्वं सुग्रीवभवनाजिरम् ॥ १११ ॥
संदिदेश च सुग्रीवं यावदागमनं मम । स्थातव्यं तावदत्रैव प्रमादपरिवर्जितैः ॥ ११२ ॥
विमानं चारुशिखरमारूढो मारुतिस्ततः । विभाति मस्तके मेरोश्चैत्यालय इवोज्ज्वलः ॥ ११३ ॥
प्रययौ परया द्युत्या सितछत्रोपशोभितः । विलसद्धंशसंकाशैश्चामरैरुपजीवितः ॥ ११४ ॥
वायुवेगसमैरश्वैर्जगामाद्रिसमैर्गजैः । सैन्यैस्त्रिदशसंकाशैर्जगाम परितो वृतः ॥ ११५ ॥

एवं युक्तो महाभूत्या रामादिभिरुदीक्षितः । समाक्रम्य रवेर्मार्गमयासीत्सुनिरंतरम् ॥ ११६ ॥

पूर्णं जगत्तिष्ठति जंतुवर्गैर्नानाविधैरुत्तमभोगयुक्तैः ।
कश्चित्तु तेषां परमार्थकृत्ये नियुज्यते यत्परमं यशस्तत् ॥ ११७ ॥
कृतं परेणाप्युपकारयोगं स्मरन्ति नित्यं कृतिनो मनुष्याः ।
तेषां न तुल्यो भुवने शशांको नवा कुबेरो न रविर्न शक्रः ॥ ११८ ॥

इत्यार्षे रविषेणाचार्यप्रोक्ते पद्मपुराणे हनूमत्प्रस्थानं नाम एकोनपंचाशत्तमं पर्व ।

---

# अथपंचाशत्तमं पर्व ।

अथासावांजनो गच्छन्नंबरे परमोदयः । स्वसारमिव वैदेहीमानिनीषुः रराज सः ॥ १ ॥
सुहृदाज्ञाप्रवृत्तस्य विनीतस्य महात्मनः । शुद्धभावस्य तस्यासीदुत्सवः कोऽपि चेतसः ॥ २ ॥
पश्यतः प्रौढया दृष्ट्या स्थितस्य रविगोचरे । दिशां मडलमस्यासीच्छरीरावयवोपमम् ॥ ३ ॥
लंका जिगमिषोरस्य महेन्द्रनगरोपमम् । महेन्द्रनगरं दृष्टेराभिमुख्यमुपागतम् ॥ ४ ॥

वेदिकापुंडरीकाभैः प्रासादैः शशिपांडुरैः । पर्वतस्य स्थितं मूर्ध्नि तद्विदूरे प्रकाशते ॥ ५ ॥
वज्रपाणेरिवामुख्यस्तस्मिन्वालिपुरोपमे । न बभूवतरां प्रीतिः तस्मादेवमचिंतयत् ॥ ६ ॥
इदं शिखरिणो मूर्ध्नि तन्महेन्द्रपुरं स्थितम् । महेन्द्रको नृपो यत्र दुर्मतिः सोऽत्रतिष्ठते ॥ ७ ॥
दुःखतापितसर्वांगा माता येनागता मम । निर्वासिता मयि प्राप्ते कुक्षिवासं दुरात्मना ॥ ८ ॥
एषाऽसौ विजनेऽरण्ये गुहा यत्र स सन्मुनिः । पर्यंकयोगयुक्तात्मा नाम्नामितगतिः स्थितः ९
अस्यां भगवता तेन साधुवाक्यैः कृपा कृता । माता मां जनिताश्वासा प्रसूता वंधुवर्जिता १०
श्रुतं केसरिजं कृच्छ्रं श्रुत्वा मातुरुपप्लम् । साधोश्च संगमं सैषा रम्या रम्या च मे गुहा ॥ ११ ॥
मातरं शरणं प्राप्तां मम निर्वास्य यः कृती । व्यसनप्रतिदानेन महेन्द्रं किन्तु तं भजेत् ॥ १२ ॥
अहंयुरयमत्यन्तं मां किल द्वेष्टि संततम् । महेन्द्रगर्वमेतस्य तस्मादपनयाम्यहम् ॥ १३ ॥
प्रलम्बांबुदवृन्दोरुनादा दुंदुभयस्ततः । महालंपाकभेर्यश्च पटहाश्च समाहताः ॥ १४ ॥
ध्माताः शंखा जगत्पंका भटैरुत्कटवेष्टितैः । युद्धशौंडैः समुत्कृष्टं समुल्लासितहेतिभिः ॥ १५ ॥
श्रुत्वा परबलं प्राप्तं महेन्द्रः सर्वसेनया । प्रत्यैक्षत विनिःक्रम्य मेघवृन्दमिवाचलः ॥ १६ ॥
संप्रहारैस्ततालग्नैर्दृष्ट्वासीदनिजं बलम् । चापमुद्यम्य माहेन्द्रिः प्राप्तश्छत्री रथस्थितः ॥ १७ ॥

हनूमानिषुभिस्तस्य धनुस्तिसृभिरायतम् । चिच्छेद गुप्तिभिर्योगी यथामानं समुत्थितम् ॥१८॥
चापं यावद्द्वितीयं स गृह्णात्याकुलमानसः । शरैस्तावद्रथान्मुक्ताः प्रचंडास्तस्य वाजिनः ॥१९॥
रथात्ते विगतः शीघ्राश्चपला बभ्रमुर्भृशम् । हृषीकाणीव मनसो मुक्ता निर्विषयैषिणः ॥ २० ॥
माहेन्द्रिरथ संभ्रान्तो विमानं वरमाश्रितः । तदप्यस्य शरैर्लुप्तं मतं दुष्टमतेरिव ॥ २१ ॥
माहेन्द्रिर्मुदितो भूयो विद्याबलविकरगः । पतत्रिचक्रकनकैर्युयुधेऽलातभासुरैः ॥ २२ ॥
विद्ययाऽनिलपुत्रोऽपि तं शस्त्रौघमवारयत् । यथात्मचिन्तया योगी परीषहकदंबकम् ॥ २३ ॥
निर्दयोन्मुक्तशस्त्रोऽसावास्तृणानो महाग्निवत् । गृहीतो वायुपुत्रेण गरुडेनेव पन्नगः ॥ २४ ॥
प्राप्तरोधं सुतं दृष्ट्वा महेन्द्रः क्रोधलोहितः । रथी मारुतिमभ्यार रामं सुग्रीवरूपवत् ॥ २५ ॥
अर्काभः स्यंदनः सोऽपि हारिहारो धनुर्धरः । शूराणामग्रणी दीप्तो मातुः पितरमभ्यगात् ॥२६॥
तयोरभून्महत्संख्यं क्रकचासिशिलीमुखैः । परस्परकृताघातं वायुवस्याब्दयोरिव ॥ २७ ॥
सिंहाविव महारोषौ तावुद्धतबलान्वितौ । ज्वलत्स्फुलिंगरक्ताक्षौ स्वसंतौ भुजगाविव ॥ २८ ॥
परस्परकृताक्षेपौ गर्वहासस्फुटस्वनौ । धिक्ते शौर्यमहोयुद्धमित्यादिवचनोद्यतौ ॥ २९ ॥
चक्रतुः परमं युद्धं मायाबलसमन्वितौ । हाकारजयकारादि कारयन्तौ मुहुर्निजैः ॥ ३० ॥

महेन्द्रोऽथ महावीर्यो विक्रियाशक्तिसंगतः । क्रोधस्फुरितदेहश्रीर्मुमोचायुधसंहतिम् ॥ ३१ ॥
भुषुंढीः परशून्वाणान् शतघ्नीर्मुद्गरां गदाः । शिखरिणि च शैलानां शालन्यग्रोधपादपाम् ॥३२॥
एतैरन्यैश्च विविधैरायुधौघैर्मरुत्सुतः । न विव्यथे यथा शैलो महामेघकदम्बकैः ॥ ३३ ॥
तद्दिव्यमायया सृष्टं शस्त्रवर्षं महेन्द्रजम् । उल्काविद्याप्रभावेन वायुसुनुरचूर्णयत् ॥ ३४ ॥
उत्पत्य च रथे तस्य निपत्य सुमहाजवः । ककुप्करिकराकारकराभ्यां कृतरोधनम् ॥ ३५ ॥
मातामहं समादाय बलं विभ्रदनुत्तमम् । दत्तसाधुःस्वनः शूरैः समारोहन्निजं रथम् ॥ ३६ ॥
उल्कालांगूलपाणिं तं दौहित्रं परमोदयम् । प्रशंसितुं समारब्धो महेन्द्रः सौम्यया गिरा ॥ ३७ ॥
अहो ते वत्स माहात्म्यं परमेतन्मया श्रुतम् । पूर्वमासीदिदानीं तु नियतं प्रत्यक्षगोचरम् ॥३८॥
आसीद्देवेन्द्रयुद्धेऽपि निर्जितो यो न केनचित् । विजयार्धनगस्योर्द्धमहाविद्यायुधाकुले ॥ ३९ ॥
असौ प्रसन्नकीर्तिर्मे पुत्रो माहात्म्यसंगतः । त्वया पराजितः प्राप्तो रोधुं चित्रमिदं परम् ॥४०॥
अहो पराक्रमो भद्र तव धैर्यमहो परम् । अहो रूपमनौपम्यमहो संग्रामशौंडता ॥ ४१ ॥
प्रजातेन त्वया वत्स महानिश्चययोगिना । कुलमुद्योतितं सर्वमस्मदीयं सुकर्म्मणा ॥ ४२ ॥
विनयाद्यैर्गुणैर्युक्तो राशिः परमतेजसः । कल्याणमूर्तिरत्यर्थं कल्पवृक्षस्त्वमुद्गतः ॥ ४३ ॥

जगतो गुरुभूतस्त्वं बांधवानां समाश्रयः । दुःखादित्यप्रतप्तानां समस्तानां घनाघनः ॥ ४४ ॥
इति प्रशस्य तं स्नेहाद्रुदस्राक्षश्चलत्करः । आजिघ्रन्मस्तके नम्रं पुलकी परिषस्वजे ॥ ४५ ॥
प्रणम्य वायुपुत्रोऽपि तमार्यं विहितांजलिः । अतितिक्षद्विनीतात्मा क्षणाघातोऽन्यतामिव ॥४६॥
मया शिशुतया किंचिदार्य दत्ते विचेष्टितम् । दोषमेवं समस्तं मे प्रतीक्ष्य क्षांतुमर्हसि ॥ ४७ ॥
समस्तं च समाख्यातं तेनागमनकारणम् । पद्मारामादिकं यावदात्मागमनमादृतम् ॥ ४८ ॥
अहमार्य गमिष्यामि त्रिकूटमतिकारणम् । त्वं किष्किन्धपुरं गच्छ कार्यं दाशरथेः कुरु ॥ ४९ ॥
इत्युक्त्वा वायुसंभूतः खमुत्पत्य ययौ सुखम् । त्रिकूटाभिमुखः क्षिप्रं सुरलोकमिवापरः ॥ ५० ॥
गत्वा माहेन्द्रकेतुश्च तनयां नयकोविदः । प्रसन्नकीर्तिना सार्द्धं वत्सलः समपूजयत् ॥ ५१ ॥
मातापितृसमायोगं सोदरस्य च दर्शनम् । अंजनासुन्दरी प्राप्य जगाम परमां धृतिम् ॥ ५२ ॥
महेन्द्रनिभृतं श्रुत्वा किष्किन्धाभिमुखोऽगमम् । विराधितप्रभृतयस्तोषमाययुरुत्तमम् ॥ ५३ ॥

पुरा विशिष्टं चरितं कृतात्मनां सुचेतसामुत्तमचारुतेजसाम् ।
महात्मनामुन्नतगर्वशालिनो भवन्ति वश्याः पुरुषा बलान्विताः ॥ ५४ ॥

ततः समन्तादनुपाल्य मानसं जना यतध्वं सततं सुकर्मणि ।
फलं यदीयं समवाप्य पुष्कलं रवेःसमानामुपयाथ दीप्तताम् ॥ ५५ ॥

इत्यार्षे रविषेणाचार्यप्रोक्ते पद्मपुराणे महेन्द्रदुहितासमागमाभिधानं नाम पंचाशत्तमं पर्व ।

---

# अथैकपंचाशत्तमं पर्व ।

श्रीशैलस्य वियत्युच्चैर्विमानस्थस्य गच्छतः । बभूव सुगुणैर्युक्तो द्वीपो दधिमुखोऽन्तरे ॥ १ ॥
यस्मिन् दधिमुखं नाम प्रासादैर्दधिपांडुरैः । पुरं परममायाति चारुकांचनतोरणम् ॥ २ ॥
नवमेघप्रतीकाशैरुद्यानैः कुसुमोज्वलैः । प्रदेशा यस्य शोभन्ते सनक्षत्राम्बरोपमाः ॥ ३ ॥
स्फटिकस्वच्छसलिला वाप्यः सोपानशोभिताः । पद्मोत्पलादिभिश्छन्ना यत्र भान्ति क्वचित् क्वचित् ॥
तस्मिन् विप्रकृष्टेन देशे नगरगोचरात् । बृहत्तृणलतावल्लीद्रुमकंटकसंकटे ॥ ५ ॥
शुष्कागकृतसंरोधे रौद्रश्वापदनादिते । घोरे पतिरुषाकारे प्रचंडानिलचंचले ॥ ६ ॥
पतितोदारवृक्षौघे महाभयसमावहे । विशुद्धक्षारसरासि कंकगृद्धादिसेविते ॥ ७ ॥

दुर्जने विजने राजत्साधुयुग्मं नभश्चरम् । अष्टाहं लंबितभुजं योगमुग्रमुपाश्रितम् ॥ ८ ॥
तस्य क्रोशचतुर्भागमात्रदेशे व्यवस्थिताः । मनोज्ञनयनाः कन्याः सितवस्त्रा जटाधराः ॥ ९ ॥
तप्यन्ते विधिवद्घोरं तपस्तिस्रः सुचेतसः । शोभालोकत्रयस्येव नवभूषणतां गताः ॥ १० ॥
अथासौ साधुयुगलं ग्रस्यमानं महाग्निना । अंजनातनयोऽपश्यत्पादपद्मयनिश्चलम् ॥ ११ ॥
असमाप्तव्रताः ताश्च कन्याः लावण्यपूरिताः । उद्गमद्धूमजालेन स्पृष्टा वहलवर्तिना ॥ १२ ॥
अथातस्थौ सुनिर्ग्रन्थौ युक्तयोगौ शिवस्पृहौ । त्यक्तारागादिसंगेच्छौ निरस्तांशुकभूषणौ ॥१३॥
प्रलंबितमहाबाहू प्रशान्तवदनाकृती । युगान्तापितसद्दृष्टी प्रतिमास्थानमाश्रितौ ॥ १४ ॥
मृत्युजीवननिःकांक्षावनघौ शान्तमानसौ । समप्रियाप्रियासंगौ समपाषाणकांचनौ ॥ १५ ॥
दानेन महता राजन् तेनात्यासन्नवर्तिना । अभिभूतौ समालोक्य वात्सल्यं कर्तुमुद्यतः ॥ १६ ॥
आकृष्य सागरजलं मेघहस्तः ससंभ्रमः । अवर्षदुन्नतो व्योम्नि परमं भक्तिसंगतः ॥ १७ ॥
सुभृशं तेन वह्निः सं—वारिपूरेण नाशितः । महाक्रोध इवोद्भूतः क्षांतिभावेन साधुना ॥ १८ ॥
यावच्च कुरुते पूजां भक्त्या पवननंदनः । तयोर्भदंतयोर्नानापुष्पादिद्रव्यसंपदा ॥ १९ ॥
तावत्ताः सिद्धसंसाध्या मेरुं कृत्वा प्रदक्षिणम् । तत्सकाशमनुप्राप्ताः कुमार्यः सुमनोहराः ॥२०॥

प्रणेमुश्च समंतेन साधुध्यानपरायणौ । विनयान्वितया बुद्ध्या प्रशशंसुश्च मारुतिम् ॥ २१ ॥
अहो जिनेश्वरे भक्तिर्व्रजता क्वापि यद्द्भुतम् । त्वया तात परित्राता वयं साधुसमाश्रयात् ॥२२॥
अस्मद्द्वारसमायातो महानयमुपप्लवः । स्तोकेनास्मो न योगिभ्यामहो नो भवितव्यता ॥ २३ ॥
अथांजनात्मजोऽपृच्छदेवं संशुद्धमानसः । भवन्त्य इह निःशून्ये काननेऽत्यन्तभीषणे ॥ २४ ॥
अवोचज्ज्यायसी तासां पुरे दधिमुखाह्वये । अत्र गंधर्वराजस्य वयं तिस्रोऽमरासुताः ॥ २५ ॥
प्रथमा चन्द्रलेखाख्या ज्ञेया विद्युत्प्रभा ततः । अन्या तरंगमालेति सर्वगोत्रस्य वल्लभाः ॥ २६ ॥
यावन्तो भुवने केचिद्विजयार्द्धादिसंभवाः । विद्याधरकुमारेन्द्राः कुलपुष्करभास्कराः ॥ २७ ॥
तेऽस्मदर्थे शिवं क्वापि न विंदन्तेऽर्थिनो भृशम् । दुष्टस्त्वंगारको नाम तापं धत्ते विशेषतः ॥२८॥
अन्यदापरिपृष्टश्च तातेनाष्टांगविन्मुनिः । स्थानेषु भगवन्केषु भर्ता दुहितरो मम ॥ २९ ॥
सोऽवोचत्साहसगतिं यो हनिष्यति संयुगे । आशां कतिपयाहोभी रमणोऽसौ भविष्यति ॥ ३० ॥
निशम्यामोघवाक्यस्य मुनेस्तद्वचनं ततः । अचिन्तयत्पिताऽस्माकं विधाय स्मैरमाननम् ॥३१॥
कस्त्वसौ भविता लोके नरो वज्रायुधोपमः । विजयार्धोत्तरश्रेणीश्रेष्ठं यो हन्ति साहसम् ॥ ३२ ॥
अथवा न मुनेर्वाक्यं कदाचिज्जायतेऽनृतम् । इति विस्मयमाविष्टः पिता माता जनस्तथा ॥३३॥

चिरं प्रार्थयमानोऽपि यदासौ लब्धवान्न सः । तदास्मद्दुःखचिन्तास्थः संजातोंगारकेतुकः ॥३४॥
ततः प्रभृति चास्माकमयमेव मनोरथः । द्रक्षामस्तं कदा वीरमिति साहससूदनम् ॥ ३५ ॥
एतच्च वनमायाता दारुणद्रुमसंकटम् । मनोऽनुगामिनीं नाम विद्यां साधयितुं परम् ॥ ३६ ॥
दिवसो द्वादशोऽस्माकं वसन्तीनामिहान्तरे । प्राप्तस्य साधुयुग्मस्य वर्तते दिवसोऽष्टमः ॥ ३७ ॥
अंगारकेतुना तेन वीक्षिताश्च दुरात्मना । ततस्तेनानुबन्धेन क्रोधेन पूरितोऽभवत् ॥ ३८ ॥
ततोऽस्माकं वधं कर्तुमेता दश दिशः क्षणात् । धूमांगारकवर्षेण वह्निना पिंजरीकृताः ॥ ३९ ॥
षड्भिः संवत्सरैः साग्रैर्यद्दुसाध्यं प्रसाध्यते । दत्वांगमुपसर्गस्य तदद्यैव हि साधितम् ॥ ४० ॥
इहापदि महाभाग नाभविष्यद्भवान् यदि । अधिक्ष्याम हि योगिभ्यां सहारण्ये ततो ध्रुवम् ४१
साधु साध्विति संस्मित्य ततो मारुतिरब्रवीत् । भवतीनां श्रमः श्लाघ्यः फलयुक्तश्च निश्चयः ४२
अहो वो विमला बुद्धिरहो स्थाने मनोरथः । अहो भाग्यत्वमुत्तुंगं येन विद्या प्रसाधिता ॥ ४३ ॥
आख्यातं च क्रमात्सर्वं यथावृत्तं सविस्तरम् । पद्मागमादिकं यावदात्मागमनकारणम् ॥ ४४ ॥
तत्तश्च श्रुतवृत्तान्तो गंधर्वोऽमरया सह । समागतो महातेजास्तमुद्देशं सहानुगः ॥ ४५ ॥
नभश्वरसमायोगे देवागमनसन्निभे । क्षणेन तद्वनं जातं सर्वं नन्दनसुन्दरम् ॥ ४६ ॥

किष्किन्धं च पुरं गत्वा भूत्या दुहितृभिः समम् । शासने पद्मनाभस्य गंधर्वो रतिमाश्रयत् ॥४७॥
ताश्च निस्सीमसौभाग्या विभूत्या परयान्विताः । उपनिन्ये पराः कन्या रामायाक्लिष्टकर्मणे ॥४८॥
एताभिरपराभिश्च सेव्यमानो विभूतिभिः । अपश्यन् जानकीं पद्मो मेने शून्या दिशो दश ॥४९॥

गुणान्वितैर्भवति जनैरलंकृता समस्तभूः शुभललितैः सुसुन्दरैः ।
विना जनैर्मनसि कृतास्पदं सदा व्रजत्यसौ गहनवनेन तुल्यताम् ॥ ५० ॥
पुराकृतादतिनिचितात्समुत्कटाज्जनः परां रतिमनुयाति कर्मणः ।
ततो जगत्सकलमिदं स्वगोचरे प्रवर्तते विधिरविणा प्रकाशते ॥ ५१ ॥

इत्यार्षे रविषेणाचार्यप्रोक्ते पद्मपुराणे पद्मस्य गंधर्वकन्यालाभाभिधानं नाम एकपंचाशत्तमं पर्व ।

---

# अथ द्विपंचाशत्तमं पर्व ।

असौ पवनपुत्रोऽपि प्रतापाढ्यो महाबलः । त्रिकूटाभिमुखोऽयासीत्सोमवन्मन्दरं प्रति ॥ १ ॥
अथास्य व्रजतो व्योमि सुमहाकार्मुकाकृतिम् । चक्रे मेघप्रतीकाशं जातं सैन्यं तिरोभवत् ॥२॥

उवाच खगतिः केन मम सैन्यस्य विघ्नता । अहो विज्ञायतां क्षिप्रं कस्येदमनुचेष्टितम् ॥ ३ ॥
किं स्यादसुरनाथोऽयं चमरो गर्वपर्वतः । आखण्डलः शिखंडी वा नैषामेकोऽपि युज्यते ॥ ४ ॥
प्रतिमा किन्तु जैनेन्द्री शिखरेऽस्य महीभृतः । भवेद्वा भगवान् कश्चिन्मुनीश्वरमविग्रहः ॥ ५ ॥
तस्य तद्वचनं श्रुत्वा वितर्ककृतवर्त्तनम् । मंत्री पृथुमतिर्नाम वाक्यमेतदुदाहरत् ॥ ६ ॥
निवर्त्तस्व महाबुद्धे श्रीशैल ननु किं तत्र । क्रूरयंत्रयुतेनायं मायाशालो मतिं गतः ॥ ७ ॥
चक्षुस्ततो नियुज्यासावपश्यत्पद्मलोचनः । दुःप्रवेशं महाशालं विरक्तस्त्रीमनःसमम् ॥ ८ ॥
अनेकाकारवक्त्राढ्यं भीममाशालिकात्मकम् । त्रिदशैरपि दुर्ढौकयं सर्वभक्ष्यं प्रभासुरम् ॥ ९ ॥
संकटोत्कटतीक्ष्णाग्रं क्रकचावलिवेष्टितम् । रुधिरोद्गारजिह्वाग्रं सहस्रविलसत्तटम् ॥ १० ॥
स्फुरद्भुजंगविस्फारि फणात्फूत्कारशब्दितम् । विषधूमान्धकारान्तज्वलदंगारदुःसहम् ॥ ११ ॥
यस्तं सर्पति मूढात्मा शौर्यमानसमुद्धतः । निःक्रामति न भूयोऽसौ मंडूकोहिमुखादिव ॥ १२ ॥
लंकाशालपरिक्षेपं सूर्यमार्गसमुन्नतम् । दुर्लंध्यं दुर्निरीक्ष्यं च सर्वादिक्षु सुयोजितम् ॥ १३ ॥
युगान्तकालमेघौघनिर्घोषसमभीषणम् । हिंसाग्रंथमिवात्यन्तपापकर्मविनिर्मितम् ॥ १४ ॥
तं दृष्ट्वा मारुतिर्दध्यावहो नाथेन रक्षसाम् । दाक्षिण्यमूर्जितं पूर्वं मायाप्राकारकारिणां ॥ १५ ॥

उन्मूलयन्निदं यत्रं विद्यावलसमूर्जितम् । मानमुन्मूलयाम्यस्य ध्यानी मोहबलं यथा ॥ १६ ॥
युद्धे च मानसं कृत्वा तत्सैन्यं सुमहास्वनम् । गगने सागराकारं समयेऽतिष्ठपत्सुधीः ॥ १७ ॥
विद्याकवचयुक्तं च कृत्वा मानं गदाकरः । विवेश सालिकावक्त्रं राहुवक्त्रं रविर्यथा ॥ १८ ॥
ततः कुक्षिगुहां तस्याः परीतकैकसावृताम् । विद्यानखैरलं तीक्ष्णैः केसरीव व्यपाटयत् ॥ १९ ॥
निर्दयैश्च गदाघातैर्घोरघोषैरचूर्णयत् । घातिकर्मस्थितिं यद्वद्ध्यानी भावैः सुनिर्मलैः ॥ २० ॥
अथाशालिकविद्याया यात्या भेदं भयावहः । समो नीलाम्बुवाहानामभूच्चटचटाध्वनिः ॥ २१ ॥
तेन संभाव्यमानोऽसौ शालो नष्टोऽतिचंचलः । स्तोत्रेणेव जिनेन्द्राणां कलुषः कर्मसंचयः ॥२२॥
ततस्तन्निनदं श्रुत्वा युगान्तजलदोन्नतम् । दृष्ट्वा विशीर्यमाणं च यंत्रप्राकारमंडलम् ॥ २३ ॥
राजा वज्रमुखः क्रुद्धः शालरक्षाधिकारवान् । त्वरितं रथमारुह्य सिंहो दात्रमिवाभ्यगात् ॥ २४ ॥
ततोऽभिमुखमेतस्य वीक्ष्य मारुतनन्दनम् । नानायाना युधायोद्धाः प्रचण्डा योद्धुमुद्यताः ॥२५॥
बलं वज्रमुखं दृष्ट्वा प्रबलं योद्धुमुद्यतम् । परमं क्षोभमायातं हनूमत्सैन्यमुत्थितम् ॥ २६ ॥
किमत्र बहुनोक्तेन प्रवृत्तं तत्तथा रणम् । यथा स्वामिकृते पूर्वं सस्माननविमानने ॥ २७ ॥
स्वामिनो दृष्टिमार्गस्थाः सुभटाः कृतगर्जिताः । जीवितेष्वपि निःस्नेहा बभूवुः किमिहोच्यताम् ॥

ततः कपिध्वजैर्योद्धाश्चिरंकृतमहाहवाः । वज्रायुधस्य निर्भग्नाः क्षणान्नेशुरितस्ततः ॥ २९ ॥
चक्रेणानिलसूनुश्च तेजोऽहरत् विद्विषाम् । ऋक्षविम्बमिवाकाशादपातयदरेः शिरः ॥ ३० ॥
संख्ये पितुर्वधं दृष्ट्वा तं लंकासुन्दरी तदा । नियम्य कृच्छ्रतः शोकममर्षविषदूषिता ॥ ३१ ॥
जवनाश्वरथारूढा कुंडलोद्योतिताननाः । शरासनायतोरस्का कुंचिता भ्रूलतायुगा ॥ ३२ ॥
उल्केव संगतादित्यतेजोमंडलधारिणी । धूमोद्गारसमायुक्ता घनप्राग्भारवर्त्तिनी ॥ ३३ ॥
संरंभवशसंफुल्ललोहितांभोजलोचना । क्रूरसंदष्टविंबोष्टी क्रुद्धेव श्रीः शचीपतेः ॥ ३४ ॥
अधावदिषुमुहृत्य कच्छमाना मनोहरा । मया श्रीशैल दृष्टोऽसि तिष्ठ ते शक्तिरस्ति चेत् ॥३५॥
अद्य ते रावणः क्रुद्धो नभश्चरमहेश्वरः । करिष्यति यदेतत्ते करोमि हतचेष्टतः ॥ ३६ ॥
इमं यमालयं पापं भवन्तं प्रेषयाम्यहम् । दिग्मूढ इव जातस्त्वमनिष्टस्थानगोचरः ॥ ३७ ॥
तस्यास्त्वरितमायान्त्या यावच्छत्रमपातयत् । वाणेन तावदेतस्य तया चापं द्विधाकृतम् ॥३८॥
सा यावद्गृहीच्छक्तिं तावन्मारुतिना शिरैः । नभश्छन्नं समायान्ती भिन्ना शक्तिश्च सान्तरे ३९
सा विद्यावलगंभीरा वज्रदंडसमान् शरान् । परशुकुंतचक्राणि शतघ्नीमुशलान् शिलान् ॥ ४० ॥
बवर्ष वायुपुत्रस्य रथे हि भवदुन्नते । विकाले वारिणो भेदान्मेघसंध्या यथोन्नता ॥ ४१ ॥

तया नानायुधाटोपैः सर्ववेगसमीरितैः । आच्छाद्यत महातेजाः शुचिसूर्य इवांबुदैः ॥ ४२ ॥
विक्रान्तः स च शस्त्रौघमानिर्वाणोन्तरास्थिरम् । व्यपोहत निजैः शस्त्रैः मायाविधिविशारदः ॥४३॥
शराः शरैरलुप्यन्त तोमराद्याः स्वजातिभिः । शक्तयः शक्तिभिर्नुन्ना समोल्का दूरमुद्ययुः ॥४४॥
चक्रककचसंवर्तकनकाटोपपिंजरम् । बभूव भीषणं व्योम विद्युद्भिरिव संकुलम् ॥ ४५ ॥
तं लंकासुन्दरी भूयः रूपेणालब्धसन्निभा । धीरा स्वभावतो राजलक्ष्मीः कमललोचना ॥ ४६ ॥
ज्ञानध्यानहरैः कान्तैर्दुर्द्धरैर्गुणसन्नतैः । लावण्याहतसौंदर्यैर्मनोन्तर्भेदकोविदैः ॥ ४७ ॥
नेत्रचापविनिर्मुक्तैर्विव्यधे स्मरसायकैः । तथेतरधनुर्मुक्तैः शरैराकर्णसंहतैः ॥ ४८ ॥
विस्मये जगतः शक्ता सौभाग्या गुणगर्विता । तस्यालसक्रियस्येवं प्रविष्टा हृदयोदरम् ॥ ४९ ॥
शरशक्तिशतघ्नीभिर्न तथा समपीड्यत । यथा मदनबाणौघैर्मर्मदारुणकारिभिः ॥ ५० ॥
इयं मनोहराकारा ललितैर्विशिखैरपि । स बाह्याभ्यंतरं हन्ति मामित्येवमचिन्तयत् ॥ ५१ ॥
वरमस्मिन्मृधे मृत्युः पूर्यमाणस्य सायकैः । अनया विप्रयुक्तस्य जीवितं न सुरालये ॥ ५२ ॥
चिन्तयत्येवमेतस्मिन् साप्यनंगेन चोदिता । त्रिकूटसुन्दरी कन्या करुणाशक्तमानसा ॥ ५३ ॥
विकस्वरमनोदेहं पद्मच्छदलोचनम् । अबालेन्दुमुखं बालं किरीटन्यस्तवानरम् ॥ ५४ ॥

मूर्तियुक्तमिवानंगं सुन्दरं वायुनन्दनम् । हन्तुं समुद्यतां शक्तिं संजहार त्वरावता ॥ ५५ ॥
दध्यौ च मारयाम्येतं कथं दोषमपि श्रितम् । रूपेणानुपमानेन छिंत्ते मर्माणि यो मम ॥ ५६ ॥
यद्यनेन समं सक्ता कामभोगोदयद्युतिम् । न निषेवे च लोकेऽस्मिन् ततो मे जन्म निष्फलम् ५७
अतः सत्पथमुद्दिश्य स्वनामांकं हनूमते । प्रजिघाय शरं मुग्धा विह्वलेनान्तरात्मना ॥ ५८ ॥
पराजिता त्वया नाथ साहं मन्मथशायकैः । सुरैरपि न या शक्या जेतुं संघातिवर्तिभिः ॥५९॥
प्रोवाच मारुतिर्बाणमंकं स्वैरमुपागतम् । धृतिं परां परिप्राप्तो रथादरमवातरत् ॥ ६० ॥
उपसृत्य च तां कन्यां मृगेन्द्रसमविक्रमः । कृत्वांके गाढमालिंगत् कामो रतिमिवापराम् ॥ ६१ ॥
अथ प्रशान्तवैराशा वस्तुदुर्दिनलोचना । तातप्रयाणशोकार्ता जगदे वायुसूनुना ॥ ६२ ॥
मा रोदीः सौम्यवक्त्रे त्वमलं शोकेन भामिनि । विहिता गतिरेषैव क्षात्रधर्मे सनातने ॥ ६३ ॥
ननु ते ज्ञातमेवैतद्यथा राज्यविधौ स्थिताः । पित्रादीनपि निघ्नन्ति नराः कर्मबलेरिताः ॥६४॥
वृथा रोदिषि किंत्वेतद्ध्यानमार्तं विवर्जय । अस्मिन् हि सकले लोके विहितं भुज्यते प्रिये॥६५॥
निहितोऽयमनेनेति द्विडत्र व्याजमात्रकम् । आयुःकर्मानुभावेन प्राप्तकालो विपद्यते ॥ ६६ ॥
वचोभिरेभिरन्यैश्च मुक्तशोका व्यराजत । सहिता वातिना यद्वदिन्दुना निर्घना निशा ॥ ६७ ॥

प्रेमनिर्झरपूर्णेन तयोरालिंगनेन सः । संग्रामजः श्रमो दूरमथायातः सुचेतसोः ॥ ६८ ॥
ततो यत्र नभोदेशे स्तंभिन्या विद्यया खगाः । स्तंभिता बलमत्रैव रचिता वासमाश्रितम् ॥६९॥
संध्यारक्ताभ्रसंकाशं गीर्वाणनगरोपमम् । श्रीशैलस्य तदत्यन्तं शिबिरं पर्यराजत ॥ ७० ॥
गजवाजिविमानस्था रथस्थाश्च महानृपाः । तत्पुरं ध्वजमालाढ्यं विविशुः पृष्टवातयः ॥ ७१ ॥
स्थितास्तत्र यथान्यायं लब्धोत्साहसमुत्सवाः । कथाभिरतिचित्राभिः सूरसंग्रामजन्मभिः ॥७२॥
अथ तं त्वरितात्मानं वार्तिं गन्तुं समुद्यतम् । बाला विश्रब्धमप्राक्षीदिति प्रेमपरायणा ॥ ७३ ॥
विविधागोभिरापूर्णः श्रुतदुसहविक्रमः । कान्त लंकां किमर्थं त्वं वद गन्तुं समुद्यतः ॥ ७४ ॥
तस्यै जगाद वृत्तान्तमशेषं वायुनन्दनः । कृत्यं प्रत्युपकारस्य वान्धवैरनुमोदितम् ॥ ७५ ॥
सीतया सह रामस्य भद्रे भद्रसमागमः । हृतया राक्षसेन्द्रेण कर्तव्यः सर्वथा मया ॥ ७६ ॥
साऽब्रवीत्समतिक्रान्तं सौदार्हं तं पुरातनम् । श्रद्धा स्नेहक्षये नष्टा प्रदीपस्य यथा शिखा ॥७७॥
आसीद्रम्योपशोभाढ्यां ध्वजमालाकुलीकृताम् । प्राविक्षदाहतो लंकां भवान्दिवमिवामरः ॥७८॥
अधुना त्वयि दोषाढ्ये रावणश्चंडशासनः । प्रकाशं व्रजति क्रोधं गृहीष्यति न संशयः ॥ ७९ ॥
यदोपलभ्यते चार्वी विशुद्धिः कालदेशयोः । विशुद्धात्मानमव्यग्रं तदा तं द्रष्टुमर्हसि ॥ ८० ॥

एवमेवेति सोऽवोचद्यद्ब्रवीषि विचक्षणे । आकूतं तस्य विज्ञातुं गत्वा वाञ्छामि सुन्दरि ॥ ८१ ॥
कीदृशी वा सती सीता रूपेण प्रथिता भवेत् । चालितं मेरुवद्धीरं रावणस्य मनो यथा ॥ ८२ ॥
एवमुक्तो मरुत्पुत्रस्तद्विन्यस्तमहाबलः । तया मुक्तो विवेकन्या त्रिकूटाभिमुखं ययौ ॥ ८३ ॥

चित्रमिदं परमत्र नृलोके, यत्परिहाय भृशं रसमेकम् ।
तत्क्षणमेव विशुद्धशरीरं जन्तुरुपैति रसान्तरसंगम् ॥ ८४ ॥
कर्मविचेष्टितमेतदमुस्मिन् किंत्वथवाद्भुतमस्ति निसर्गे ।
सर्वमिदं स्वशरीरनिबद्धं दक्षिणमुत्तरतश्चरती हो ॥ ८५ ॥

इत्यार्षे रविषेणाचार्यप्रोक्ते पद्मपुराणे हनूमल्लंकासुन्दरीकन्यालाभाभिधानं नाम द्विपंचाशत्तमं पर्व ।

---

# अथ त्रिपंचाशत्तमं पर्व ।

मगन्धेन्द्र ततो वातिः प्रभावोदयसंगतः । लंकां विवेश निःशंकः स्वल्पानुगसमन्वितः ॥ १ ॥
द्वारे च रचिताभ्यर्चे विभीषणनिकेतनम् । विवेश योग्यमेतेन सम्मानं च समाहृतः ॥ २ ॥

ततः स्थित्वा क्षणं किंचित्संसृष्टाभिः परस्परम् । वार्ताभिरिति सद्वाक्यं व्याजहार मरुत्सुतः ३
उचितं किमिदं कर्तुं यद्वास्यार्द्धपतिः स्वयम् । कुरुते क्षुद्रवत्कश्चिच्चोरणं परयोषितः ॥ ४ ॥
मर्यादानां नृपो मूलमापगानां यथा नगः । अनाचारे स्थिते तस्मिन् लोकस्तत्र प्रवर्तते ॥ ५ ॥
ईदृशे चरिते कृत्ये सर्वलोकविनिन्दिते । सहनीयं समस्तानां दुःखमेष्यति नो ध्रुवम् ॥ ६ ॥
तत्क्षेमंकरमस्माकं हिताय जगतां तथा । उच्यतां रावणः शीघ्रं वचो न्यायानुपालकम् ॥ ७ ॥
यथा किल द्वये लोके निन्दनीयं विचेष्टितम् । मा कार्षीः जगतो नाथ कीर्तिविध्वंसकारणम् ८
विमलं चरितं लोके न केवलमिहेष्यते । किन्तु गीर्वाणलोकेऽपि रचिताञ्जलिभिः सुरैः ॥ ९ ॥
कैकसीनन्दनोऽवोचद्बहुशोऽभिहितो मया । ततः प्रभृति नैवासौ मया संभाषते समम् ॥ १० ॥
तथापि भवतो वाक्यान् श्वः समेत्य नरेश्वरम् । वक्तास्मि किन्तु दुःखेन त्यज्यते न ह्यसौ ग्रहम् ११
अहोऽद्यैकादशं जातं सीताया वल्लभोज्झने । तथापि विरतिः काचिल्लंकेन्द्रस्य न जायते ॥१२॥
तच्छ्रुत्वा वचनं सद्यः महाकारुण्यसंगतः । प्रमदाह्वयमुद्यानं मारुतिर्गन्तुमुद्यतः ॥ १३ ॥
अपश्यच्च लताजालैस्तत्र वैराकुलीकृतम् । अरुणैः पल्लवैः व्याप्तं वरस्त्रीकरचारुभिः ॥ १४ ॥
भ्रमरप्रावृत्तैर्गुच्छैः सुजातैर्वद्धशेखरम् । फलैरानतशाखाग्रं किंचित्पवनकंपितम् ॥ १५ ॥

पद्मादिच्छादितैः स्वच्छैः सरोभिः सदलंकृतम् । भासुरं कल्पवल्लीभिः संगताभिर्महातरुम् ॥१६॥
गीर्वाणकुरुदेशाभं प्रसूनरजसा वृतं । नन्दनस्य दधत्साम्यमनेकाद्भुतसंकुलम् ॥ १७ ॥
ततो लीलां वहन् रम्यां वायू राजीवलोचनः । विवेश परमोद्यानं सीतादर्शनकांक्षया ॥ १८ ॥
प्रजिघाय च सर्वासु दिक्षु चक्षुरतित्वरम् । विविधद्रुमदेशेषु गहनेषु दलादिभिः ॥ १९ ॥
दृष्ट्वा च दूरतः सीतामन्यदर्शनवर्जितः । अचिन्तयदसौ सैषा रामदेवस्य सुन्दरी ॥ २० ॥
स्निग्धज्वलनसंकाशा वाष्पपूरितलोचना । करविन्यस्तवक्त्रेन्दुर्मुक्तकेशी कृशोदरी ॥ २१ ॥
अहो रूपमिदं लोके जिताशेषमनोहरम् । परमां ख्यातिमायातं सत्यवस्तुनिबन्धनम् ॥ २२ ॥
रहिता शतपत्रेण नास्या लक्ष्मीः समा भवेत् । दुःखार्णवं गताप्येषा सदृशी नान्ययोषिता॥२३॥
निपत्य शिखरादद्रेरस्य मृत्युमुपैम्यहम् । विरहे पद्मनाभस्य धारयामि न जीवितम् ॥ २४ ॥
कृतप्रचिंतनामेवं वैदेहीं पवनात्मजः । निःशब्दपातसंपातः प्राप्तो रूपान्तरं दधत् ॥ २५ ॥
ततोऽगुलीयकं तस्या विससर्जांकवासासि । सहसा सा तमालोक्य स्मेराऽभूत्पुलकाचिता ॥ २६ ॥
तस्यामेवावस्थायां गत्वा नार्यस्त्वरान्विताः । तोषादवर्धयन् दिष्ट्या रावणं तत्परायणम्॥२७॥
संतुष्टोऽगतं ताभ्यो वस्त्ररत्नादिकं ददौ । श्रुत्वा स्मेराननां सीतां सिद्धं कार्यं विचिन्तयत्॥२८॥

विधातुं महिमानं च किंचिदादिशदुत्सुकः । सुधापूरमिव प्राप्तः समुल्लासधरे हृदि ॥ २९ ॥
स्वनाथवचनात्साध्वी सर्वान्तःपुरसंयुता । गता मन्दोदरी शीघ्रं यत्रासौ जनकात्मजा ॥ ३० ॥
विकचास्यद्युतिं सीतां दृष्ट्वा मन्दोदरी चिरात् । जगौ बाले त्वयाऽस्माकं परमोऽनुगृहःकृतः ३१
अधुना भज लोकेशं रावणं शोकवर्जिता । सुराणां श्रीरिवाधीशं लब्धनिःशेषसंपदम् ॥ ३२ ॥
इत्युक्ता कुपितावोचद्यदीदं भवतीरतम् । पद्मः खेचरि जानाति म्रियते ते पतिर्ध्रुवम् ॥ ३३ ॥
वार्ता समागता भर्तुरिति तोषमुपागता । अकार्षं वदनं स्मेरं भजन्ती परमां धृतिम् ॥ ३४ ॥
इति ता वचनं श्रुत्वा राक्षसेशस्य योषितः । ऊचुः क्षुद्रववातेन लपत्येषेति सस्मिता ॥ ३५ ॥
ततः श्रेणिक वैदेही नितान्तं तुंगया गिरा । परमं विस्मयं प्राप्ता जगादैवं समुत्सुका ॥ ३६ ॥
गताया व्यसनं घोरमब्धिद्वीपे महाभये । कोऽयं सन्निहितः साधुर्बन्धुभूतोऽतिवत्सलः ॥ ३७ ॥
ततो नभस्वनः सूनुरेवमर्थितदर्शनः । अभिप्रायमिमं चक्रे साधुतायुक्तमानसः ॥ ३८ ॥
परार्थं यः पुरस्कृत्य पुनः स्वं विनिगूहति । सोऽतिभीरुतयात्यन्तं जायते निकृतो नरः ॥ ३९ ॥
परमापदि सीदन्तं जनं साधारयन्ति ये । अनुकंपनशीलानां तेषां जन्म सुनिर्म्मलम् ॥ ४० ॥
हानिः पुरुषकारस्य न चात्मनि निदर्शिते । प्रकाश्ये गुरुतां याति जगति श्री यशस्विनी ॥४१॥

उत्तमस्त्रीसहस्राणां ततो मध्यगतामिमाम् । प्रभामंडलकल्पोऽसौ पद्मपत्नीमुपागमत् ॥ ४२ ॥
निःशंकद्विपविक्रान्तः संपूर्णेन्दुसमाननः । सहस्रांशुसमो दीप्त्या माल्याम्बरविभूषितः ॥ ४३ ॥
रूपेणाप्रतिमो युक्तः कांत्या निर्मृगचन्द्रमाः । किरीटे वानरं बिभ्रदामोदाहृतषट्पदः ॥ ४४ ॥
चंदनार्चितसर्वांगः पीतचर्चाविराजितः । तांबूलारक्तबिम्बोष्ठः प्रलम्बांशुकशोभितः ॥ ४५ ॥
चलत्कुंडलविद्योतविहसद्गंडमण्डलः । परं संहननं बिभ्रद्वीर्येणान्तविवर्जितः ॥ ४६ ॥
सर्पत्सीतां समुद्दिश्य हनूमान् गुणभूषणः । महाप्रतापसंयुक्तः शोभामुपययौ पराम् ॥ ४७ ॥
कान्तिभासि मुखं दृष्ट्वा तं युतं परया श्रिया । पद्मायतेक्षणा नार्यस्ता बभूवुः समाकुलाः ॥४८॥
दधती हृदये कंपं मन्दोदर्याप्तविस्मया । समालोकत सीतायाः समीपे वायुनन्दनम् ॥ ४९ ॥
उपगम्य ततः सीतां विनीतः पवनात्मजः । करकुड्मलमाधाय मस्तके नम्रतायुषि ॥ ५० ॥
कुलं गोत्रं च संश्राव्य पितरं जननीं तथा । अवेदयच्च विश्रब्धं पद्मनाथेन चोदितम् ॥ ५१ ॥
त्रिविष्टपसमे साध्वि विमाने विभवान्विते । रतिं न लभते रामो मग्नस्त्वद्विरहार्णवे ॥ ५२ ॥
त्यक्तनिःशेषकर्तव्यो मौनं प्रायेण धारयन् । स त्वां मुनिरिव ध्यायन्नेकतानोऽवतिष्ठते ॥ ५३ ॥
वेणुतंत्रीसमायुक्तं गीतं प्रवरयोषिताम् । न कर्णजाहमेतस्य कदाचिद्याति पावने ॥ ५४ ॥

सदा करोति सर्वस्मै कथां स्वामिनि ते मुदा । त्वद्दीक्षणाशया प्राणान्वध्ना धत्ते स केवलम् ५५
इति तद्वचनं श्रुत्वा पतिजीवनवेदनम् । प्रमोदं परमं प्राप्ता सीता विकसितेक्षणा ॥ ५६ ॥
विषादं संगता भूयो जलपूरितलोचना । ऊचे शान्ता हनूमन्तं विनीतं स्थितमग्रतः ॥ ५७ ॥
साहमस्यामवस्थायां निमग्ना कपिलक्षण । तुष्टा किं ते प्रयच्छामि हतेन विधिनान्विता ॥५८॥
ऊचे च वायुपुत्रेण दर्शनेनैव ते शुभे । अद्य मे सुलभं सर्वं जातं जगति पूजिते ॥ ५९ ॥
ततो मुक्ताफलस्थूलवाष्पविन्दुाचिताधरा । सीता श्रीरिव दुःखार्ता पप्रच्छ कपिलक्षणम् ॥ ६० ॥
मकरग्राहनक्रादिक्षोभितं भीममर्णवम् । भद्र दुस्तरमुल्लङ्घ्य विस्तीर्णं कथमागतः ॥ ६१ ॥
अवस्थां वा गतामेतां कार्यसंसिद्धिमागताम् । किमर्थं मामिहागत्य नयस्याश्वासमुत्तमाम् ॥६२॥
लावण्यद्युतिरूपाढ्यः कान्तिसागरसंवृतः । श्रिया कीर्त्या च संयुक्तः प्रियो मे भद्र बान्धवः ६३
प्रदेशे स त्वया कस्मिन् प्राणनाथे ममेक्षितः । सत्यं जीवति सद्भोत्र कच्चिल्लक्ष्मणसंगतः ॥ ६४ ॥
किं नु दुःखेचरैः संख्ये भीमैः व्यापादितोऽनुजः । लक्ष्मणेनैव तुल्यः स्यात्पद्मः पद्माभलोचनः ॥
किं वा मद्विरहादुग्रदुःखं नाथः समाश्रितः । संदिश्य भवतः किंचिद्वने लोकान्तरं गतः ॥ ६६ ॥
जिनेन्द्रविहिते मार्गे निःशेषग्रन्थवर्जितः । ते पश्यन् किमसावास्ते भवनिर्वेदपण्डितः ॥ ६७ ॥

शिथिलीभूतनिःशेषशरीरस्य वियोगतः । अंगुलीतश्च्युतं प्राप्तं त्वया स्यादंगुलीयकम् ॥ ६८ ॥
त्वया सह परिज्ञातिर्नासीदेव मम प्रभोः । कार्येण रहितः प्राप्तः कथं त्वं तस्य मित्रताम् ॥६९॥
न च प्रत्युपकाराय शक्ता तुष्टाप्यहं तव । अंगुलीयकमेतच्च समानीतं कृपावता ॥ ७० ॥
एतत्सर्वं मम भ्रातः समाचक्ष्व विशेषतः । सत्येन श्रावितः पित्रोर्देवस्य च मनोजुषः ॥ ७१ ॥
इति पृष्टः समाधानी शाखामृगकिरीटभृत् । शिरस्थकरराजीवो जगाद विकचेक्षणः ॥ ७२ ॥
सायकं रविहासाख्ये लक्ष्मणेन निजीकृते । गत्वा चन्द्रनखानिष्टा रमणं समरोषयत् ॥ ७३ ॥
यावदाहूयते स्वामी रक्षसां सुमहाबलः । दूषणस्तावदायातो योद्धुं दाशरथिं द्रुतम् ॥ ७४ ॥
लक्ष्मणो दूषणेनामा युध्यते यावदुद्धतम् । तावद्दशमुखः प्राप्तस्तमुद्देशं बलान्वितः ॥ ७५ ॥
धर्माधर्मविवेकज्ञः सर्वशास्त्रविशारदः । भवतीं वीक्ष्य स क्षुद्रो बभूव मनसो वशः ॥ ७६ ॥
भ्रष्टनिःशेषनीतिश्च निस्सारीभूतचेतनः । माया सिंहस्वनं चक्रे भवतीस्तेनकारणम् ॥ ७७ ॥
श्रुत्वा सिंहस्वनं पद्मो ययौ यावद्रणास्थितम् । लक्ष्मणं तावदेतेन पापेन त्वमिहाहृता ॥ ७८ ॥
प्रेषितः पद्मनाभश्च लक्ष्मणेन त्वरावता । गत्वा भूयस्तमुद्देशं न त्वामैक्षत सत्तमे ॥ ७९ ॥
ततश्चिरं वनं भ्रान्त्वा त्वद्गवेषणकारणम् । ईक्षांचक्रे श्लथप्राणं मृत्त्यवासन्नं जटायुषम् ॥ ८० ॥

तस्मै दत्वा स जैनेन्द्रीं म्रियमाणाय देशनाम् । अवतस्थे वने दुःखी भवतीगतमानसः ॥ ८१ ॥
गतश्च लक्ष्मणः पद्मं निहत्य खरदूषणम् । आनीता रत्नजटिना त्वत्प्रवृत्तिः प्रियस्य ते ॥ ८२ ॥
सुग्रीवरूपसंयुक्तः पद्मनाभेन साहसः । बलं हन्तुं समुद्युक्तो विद्यया वर्जितो हतः ॥ ८३ ॥
कृतस्यास्योपकारस्य कुलपावनकारिणः । अहं प्रत्युपकाराय प्रेषितो गुरुबान्धवैः ॥ ८४ ॥
प्रीत्या विमोचयामि त्वां विग्रहो निःप्रयोजनः । कार्यसिद्धिरिहाभीष्टा सर्वथा नयशालिभिः ८५
सोऽयं लंकापुरीनाथो घृणावान् विनयान्वितः । धर्मार्थकामवान्धीरो हृदयेन मृदुः परम् ॥८६॥
सौम्यः क्रौर्यविनिर्मुक्तः सत्यव्रतकृतस्थितिः । करिष्यति वचो नूनं मम त्वामर्पयिष्यति ॥८७॥
कीर्तिरस्य निजा पाल्या धवला लोकविश्रुता । लोकापवादतश्चैष विभेति नितरां कृती ॥ ८८ ॥
ततः परं परिप्राप्ता प्रमोदं जनकात्मजा । हनूमन्तमिदं वाक्यं जगाद विपुलेक्षणा ॥ ८९ ॥
पराक्रमेण धैर्येण रूपेण विनयेन च । कपिध्वजास्त्वया तुल्याः कियन्तो मत्प्रियाश्रिताः ॥९०॥
मंदोदरी ततोऽवोचच्छूराः सत्त्वयशोऽन्विताः । गुणोत्कटा न संशंति धीराः स्वं स्वयमुत्तमाः ९१
वैदेहि तव न ज्ञातः किमयं येन पृच्छसि । कपिध्वजः समानोऽस्य वास्येप्यस्मिन्न विद्यते ॥९२॥
विमानवारणघटासंघट्टपरिमंडले । रणे दशमुखस्यायं प्राप्तः साहाय्यकं परम् ॥ ९३ ॥

दशाननसहायत्वं कृतं येन महारणे । स हनूमानितिख्यातश्चांजनातनयः परः ॥ ९४ ॥
महापदि निमग्नस्य दशवक्रस्य विद्विषः । खेटामनोव्यधाभिख्या एकेनानेन निर्जिताः ॥ ९५ ॥
अनंगकुसुमा लब्धा येन चन्द्रनखात्मजा । गंभीरस्य जनो यस्य सदा वांच्छति दर्शनम् ॥९६॥
अस्य पौरसमुद्रस्य यः कांतः शिशिरांशुवत् । सहोदरसमं वेत्ति यं लंकापरमेश्वरः ॥ ९७ ॥
हनूमानिति ख्यातः सोऽयं सकलविष्टपे । गुणैः समुन्नतो नीतो दूतत्वं क्षितिगोचरैः ॥ ९८ ॥
अहो परमिदं चित्रं निन्दनीयं विशेषतः । नीतः प्राकृतवत्कश्चिद्भूगैर्यद्भृत्यतामयम् ॥ ९९ ॥
इत्युक्ते वचनं वातिर्जगाद स्थिरमानसः । अहो परममूढत्वं भवत्येदमनुष्ठितम् ॥ १०० ॥
सुखं प्रसादतो यस्य जीव्यते विभवान्वितः । अकार्यं वांछतस्तस्य दीयते न मतिः कथम् १०१
आहारं भोक्तुकामस्य विज्ञातं विषमिश्रितम् । मित्रस्य कृतकामस्य कथं न प्रतिषिध्यते ॥१०२॥
भवितव्यं कृतज्ञेन जनेन सुखमीयुषा । वेत्ति स्वार्थं न यस्तस्य जीवितं पशुना समम् ॥ १०३ ॥
मंदोदरी परं गर्वं निःसारं वहसे मुधा । यदग्रमहिषी भूत्वा दूतीत्वमसि संश्रिता ॥ १०४ ॥
क यातमधुना तत्ते सौभाग्यं रूपमुन्नतम् । अन्यस्त्रीगतचित्तस्य दूतीत्वं संश्रितासि यत् ॥१०५॥
प्राकृता परमा सा त्वं वर्त्तसे रतिवस्तुनि । महिषीत्वं न मन्येऽहं जाता गौरसि दुर्भगे ॥१०६॥

मंदोदरी ततोऽवोचत्कोपालिंगितमानसा । अहो तव सदोषस्य प्रगल्भत्वं निरर्थकम् ॥ १०७ ॥
दूतत्वेनागतं सीतां यदि त्वां वेत्ति रावणः । भवेत्प्रकरणं तत्ते जातं यन्नैव कस्यचित् ॥ १०८ ॥
येनैवेन्दुनखानाथो दैवयोगेन मारितः । पुरस्कृत्य तमेवास्य कथं सुग्रीवकादयः ॥ १०९ ॥
भृत्यत्वं दशवक्त्रस्य विस्मृत्य स्वल्पचेतसः । स्थिताः किमथवा कुर्युर्वराकाः कालचोदिताः ॥
अतिमूढहतात्मानो निर्लज्जाः क्षुद्रवृत्तयः । अकृतज्ञा वृथोसिक्ताः स्थितास्ते मृत्युसन्निधौ ॥१११॥
इत्युक्ते वचनं सीता जगौ कोपसमाश्रिता । मन्दोदरि सुमंदा त्वमेवं या कथ्यसे वृथा ॥११२॥
शूरकाविदगोष्ठीषु कीर्त्यमानो न किं त्वया । प्रियो मे पद्मनाभोऽसौ श्रुतोऽत्यद्भुतविक्रमः ११३
वज्रावर्तं धनुर्घोषं श्रुत्वा यस्य रणागमे । भयज्वरितकंपांगाः सीदन्ति रणशालिनः ॥ ११४ ॥
लक्ष्मीधरोऽनुजो यस्य लक्ष्मीनिलयविग्रहः । शत्रुपक्षक्षयं कर्तुं समर्थो वीक्षणादपि ॥ ११५ ॥
किमत्र बहुनोक्तेन समुत्तीर्य महार्णवम् । पतिरेष समायाति लक्ष्मणेन समन्वितः ॥ ११६ ॥
पश्यात्मीयं पतिं युद्धे स्वल्पकैरेव वासरैः । निहतं मम नाथेन जगदुत्कटतेजसा ॥ ११७ ॥
एषा गतासि वैधव्यं क्रन्दस्येषा चिरोज्झिता । या त्वं पापरतेर्भर्तुरनुकूलत्वमागता ॥ ११८ ॥
मयदैत्यात्मजा तीव्रमेवमुक्तातिकोपगा । परमं क्षोभमायाता कंपमानाऽधराधरा ॥ ११९ ॥

एका नानासपत्नीनां सहस्रैः संभ्रमस्पृशम् । अष्टादशभिरत्युग्रैः कोपकंपितमूर्तिभिः ॥ १२० ॥
समं करतलैर्हन्तुमुद्यता वेगधारिभिः । निर्भर्त्सनमतिक्रूरैराक्रोशैः कुर्वती भृशम् ॥ १२१ ॥
श्रीमांस्तावन्मरुत्पुत्रः समुत्थाय जवान्वितः । अवस्थितोऽन्तरे तासां सरितामिव भूधरः ॥१२२॥
ता दुःखहेतवः सर्वा वैदेहीं हन्तुमुद्यताः । वेदना इव वैद्येन श्रीशैलेन निवारिताः ॥ १२३ ॥
पादताडितभूभागा विभूषादरवर्जिताः । ययुः क्रूराशयाः सर्वा वनितास्ता दशाननम् ॥१२४॥
आंजनेन ततः सीता प्रणिपत्य महादरम् । विज्ञापिता सुवाक्येन भोजनं प्रति सा धुना १२५
समर्थितप्रतिज्ञासौ सुनिर्मलमनोरथा । अभ्युपागच्छदाहारं कालदेशज्ञमानसा ॥ १२६ ॥
ससागरा मही देवि रामदेवस्य शासने । वर्त्तते तेन नैवेदमन्नं संत्यक्तुमर्हसि ॥ १२७ ॥
एवं हि बोधिता तेन वैदेही करुणावनिः । ऐच्छदन्नं यतः साध्वी सर्वाचारविचक्षणा ॥१२८॥
इरा नाम ततस्तेन चोदिता कुलपालिता । यथान्नं प्रवरं श्लाघ्यं द्रुतमानीयतामिति ॥ १२९ ॥
मुक्ता कन्या स्वशिविरं श्रीशैलेन क्षपाक्षये । भानावभ्युदिते जातो विभीषणसमागमः ॥१३०॥
आहारो वायुपुत्रेण तत्र भुक्तो मनोहरः । एवं कर्तव्ययोगेन मुहूर्तास्ते त्रयो गताः ॥ १३१ ॥
मुहूर्तेऽथ चतुर्थे नु समानीतमिरास्त्रिया । आहारं मैथिलीभुक्तमिति जानन्ति कोविदाः ॥१३२॥

चन्दनादिभिरालिप्ते भूतले दर्पणप्रभे । पुष्पोपकारसंपन्ने नलनीपत्रशोभिनि ॥ १३३ ॥
सद्गन्धंविपुलं स्वच्छं पथ्यं पेयादिपूर्वकम् । स्थाल्यादिभिर्महापात्रैः सौवर्णादिभिराहृतम् ॥१३४॥
घृतपूपादिभिःकाश्चित्पात्र्यो राजन्ति पूरिताः । कुन्दपुष्पसमच्छायैः शालीनैः काश्चिदोदनैः १३५
षड्रसैरुपदंशैश्च काश्चिद्रोचनकारिभिः । व्यंजनैस्तरलैः काश्चित्पिण्डीबन्धोचितैस्तथा ॥ १३६ ॥
पयसा संस्कृतैः काश्चिदन्याःपरमदाधिकैः । लेह्यैः काश्चिन्महास्वादैरन्यैः पकान्निषेवितैः ॥१३७॥
एवं परममाहारमिरा परिजनान्विता । हनूमंतं पुरस्कृत्य भ्रातृभावेन वत्सला ॥ १३८ ॥
महाश्रद्धान्वितस्वान्ता प्रणिपत्य जिनेश्वरान् । समाप्य नियमं धीरा ध्याताातिथिसमागमा १३९
निधाय हृदये राममभिरामं पतिव्रता । पवित्रांगा दिने भुंक्ते साधुलोकप्रपूजितम् ॥ १४० ॥
रविरश्मिकृतोद्योतं सुपवित्रं मनोहरम् । पुण्यवर्धनमारोग्यं दिवाभुक्तं प्रशस्यते ॥ १४१ ॥
निवृत्तभोजनविधिः किंचिद्विश्रब्धतां गता । विज्ञापितेति भूयोऽपि सीता पवनसूनुना ॥१४२॥
आरोह देवि मे स्कन्धे पवित्रे गुणभूषणे । समुल्लंघ्य नदीनाथं नेष्यामि भवतीं क्षणात् ॥१४३॥
पश्यंतं विभवैर्युक्तं राघवं त्वत्परायणम् । भवद्योगसमानन्दं जनोऽनुभवतु प्रियः ॥ १४४ ॥
ततोंजलिपुटं बद्ध्वा रुदती जनकात्मजा । जगादादरसंयुक्ता विचिंतितयथास्थितिः ॥ १४५ ॥

अन्तरेण प्रभोराज्ञां गमनं मे न युज्यते । इत्यवस्थां गता दास्ये तस्मै किमहमुत्तरम् ॥ १४६ ॥
प्रत्येति नाधुना लोकः शुद्धिं मे मृत्युना विना । नाथ एव ततः कृत्यं मम ज्ञास्यति सांप्रतम् ॥
यावन्नोपद्रवः कश्चिज्जायते दशवक्त्रकात् । तावद्व्रज द्रुतं भ्रातर्नालम्बनमिह क्षणम् ॥ १४८ ॥
त्वया मद्वचनाद्वाच्यः सम्यक् प्राणमहेश्वरः । अभिधानैरिमैर्मूर्ध्नि निधाय करकुड्मलम् ॥ १४९ ॥
तस्मिन् देव मया सार्द्धं मुनयो व्योमचारिणः । वंदिताः परमं भक्त्या त्वया स्तवनकारिणा१५०
विमलांभसि पद्मिन्या नितरामुपशोभिते । सरसि क्रीडतां स्वेच्छमस्माकमतिसुन्दरम् ॥ १५१ ॥
आरण्यकस्तदा हस्ती समायातो भयंकरः । ततो मया समाहूतस्त्वमुन्मग्नो जलान्तरात् ॥१५२॥
उद्दामोऽसौ महानागश्चारुक्रीडनकारिणा । समस्तं त्याजितो दर्पं भवता निश्चलीकृतः ॥ १५३ ॥
आसीच्च नन्दनच्छाये वने पुष्पभरानते । शाखां पल्लवलोभेन नमयन्ती प्रयासिनी ॥ १५४ ॥
भ्रमद्भिश्चंचलैर्भृंगैररतिभूता ससंभ्रमा । भुजाभ्यां भवताश्लिष्य जनिताकुलतोज्झिता ॥ १५५ ॥
उद्यन्तमन्यदा भानुं माहेन्द्रीदिग्विभूषणम् । अहमंभोजखण्डस्य त्वया सह तटे स्थिता ॥ १५६॥
अशंसिषं ततः किंचिदीर्षारसमुपेयुषा । बालेनोत्पलनालेन मधुरं ताडिता त्वया ॥ १५७ ॥
अन्यदा रतिशैलस्य प्राग्भारस्य मया प्रियः । पृष्टस्त्वमिति विभ्रत्या कौतुकं परशोभया ॥१५८॥

एतस्मिन्कुसुमैः पूर्णा विपुला स्निग्धताजुषः । किन्नामानो द्रुमा नाथ मनोहरणकोविदाः ॥१५९॥
ततस्त्वयेति पृष्टेन प्रसन्नमुखशोभिना । आख्यातमिति देव्येते यथा नन्दिद्रुमा इति ॥ १६० ॥
कर्णकुण्डलनद्याश्च स्थितास्तीरे वयं यदा । तदा सन्निहितौ जातौ मध्याह्ने व्योमगौ मुनी ॥१६१॥
त्वया मया च भिक्षार्थं तयोरागतयोस्ततः । अभ्युच्छायमहाश्राद्धं रचितं पूजनं महत् ॥ १६२ ॥
अन्नं च परमं ताभ्यां दत्तं विधिसमन्वितम् । पंच चातिशया जातास्त्वत्प्रभावेन सुन्दराः १६३
पात्रदानमहोदानं महादानमिति ध्वनिः । अंतरिक्षेऽमरैश्चक्रे साधु सम्यग्ध्वनिश्रितः ॥ १६४ ॥
अदृष्टतनुभिर्देवैर्दुन्दुभिः सध्वनिः कृतः । पपात गगनाद्वृष्टिः कौसुमी भृंगतादिता ॥ १६५ ॥
सुखसीतो ववौ वायुः सुगंधी नीरजो मृदुः । मणिरत्नसुवर्णांगा धाराश्रममपूरयत् ॥ १६६ ॥
चूडामणिमिमं चोद्यं दृढप्रत्यकारणम् । दर्शयिष्यसि नाथाय तस्यात्यन्तमयं प्रियः ॥ १६७ ॥
जानामि नाथ ते भावं प्रसादिनमलं मयि । तथापि यत्नतः प्राणाः पाल्याः संगमनाशया १६८
प्रमादाद्भवतो जातो वियोगोऽयं मया सह । सांप्रतं त्वयि यत्नस्थे संगमो नौ विसंशयः १६९
इत्युक्ते रुदतीं सीतां समाश्वास्य प्रयत्नतः । यथाज्ञापयसीत्युक्त्वा निरैत्सीत्तत्प्रदेशतः ॥१७०॥
पाण्यंगुलीयकं सीता तदाशक्तशरीरिका । मानसस्य कृताश्वासं मेने पत्युः समागमम् ॥ १७१ ॥

अथोद्यानगता नार्यस्त्रस्तसारंगलोचनाः । वायुनंदनमालोक्य स्मितविस्मितसंगताः ॥ १७२ ॥
परस्परं समालापमिति कर्तुं समुद्यताः । अस्य पुष्पनगस्योर्द्ध्वं कोऽप्यहो नरपुंगवः ॥ १७३ ॥
अवतीर्णः किमेषः स्याद्विग्रही कुसुमायुधः । देवः कोऽपि तु शैलस्य शोभां द्रष्टुं समागतः १७४
तासामाकुलिका काचिन्निधाय शिरसि स्रजम् । उपवीणनमारेभे कर्तुं किंनरनिस्वना ॥ १७५ ॥
काचिदिन्दुमुखी वामे हस्तेऽवस्थाप्य दर्पणम् । दिदृक्षन्ती समालोक्य तं बभूवान्यथामनाः १७६
ईषत्काचिदभिज्ञाय वधूरिदमचिन्तयत् । अलब्धद्वारसन्मानः कुतो मारुतिरागतः ॥ १७७ ॥
वरस्त्रीजनमुद्याने कृत्वा संभ्रान्तमानसम् । हारमाल्यांबरधरो भास्वान् वह्निकुमारवत् ॥ १७८ ॥
निसर्गकान्तया गत्या प्रदेशं किंचिदभ्यगात् । तथाविधां च तां वार्त्तामश्रृणोद्राक्षसाधिपः ॥१७९॥
क्रोधसंस्पृष्टचित्तेन निरपेक्षत्वमीयुषा । तावदाज्ञापिताः शूरा रावणेनोऽग्रकिंकराः ॥ १८० ॥
विचारेण न वः कृत्यं पुष्पोद्यानान्निरेति यः । मद्द्रोही कोऽप्ययं क्षिप्रं नीयतामन्तमायुषः १८१
अमी ततः समागत्य दध्युर्विस्मयमागताः । किमिंद्राजिन्नरेशः स्याद्भास्करः श्रवणोऽथवा १८२
पश्यामस्तावदित्युक्त्वा तैरित्युक्तं समंततः । भो भो श्रृणुत निःशेषा उद्यानस्याभिरक्षकाः ॥१८३॥
किं तिष्ठत सुविश्रब्धाः किंकराः कृतितां श्रिताः । किमिति श्रुतमस्माभिः कथ्यमानमिदं वहिः ॥

कोऽप्युद्दामतयोद्यानं प्रविष्टो दुष्टखेचरः । स क्षिप्रं मार्यतामेष गृह्यतां दुर्विनीतकः ॥ १८५ ॥
धावध्वमसकौ कोऽसौ सोयमेव इतः कुतः । कस्य कस्तादृशः क्वेति किंकरध्वनिरुद्गतः ॥१८६॥
ततः कार्मुकिकान् दृष्ट्वा शक्तिकान् गदिकांश्च तान् । खड्गिकान् कौंतिकान्, वद्धसंघातानायतो बहून्
किंचित्संभ्रान्तधीर्वातिर्मृगाधिपपराक्रमः । रत्नशाखामृगच्छायासमुद्दीपितपुष्करः ॥ १८८ ॥
अवरोहंस्ततो देशात्तैरदृश्यत किंकरैः । आकुलत्वविनिर्मुक्तः प्रलंबं बिभ्रदंबरम् ॥ १८९ ॥
ततस्तमुद्यदादित्यमंडलं प्रतिमत्विषम् । प्रदष्टाधरमालोक्य विशीर्णाः किंकरा गणाः ॥ १९० ॥
ततः किलापरैः क्रूरैः प्रक्षातैः किंकराधिपैः । तत्किंकरबलं गच्छदितश्चेतश्च धारितम् ॥ १९१ ॥
शक्तितोमरचक्रासिगदाकार्मुकपाणयः । सर्वतो वावृणन्नेतं मुखराः किंकरास्ततः ॥ १९२ ॥
मुमुचुश्च घनं शस्त्रं ज्येष्ठत्राता यथावुशम् । अदृष्टभास्करोद्योताः परं संघातवर्त्तिनः ॥ १९३ ॥
उत्पाट्य वायुपुत्रोऽपि निःशस्त्रो धीरपुंगवः । संघातं तुंगवृक्षाणां शिलानां वारमक्षिपत् ॥१९४॥
भीमभोगिमहद्भोगभास्वद्भुजजवेरतैः । पादपादिभिराहनत्कालमेघ इवोन्नतः ॥ १९५ ॥
अश्वस्थान् शालन्यग्रोधान्नन्दिचंपककेसरान् । नीपाशोककदंबांश्च पुन्नागानर्जुनान्धवान् ॥१९६॥
आम्रानाम्रातकांल्लोध्रान शृणु राजन् ( तृणराजान् ) स्थवीयसः ।

विशालान् पनसाद्यांश्च चिक्षेप क्षेपवर्जितः ॥ १९७ ॥
बभंज त्वरितं कांश्चिदपरानुदमूलयत् । मुष्टिपादप्रहारेण यियेषान्यान्महाबलः ॥ १९८ ॥
आकूपारसमंतेन सैन्यमेकेन तत्कृतम् । समाकुलं गतं क्वापि क्षणेन प्रियजीवितम् ॥ १९९ ॥
सहायैर्मृगराजस्य कुर्वतो मृगशासनम् । कियद्भिरपरैः कृत्यं त्यक्त्वा सत्वं सहोद्भवम् ॥ २०० ॥
पुष्पाद्रेरवतीर्णस्य चक्रुर्वलयरोधनम् । भूयो युद्धमभूदुग्रं प्रान्तविध्वस्तकिंकरम् ॥ २०१ ॥
सभावापीविमानानामुद्यानोत्तमसद्मनाम् । चूर्णितानां तदाघातैर्भूमयः केवलाः स्थिताः ॥२०२॥
पादमार्गप्रदेशेषु ध्वस्तेषु वनवेश्मसु । महारथ्या यथा जाताः शुष्कसागरसन्निभाः ॥ २०३ ॥
भग्नोत्तुंगापणाश्रेणिः पातिताऽनेककिंकरः । बभूव राजमार्गोपि महासंग्रामभूसमः ॥ २०४ ॥
पतद्भिस्तोरणैस्तुंगैः कंपितध्वजपंक्तिभिः । बभूवांबरमुत्पातादिव भ्रश्यत्सुरायुधम् ॥ २०५ ॥
जंघावेगात्समुद्यद्भी रजोभिर्बहुवर्णकैः । इंद्रायुधसहस्राणि रचितानीव पुष्करे ॥ २०६ ॥
पादावष्टंभभिन्नेषु भूभागेषु निमज्जताम् । बभूव गृहशैलानां पातालेष्विव निश्वनः ॥ २०७ ॥
हृष्या कंचित्करेणान्यं कांचित्पादेन किंकरम् । उरसा कंचिदंसेन वातेनान्यं जघान सः ॥२०८॥
आक्षीयमानमात्राणां किंकराणां सहस्रशः । पततामुत्करै रथ्या जाता पूरसमागता ॥ २०९ ॥

हाहाहीकारगंभीरः पौराणामुद्गतो ध्वनिः । क्वचिच्च रत्नकूटानां भंगात्कणकणस्वनः ॥ २१० ॥
वेगेनोत्पततस्तस्य समाकृष्टमहाध्वजाः । कोपादिवोद्ययुः पश्चात्कृतघंटादिनिःश्वनाः ॥ २११ ॥
उन्मूलितमहालाना बभ्रमुः परमा गजाः । वायुमंडलपर्णानामश्वास्तुल्यत्वमागताः ॥ २१२ ॥
अधस्तात्स्फुटिता वाप्यः प्राप्ताः पंकावशेषताम् । चक्रारूढेव निःशेषा जाता लंका समाकुला ॥
लंकाकमलिनीखंडं ध्वस्तराक्षसमीनकम् । श्रीशैलवारणो यावद्विक्षोभ्य बहिराश्रितः ॥ २१४ ॥
तावत्तोयदवाहेन समं संनह्य वेगतः । पश्चादिन्द्रजितो लग्नो द्विपस्यन्दनमध्यगः ॥ २१५ ॥
हनूमान्यावदेतेन समं योद्धुं समुद्यतः । प्राप्तं तावदितं तस्य बलं यन्मेघपृष्ठगम् ॥ २१६ ॥
बाह्यायां भुवि लंकायां महाप्रतिभयं रणम् । जातं हनूमतः खेटैः लक्ष्मणस्येव दौषणम् ॥२१७॥
युक्तं सुचतुरैरश्वै रथमारुह्य पावनिः । समुद्धृत्य शरं सैन्यं राक्षसानामधावत ॥ २१८ ॥
अथेन्द्रजितवीरेण पाशैर्महोरगैस्सितः । चिरमायोधितो नीतः पुरं किंचिद्विचिंतयन् ॥ २१९ ॥
ततो नगरलोकेन विश्रब्धं स निरीक्षितः । कुर्वन्भंजनमासीद्यो विद्युद्दंडवदीक्षितः ॥ २२० ॥
प्रवेशितस्य चास्थान्यां तस्य दोषान् दशाननः । कथ्यमानान् शृणोति स्म तद्विद्भिः पुरुषैर्निजैः ॥
दूताहूतः समायातः किष्किन्धं स्वपुरादयम् । महेन्द्रनगरध्वंसं चक्रे तं च वशं रिपोः ॥ २२२ ॥

साधूपसर्गमथने द्वीपे दधिमुखाह्वये । गंधर्वकन्यकास्तिस्रः पद्मस्याभ्यनुमोदिताः ॥ २२३ ॥
विध्वंसं वज्रशालस्य चक्रे वज्रमुखस्य च । कन्यामभिलषत्तस्य बहिरस्थापयद्बलम् ॥ २२४ ॥
भग्नं पुष्पनगोद्यानं तत्पाल्यः विह्वलीकृताः । बहवः किंकरा ध्वस्ताः प्रपादि च विनाशितम् ॥
घटस्तनविमुक्तेन पुत्रस्नेहान्निरंतरम् । पयसा पोषिताः स्त्रीभिर्वृक्षका ध्वंसमाहताः ॥ २२६ ॥
वृक्षैर्वियोजिता वल्यस्तरलायितपल्लवाः । धरण्यां पतिता भान्ति विधवा इव योषिताः ॥२२७॥
फलपुष्पभरा नम्रा विविधास्तरुजातयः । श्मशानपादपच्छाया एतेन ध्वंसिताः स्थिताः ॥२२८॥
अपराधानिमान् श्रुत्वा रावणः कोपमागतः । अबन्धयत्तमाहूय विनागं लोहशृंखलैः ॥ २२९ ॥
उपविष्टोर्कसंकाशो दशास्यः सिंहविष्टरे । पूजायोग्यं पुरा वातिमाक्रोशदिति निर्दयम् ॥२३०॥
उद्वृत्तोऽयमसौ पापः निरपेक्षस्त्रपोज्झितः । अधुनैतस्य का छाया धिगेतेनेक्षितेन किम् ॥२३१॥
व्यापादितेन किं दुष्टः कर्ता नानागसामयम् । कथं न गणितं पूर्वं मम दाक्षिण्यमुन्नतम् ॥२३२॥
ततस्तन्मंडलप्रान्तस्थिताः प्रवरविभ्रमाः । महाभाग्या विलासिन्यो नवयौवनपूजिताः ॥२३३॥
कोपस्मितसमायुक्ता निमीलितविलोचनाः । विधाय शिरसः कंपमेवमूचुरनादरात् ॥ २३४ ॥
प्रसादाद्यस्य यातोऽसि प्रभुतां क्षितिमण्डले । पृथिव्यां विचरन्स्वेच्छं समस्तबलवर्जितः ॥२३५॥

एतत्तत्स्वामिनः प्रीतेर्भवता दर्शितं फलम् । भूमिगोचरदूतत्वं यत्प्राप्तोऽस्यतिनिंदितम् ॥ २३६ ॥
सुकृतं दशवक्त्रस्य कथमाधाय पृष्ठतः । वसुधाहिंडनक्लिष्टौ भवता तौ पुरस्कृतौ ॥ २३७ ॥
पवनस्य सुतो न त्वं जातोऽस्यन्येन केनचित् । अदृष्टमकुलीनस्य निवेदयति चेष्टितम् ॥ २३८ ॥
चिह्नानि विटजातस्य संति नांगेषु कानिचित् । अनार्यमाचरन् किंचिज्जायते नीचगोचरः ॥२३९॥
मत्ताः केसरिणोऽरण्ये श्रृगालानाश्रयन्ति किम् । नहि नीचं समासृत्य जीवन्ति कुलजा नराः २४०
सर्वस्वेनापि यः पूज्यो यद्यप्यसकृदागतः । सुचिरादागतो द्रोही त्वं निग्राह्यस्तु वर्तसे ॥ २४१ ॥
इमैर्निगदितैः क्रोधात्प्रहस्योवाच मारुतिः । को जानाति विना पुण्यैर्निग्राह्यः को विधेरिति २४२
स्वयं दुर्मतिना सार्द्धमनेनासन्नमृत्युना । इतो दिनैः कतिपयैर्द्रक्ष्यामः क्व प्रयास्यथ ॥ २४३ ॥
सौमित्रिः सह पद्मेन बलोत्तुंगः समापतत् । न मेघ इव संरोद्धुं नगैः शक्यो भवेन्नृपैः ॥२४४॥
अतृप्तः परमाहारैः कामिकैरमृतोपमैः । याति कश्चिद्यथा नाशमेकेन विषबिंदुना ॥ २४५ ॥
अतृप्तः स्त्रीसहस्रोघैरिंधनैरिव पावकः । परस्त्रीतृष्णया सोऽयं विनाशं क्षिप्रमेष्यति ॥ २४६ ॥
या येन भाविता बुद्धिः शुभाशुभगता दृढम् । न सा शक्याऽन्यथाकर्त्तुं पुरंदरसमैरपि ॥ २४७ ॥
निरर्थकं प्रियशतैर्दुर्मतौ दीयते मतिः । नूनं विहितमस्यैताद्विहितेन हतो हतः ॥ २४८ ॥

प्राप्ते विनाशकालेऽपि बुद्धिर्जंतोर्विनश्यति । विधिना प्रेरितस्तेन कर्म्मपाकं विचेष्टते ॥ २४९ ॥
मर्त्यधर्मो यथा कश्चित्सुगन्धि मधुरं पयः । प्रमादी विषसन्मिश्रं पीत्वा ध्वंसं प्रपद्यते ॥२५०॥
तथाविधो दशास्य त्वं परस्त्रीसुखलोलुपः । वमनेन विना क्षिप्रं विनाशं प्रतिपश्यते ॥ २५१ ॥
गुरून्परिजनं वृद्धान्मित्राणि प्रियबांधवान् । मात्रादीनपकर्मत्वं प्रवृत्तः पापवस्तुनि ॥ २५२ ॥
कदाचारसमुद्रे त्वं मदनावर्तमध्यगः । प्राप्तो नरकपातालं कष्टं दुःखमवाप्स्यसि ॥ २५३ ॥
त्वया दशास्य जातेन महारत्नश्रवोनृपात् । अन्वयोऽधमपुत्रेण रक्षसां क्षयमाहृतः ॥ २५४ ॥
अनुपालितमर्यादाः क्षितौ पूजितचेष्टिताः । पुंगवा भवतो वंश्यास्त्वं नु तेषां पुलाकवत् ॥२५५॥
इत्युक्तः क्रोधसंरक्तः खड्गमालोक्य रावणः । जगाद दुर्विनीतोऽयं सुदुर्वचननिर्भरः ॥ २५६ ॥
त्यक्तमृत्युभयो विभ्रत्प्रगल्भत्वं ममाग्रतः । द्राक् खलीक्रियतां मध्ये नगरस्य दुरीहितः ॥२५७॥
सशब्दैरायतैः स्थूलैर्बद्धो रज्जुभिरायतैः । ग्रीवायां हस्तपादे च रेणुरूक्षितविग्रहः ॥ २५८ ॥
वेष्टितः किंकरैः क्रूरैर्भ्राम्यतां च गृहे गृहे । हास्यमानः खरैर्वाक्यैः कृतमंडलपूत्कृतः ॥ २५९ ॥
इमकं वनिता दृष्ट्वा नराश्च पुरवासिनः । शोचन्ति कृताधिकारा विकृताः कंपिताननाः ॥२६०॥
क्षितिगोचरदूतोऽयं सोऽयं दूतः प्रपूजितः । पश्यतैनमिति स्वानं पुरे सर्वत्र घोष्यताम् ॥२६१॥

ततस्तैर्विविधाक्रोशैः संप्राप्तः कोपमुत्तमम् । अयासी द्वन्धनं छित्वा मोहपाशं यथा यतिः ॥२६२॥
पादविन्यासमात्रेण भंक्त्वा गोपुरमुन्नतम् । द्वाराणि च तथान्यानि खमुत्पत्य ययौ मुदा २६३
शक्रप्रासादसंकाशं भवनं रक्षसां विभोः । हनूमत्पादघातेन विस्तीर्णं स्तंभसंकुलम् ॥ २६४ ॥
पतता वेश्मना तेन यंत्रितापि महानगैः । धरणी कंपमानीता पादवेगानुघाततः ॥ २६५ ॥
भूमिसंप्राप्तसौवर्णप्राकारं रंध्रगह्वरम् । वज्रचूर्णितशैलाभं जातं दाशमुखं गृहम् ॥ २६६ ॥
कपिमौलिभृतामीशं श्रुत्वैवंविधविक्रमम् । प्रमोदं जानकी प्राप्ता विषादं च मुहुर्मुहुः ॥ २६७ ॥
वज्रोदरी ततोऽवोचत्किं वृथा देवि रोदिषि । संत्रोटय शृंखलं पश्य यातं मारुतिमंबरम् ॥२६८॥
निशम्य वचनं तस्या विकसन्नेत्रपंकजा । गच्छन्तं मारुतिं दृष्ट्वा निजसैन्यसमागतम् ॥ २६९ ॥
अचिन्तयदयं वार्तां मह्यं नाथस्य मे ध्रुवम् । कथयिष्यति यस्यैष गच्छतः प्रवरो जवः ॥२७०॥
पृष्टतश्चास्य सानन्दा पुष्पांजलिममुंचत । समाधानपरा भूत्वा श्रीरिवेशस्य तेजसा ॥ २७१ ॥
उवाच च ग्रहाः सर्वे भवन्तु सुखदास्तव । हतविघ्नश्चिरंजीव भोगवान् वायुनन्दन ॥ २७२ ॥

इति सुविहितवृत्ताः पूर्वजन्मन्युदाराः सकलभुवनबोधिश्लाघ्यकीर्तिप्रधानाः ।
अभिसरपरिमुक्ताः कर्म तत्कर्तुमीशाः जनयति परमं तद्विस्मयं दुर्विचिंत्यम् ॥ २७३ ॥

भजत सुकृतसंगं तेन निर्मुच्य सर्वं विरसफलविधायि क्षुद्रकर्म प्रयत्नात् ।
भवत परमसौख्यास्वादलोभप्रसक्ताः परिजितरविभासो जंतवः कान्तलीलाः ॥२७४॥

इत्यार्षे रविषेणाचार्यप्रोक्ते पद्मपुराणे हनूमत्प्राभिगमनं नाम त्रिपंचाशत्तमं पर्व ।

---

# अथ चतुःपञ्चाशत्तमं पर्व ।

अथाससाद कैष्किन्धं हनूमान् बलमग्रतः । विधाय पुरविध्वंसध्वजछत्रादिचारुताम् ॥ १ ॥
बहिर्निष्क्रान्तकैष्किन्धिजनसागरवीक्षितः । विवेश नगरं धीरो निसर्गोदारविभ्रमः ॥ २ ॥
वीक्षितांगान्महायोधान् द्रष्टुं नगरयोषिताम् । गवाक्षार्पितवक्त्राणां संभ्रमः परमोऽभवत् ॥ ३ ॥
प्राप्य च वासमात्मीयं हितो भूत्वा पिता यथा । वातिराश्वासयन् सैन्यं यथायोग्यं समंततः ॥४॥
तत सुग्रीवराजेन संगत्य ज्ञापिताक्रियः । जगाम पद्मनाभस्य पादमूलं निवेदितुम् ॥ ५ ॥
प्रिया जीवति ते भद्रेत्येवमागत्य मारुतिः । वेदयिष्यति मे साधुरिति चिन्तामुपागतम् ॥ ६ ॥
क्षीणमत्यभिरामांगं क्षीयमाणं निरकुंशम् । वियोगवह्निना नागं दावेनैवाकुलीकृतम् ॥ ७ ॥

वर्तमानं महाशोकपाताले द्विष्टविष्टपम् । पद्मं वातिरुपासर्पन् मूर्धन्यस्तकराम्बुरुट् ॥ ८ ॥
प्रथमं वातिना हर्षध्रियमाणोरुचक्षुषा । वक्त्रेण जानकीवार्ता शिष्टवाचा ततोऽखिला ॥ ९ ॥
अभिज्ञानादिकं सर्वं निवेद्योक्तं स सीतया । चूणामणिं नरेन्द्राय समर्प्यागात्कृतार्थताम् ॥ १० ॥
चिन्तयेव हतच्छायः निषण्णः श्रान्तवक्त्रकः । शोकक्लान्त इवासीत्स बेणीबन्धमलीमसः ॥११॥
पद्मस्यांजलिजातोऽसौ पतद्वाष्पो हतप्रभः । दृशा दृष्टो नु पीतो नु वार्तां पृष्टानुसंभ्रमात् ॥१२॥
आसीनमंजुलावेनं दौर्बल्यविरलांगुलौ । गलत्किरणदारौघः सुशोच धरणीपतिः ॥ १३ ॥
पूरितांजलिमश्रूनामालोकेन तमानने । चक्रे सोऽपि रुदित्वा च नरेशः सलिलांजलिम् ॥ १४ ॥
प्रियायास्तदभिज्ञानं यत्राप्यंगे नियोजितम् । तेन तस्यापि वैदेही परिष्वंग इवाभवत् ॥ १५ ॥
सर्वव्यापी समुद्भिन्नो रोमांचः कर्कशो घनः । अंगेष्वसंभवस्तस्य प्रमोद इव निर्झरः ॥ १६ ॥
अपृच्छच्च परिष्वज्य मारुतिं कृतसंभ्रमः । अपि सत्यं प्रिया प्राणान् धारयत्यतिकोमला ॥१७॥
जगाद प्रणतो वातिः नाथ जीवति नान्यथा । मया वार्त्ता समानीता सुखी भव इलापते ॥१८॥
किन्तु त्वद्विरहोदारदावमध्यविवर्त्तिनी । गुणौघनिम्नगा बाला नेत्रांबुकृतदुर्दिना ॥ १९ ॥
वेणीबंधच्युतिच्छायमूर्द्धजात्यन्तदुःखिता । मुहुर्निश्वसती दीनं चिन्तासागरवर्तिनी ॥ २० ॥

तनूदरी स्वभावेण विशेषेण वियोगतः । आराध्यमानिका स्त्रीभिः क्रुद्धाभी रक्षसां विभोः ॥२१॥
सततं चिन्तयन्ती त्वां त्यक्तसर्वतनुस्थितिः । दुःखं जीवति ते कान्ता कुरु देव यथोचितम् ॥२२॥
सामीरणिवचः श्रुत्वा म्लानपद्मेक्षणश्चिरम् । चिन्तयाकुलितः पद्मो बभूवात्यन्तदुःखितः ॥ २३ ॥
दीर्घमुष्णं च निश्वस्य श्रस्तालशरीरभृत् । निनिंद जीवितं स्वस्य जन्म चानेकधा भृशम् ॥२४॥
ततस्तदिंगितं ज्ञात्वा सौमित्रिरिदमब्रवीत् । किं शोचसि महाबुद्धे कर्तव्ये दीयतां मनः ॥ २५ ॥
लक्ष्यते दीर्घसूत्रत्वं किष्किन्धनगरप्रभोः । कृताह्वानश्च भूयोऽपि सीताभ्राता चिरायति ॥ २६ ॥
दशास्यनगरीं श्वो (हि) गंतास्मेति विसंशयम् । नौभिरर्णवमुत्तीर्य बाहुभ्यामेव वा द्रुतम् ॥२७॥
अथोचे सिंहनादाख्यो मधुरो खेचरो महान् । अभिमानसमं मैवं भाषिष्ट कोविदो भवान् ॥२८॥
भवतो या गतिः सैव जातास्माकमिहाधुना । अतो निरूप्य कर्तव्यं सर्वेभ्यो हितमादरात् ॥२९॥
गत्वा पवनपुत्रेण सप्राकाराद्रिगोपुरा । लंका विध्वंसिता तेन सोद्यानोपवनान्विता ॥ ३० ॥
अधुना रावणे क्रुद्धे महाविद्याधराधिपे । संघातमृत्युरस्माकं सम्प्राप्तोयं विधेर्वशात् ॥ ३१ ॥
ऊचे चन्द्रमरीचिश्च परं वचनमूर्जितम् । किं त्वं हरेरिव प्राप्तः संत्रासं मृगवत्परम् ॥ ३२ ॥
विभेति दशवक्त्राद्धः को वासौ किं प्रयोजनम् । अन्यायकारिणस्तस्य वर्तते मृत्युरग्रतः ॥ ३३ ॥

अस्माकं बहवः सन्ति खेचरेन्द्रा महारथाः । विद्याविभवसंपन्नाः कृताश्चर्याः सहस्रशः ॥ ३४ ॥
ख्यातो घनगतिस्तीव्रो भूतनादो गजस्वनः । क्रूरः केली किलो भीमः कुंडो गोरतिरंगदः ॥३५॥
नलो नीलो तडिद्वक्त्रो मन्दरोऽशनिरर्णवः । चन्द्रज्योतिर्मृगेन्द्राह्वो वज्रदंष्ट्रो दिवाकरः ॥ ३६ ॥
उल्कालांगूलदिव्यास्त्रप्रत्यूहोज्झितपौरुषः । हनूमान् सुमहाविद्यः प्रभामंडलसुन्दरः ॥ ३७ ॥
महेन्द्रकेतुरत्युग्रसमीरणपराक्रमः । प्रसन्नकीर्तिरुद्वृत्तः सुतास्तस्य महाबलाः ॥ ३८ ॥
किष्किंधस्वामिनोऽन्येपि सामन्ताः परमौजसः । विद्यन्तेऽक्षतकर्म्माणो निर्भृत्याः शासनैषिणः ३९
ततस्तद्वचनं श्रुत्वा खेचराश्चक्षुरानतम् । लक्ष्मीधराग्रजं तेन निदधुर्विनयान्वितम् ॥ ४० ॥
अथेक्षांचाक्रिरे तस्य वदनेऽव्यक्तसौम्यके । भ्रकुटीजालकं भीमं मृत्योरिव लतागृहम् ॥ ४१ ॥
लंकायां तेन विन्यस्तां दृष्टिं शोणस्फुरत्त्विषम् । केतुरेखामिवोद्याताम् राक्षसक्षयशंसिनीम् ॥४२॥
तामेव च पुनर्न्यस्तां चिरमध्यस्थतां गते । दृष्ट्वा स्थाम्नि निजे चापे कृतान्तभ्रूलतोपमे ॥ ४३ ॥
कोपकंपश्लथं चास्य केसभारं स्फुरद्युतिम् । निधानमिव कालस्य निरोद्धुं तमसा जगत् ॥ ४४ ॥
तथाविधं च तद्वक्त्रं ज्योतिर्वलयमध्यगम् । जठरीभवदुत्पातप्रभाभास्करसन्निभम् ॥ ४५ ॥
गृहीतगमनं क्ष्वेडं रक्षसां नाशनायतं । दृष्ट्वा ते गमने सज्जा जाता संभ्रान्तमानसाः ॥ ४६ ॥

राघवाकूतनुन्नास्ते संपूज्येन्दुश्रुतेर्गिरां । चालिताः व्योमगाश्चित्रहेतयः संपदान्विताः ॥ ४७ ॥
प्रयाणतूर्यसंघातं नादपूरितगह्वरम् । सोत्साहं च दापयित्वा प्रस्थितौ रघुनन्दनौ ॥ ४८ ॥
बहुले मार्गशीर्षस्य पंचम्यामुदिते रवौ । सोत्साहैः शकुनैरेभिस्तेषां ज्ञेयं प्रयाणकम् ॥ ४९ ॥
दक्षिणावर्त्तनिर्धूमज्वाला रम्यस्वनः शिखी । परमालंकृता नारी सुरभिप्रेरकोऽनिलः ॥ ५० ॥
निर्ग्रन्थसंयतश्छत्रं गंभीरं वाजिहेषितम् । घंटानिश्वनितं कान्तं कलशो दधिपूरितः ॥ ५१ ॥
उत्किरन्नितरां दृष्टो वामतो गोमयं नवं । वायसो विस्फुरत्पक्षो निर्मुक्तमधुरस्वरः ॥ ५२ ॥
भेरीशंखरवः सिद्धिर्जय नन्द व्रज द्रुतम् । निर्विघ्नमिति शब्दाश्च तेषां मंगलमुद्ययुः ॥ ५३ ॥
चतुर्दिग्भ्यः समायातैः पूर्यमाणो नभश्चरैः । सुग्रीवो गंतुमुद्युक्तः सितपक्षविधूपमः ॥ ५४ ॥
नानायानविमानास्ते नानावाहनकेतनाः । व्रजंतो व्योम्नि वेगेन बभुः खेचरपुंगवाः ॥ ५५ ॥
किष्किंधाधिपतिर्वातिः शल्यो दुर्मर्षणो नलः । नीलः कालः सुषेणश्च कुमुदाद्यास्तथाः नृपाः ५६
एते ध्वजोपरिन्यस्तमहाभासुरवानराः । ग्रसमाना इवाकाशं प्रवृत्ताः सुमहाबलाः ॥ ५७ ॥
रेजे विराधितस्यापि हारो निर्झरभासुरः । जांबवस्य महावृक्षो व्याघ्रो सिंहरवस्य च ॥ ५८ ॥
वारणो मेघकान्तस्य शेषाणामन्वयागताः । ध्वजेषु चिह्नतां याता भावाश्छत्रेषु चोज्वलाः ॥५९॥

तेषां बभूव तेजस्वी भूतनादः पुरस्सरः । लोकपालोपमस्तस्य स्थितः पश्चान्मरुत्सुतः ॥ ६० ॥
वृताः सामंतचक्रेण यथास्वं परमौजसः । लंकां प्रति व्रजन्तस्ते रेजुः संजातसम्मदाः ॥ ६१ ॥
सुकेशतनयाः पूर्वं लंकां माल्यादयो यथा । विमानशिखरारूढाश्चेलुः पद्मादयो नृपाः ॥ ६२ ॥
पार्श्वस्थः पद्मनाभस्य विराधितनभश्चरः । पृष्ठतो जांववस्तस्थौ सचिवैरान्वितो निजैः ॥ ६३ ॥
वामे भुजे सुषेणश्च सुग्रीवो दक्षिणे स्थितः । निमेषेण च संप्राप्ता वेलंधरमहीधरम् ॥ ६४ ॥
वेलंधरपुरस्वामी समुद्रो नाम तत्र च । नलस्य परमं युद्धमातिथ्यं समुपानयन् ॥ ६५ ॥
ततो नलेन सस्पर्द्धं जित्वा निहतसैनिकः । बद्धो बाहुबलाढ्येन समुद्रः खेचरः परः ॥ ६६ ॥
संपूज्य च पुनर्मुक्तः पद्मनाभस्य शासने । स्थापितोऽवस्थिताश्चैते पुरे तत्र यथोचितं ॥ ६७ ॥
सत्यश्रीः कमला चैव गुणमाला तथापराः । रत्नचूला तथा कन्या समुद्रेण प्रमोदिना ॥ ६८ ॥
कल्पिताः पुरशोभाढ्याः योषिद्गुणविभूषिताः । लक्ष्मीधरकुमाराय सुरस्त्रीसमविभ्रमाः ॥ ६९ ॥
तत्रैकां रजनीं स्थित्वा सुवेलमचलं गताः । सुवेलनगरे तत्र सुवेलो नाम खेचरः ॥ ७० ॥
जित्वा तमपि संग्रामे हेलामात्रेण खेचराः । चिक्रीडुर्मुदितास्तत्र त्रिदशा इव नन्दने ॥ ७१ ॥
तत्राक्षयवतेरम्ये सुक्षेपाक्षेपितक्षपाः । अन्येद्युरुद्यता गन्तुं लंकां तेन सुविभ्रमाः ॥ ७२ ॥

तुंगप्राकारयुक्तां तां हेमसद्मसमाकुलाम् । कैलाशशिखिराकारैः पुंडरीकैर्विराजिताम् ॥ ७३ ॥
विचित्रैः कुट्टिमतलैरालोकेनावभासतीम् । पद्मोद्यानसमायुक्तां प्रपादिकृतिभूषणाम् ॥ ७४ ॥
चैत्यालयैरलंतुंगैर्नानावर्णसमुज्वलैः । विभूषितां पवित्रां च महेन्द्रनगरीसमाम् ॥ ७५ ॥
लंकां दृष्ट्वा समासन्नां सर्वे खेचरपुंगवाः । हंसद्वीपकृतावासा बभूवुः परमोदयाः ॥ ७६ ॥
युद्धे हंसरथं तत्र विजित्य सुमहाबलम् । रम्ये हंसपुरे क्रीडां चक्रुरिच्छानुगामिनीम् ॥ ७७ ॥
मुहुः प्रेषितदूतोयमद्य श्वो वा विशंसयम् । भामंडलः समायातीत्येवमाकांक्षयास्थिताः ॥ ७८ ॥
यं यं देशं विहितसुकृताः प्राणभाजः श्रयन्ते । तस्मिंस्तस्मिन्विजितरिपवो भोगसंगं भजन्ते ॥
नह्येतेषां परमजगतं किंचिदापद्युतानां । सर्वं तेषां भवति मनसि स्थापितं हस्तसक्तम् ॥ ७९ ॥
तस्माद्भोगं भुवनविकटं भोक्तुकामेन कृत्यः । श्लाघ्योधर्मो जिनवरमुखादुद्गतः सर्वसारः ॥
अस्तां तावत्क्रयपरिचितो भोगसंगोऽपि मोक्षम् । धर्मादस्माद्व्रजति रवितोऽप्युज्वलं भव्यलोकः ८०

इत्यार्षे रविषेणाचार्यप्रोक्ते पद्मपुराणे लंकाप्रस्थानं नाम चतुःपंचाशत्तमं पर्व ॥ ५४ ॥

# अथ पञ्चपञ्चाशत्तमं पर्व ।

अथाभ्यर्णस्थितं ज्ञात्वा प्रतिसैन्यबलं पुरु । युगान्तांभोधिवेलेव लंका क्षोभमुपागमत् ॥ १ ॥
संभ्रान्तमानसः किंचित्कोपमाप दशाननः । चक्रे रणकथां लोको वृंदबन्धव्यवस्थितः ॥ २ ॥
महार्णवरवा भेर्यस्ताडिताः सुभयावहाः । तूर्यशंखस्वनस्तुंगो बभ्राम गगनांगणे ॥ ३ ॥
रणभेरीनिनादेन परं प्रमुदिता भटाः । सन्नद्धा रावणं तेन प्राप्ता स्वामिहितैषिणः ॥ ४ ॥
मारीचोऽमलचन्द्रश्च भास्करः स्यन्दनो विभुः । तथा हस्तप्रहस्ताद्याः सन्नद्धाः स्वामिनं श्रिताः ५
अथ लंकेश्वरं वीरं संग्रामाय समुद्यतम् । विभीषणोऽभ्युपागम्य प्रणम्य रचितांजलिः ॥ ६ ॥
शास्त्रानुगतमत्यन्तम् शिष्टानामतिसम्मतम् । आयत्यां च तदात्वे च हितं स्वस्य जनस्य च ॥७॥
शिवं सौम्याननो वाक्यं पदवाक्यविशारदः । प्रमाणकोविदो धीरः प्रशान्तमिदमब्रवीत् ॥ ८ ॥
विस्तीर्णा प्रवरा संपन्महेन्द्रस्येव ते प्रभोः । स्थिता च रोदसी व्याप्य कीर्तिः कुन्ददलामला ॥९॥
स्त्रीहेतोः क्षणमात्रेण सेयं मागाः परिक्षयम् । स्वामिन् संध्याभ्ररेखेव प्रसीद परमेश्वर ॥ १० ॥
क्षिप्रं समर्प्यतां सीता तव किं कार्यमेतया । दृश्यते न च दोषोऽत्र प्रस्पष्टः केवलो गुणः ॥११॥

सुखोदधौ निमग्नस्त्वं स्वस्थस्तिष्ठ विचक्षण । अनवद्यो महाभोगस्तवात्मीयं समंततः ॥ १२ ॥
समाने जानकी तस्मिन् पद्मनाभे नियुज्यताम् । निजः प्रकृतिसम्बन्धः सर्वथैव प्रशस्यते ॥१३॥
श्रुत्वा तदिन्द्रजिद्वाक्यं जगाद पितृचित्तवित् । स्वभावात्यन्तमानाढ्यमागमप्रतिकूलनम् ॥१४॥
साधो केनासि पृष्टस्त्वं कोऽधिकारोऽपि वा तव । येनैवं भाषसे वाक्यमुन्मत्तगदितोपमम् ॥१५॥
अत्यन्तं यद्यधीरस्त्वं भीरुश्च क्लीवमानसः । स्ववेश्मविवरे स्वस्थस्तिष्ठ किं तव भाषितैः ॥१६॥
यदर्थं मत्तमातंगमहावृन्दांधकारिणि । पतद्विविधशस्त्रौघे संग्रामेऽत्यंतभीषणे ॥ १७ ॥
हत्वा शत्रून् समुद्वृत्तास्तीक्ष्णया खड्गधारया । भुजेनोपार्जते लक्ष्मीः सुकृताद्वीरसुन्दरीः ॥१८ ॥
सुदर्लभामिदं प्राप्य तत्स्त्रीरत्नमनुत्तमम् । मूढवन्मुंचते कस्मात्त्वया व्यर्थमुदाहृतम् ॥ १९ ॥
ततो विभीषणोऽवोचदितिनिर्भर्त्सनोद्यतः । पुत्रनामासि शत्रुस्त्वमस्य दुस्थितचेतसः ॥ २० ॥
महाशीतपरीतस्त्वमजानन् हितमात्मनः । अन्यचिन्तानुरोधेन हिमवारिणि मज्जसि ॥ २१ ॥
उद्गतं भवने वह्निं शुष्कैः पूरयसीन्धनैः । अहो मोहग्रहार्तस्य विपरीतं तवेहितम् ॥ २२ ॥
जांबूनदमयी यावत्सप्राकारविमानिका । लक्ष्मणेन शरैस्तीक्ष्णैर्लंका न परिचूर्ण्यते ॥ २३ ॥
तावन्नृपसुतां साध्वीं पद्माय स्थिरचेतसे । क्षेमाय सर्वलोकस्य युक्तमर्पयितुं द्रुतम् ॥ २४ ॥

नैषा सीता समानीता पित्रा तव कुबुद्धिना । रक्षोभोगिविलं लंकामेषानीता विषौषधिः ॥ २५ ॥
सुमित्रानंदनं क्रुद्धं तं लक्ष्मीधरपुंगवम् । सिंहं रणमुखे शक्ता न यूयं व्यूहितुं गताः ॥ २६ ॥
अर्णवाह्वं धनुर्यस्य यस्यादित्यमुखाः शराः । पक्षे भामंडलो यस्य स कथं जीयते जनैः ॥ २७ ॥
ये तस्य प्रणतास्तुंगाः खेचराणां महाधिपाः । महेन्द्रा मलयास्तीराः श्रीपर्वततनूरुहाः ॥ २८ ॥
किष्किन्धास्त्रिपुरा रत्नद्वीपवेलंधरालकाः । कैलीकिला खातिलका संध्याह्वाः हैहयास्तथा ॥२९॥
प्राग्भारदधिवक्त्राश्च तथान्ये सुमहाबलाः । विद्याविभवसंपन्नास्ते तु विद्याधरा न किम् ॥३०॥
एवं प्रवदमानं तं क्रोधप्रेरितमानसः । उत्खाय रावणः खड्गमुद्गतो हन्तुमुद्यतः ॥ ३१ ॥
तेनापि कोपवश्येन दृष्टान्तेनोपदेशने । उन्मूलितः प्रचण्डेन स्तंभो वज्रमयो महान् ॥ ३२ ॥
युद्धार्थमुद्गतावेतौ भ्रातरावुग्रतेजसौ । सचिवैर्वारितौ कृच्छाद्गतौ स्वं स्वं निवेशनम् ॥ ३३ ॥
कुंभकर्णेन्द्राजिन्मुख्यैरेतैः प्रत्यायितस्ततः । जगाद रावणो विभ्रन्मानसं पौरुषाश्रयम् ॥ ३४ ॥
आश्रयस्य इव स्वस्य स्थानस्याहिततत्परः । दुरात्मा मत्पुरीतोऽयं परिनिःक्रामतु द्रुतम् ॥३५॥
अनर्थोद्यतचित्तेन स्थितेन किमिहामुना । स्वांगेनापि न मे कृत्यं प्रतिकूलप्रवृत्तिना ॥ ३६ ॥
तिष्ठन्तमिह मृत्युं चेदेतकं न नयाम्यहम् । ततो रावण एवाहम् न भवामि विसंशयम् ॥ ३७ ॥

श्रीरत्नश्रवसः पुत्रः सोप्यहं न भवामि किम् । इत्युक्त्वा निर्ययौ मानी लंकातोऽथ विभीषणः ॥
साग्राभिश्चारुशस्त्राभिः त्रिंशद्भिः परिवारितः । अक्षौहिणीभिरुद्युक्तो गंतुं पद्मस्य संश्रयम् ॥३९॥
विद्युद्घनेभवज्रेन्द्रप्रचण्डचपलाभिधाः । उद्धताशनिसंघाताः कालाद्याश्च महाबलाः ॥ ४० ॥
शूराः परमसामन्ता विभीषणसमाश्रयाः । सान्तःपुरा ससर्वस्वा नानाशस्त्रविराजिताः ॥ ४१ ॥
व्रजन्तो वाहनैश्चित्रैश्छादयित्वा नभस्थलम् । परिच्छदसमायुक्ताः हंसद्वीपं समागताः ॥ ४२ ॥
द्वीपस्य तस्य पर्यन्ते सुमनोज्ञे ततस्तटे । ते सरिच्चुंबिते तस्थुः सुरा नन्दीश्वरे यथा ॥ ४३ ॥
विभीषणागमे जाते जातो वानरिणां महान् । हिमागमे दरिद्राणामिवाकंपः समंततः ॥ ४४ ॥
समुद्रावर्तभृत्सूर्य—हासं लक्ष्मीभृदैक्षत । वज्रावर्तं धनुः पद्मः परामृषमुदादारः ॥ ४५ ॥
अमंत्रयच्च संभूय मंत्रिणः स्वैरमाकुलाः । सिंहादिभमिव त्रस्तं वृन्दबन्धमगाद्बलम् ॥ ४६ ॥
युवा विभीषणेनाथ दंडपाणिर्विचक्षणः । प्रेषितः पद्मनाथस्य सकाशं मधुराक्षरः ॥ ४७ ॥
सभायामुपविष्टोसौ कृतप्रणतिराहृतः । निजगादानुपूर्वेण विरोधं भ्रातृसंभवम् ॥ ४८ ॥
इति चावेदयन्नाथ तव पद्म विभीषणः । पादौ विज्ञापयत्येवं धर्मकार्यसमुद्यतः ॥ ४९ ॥
भवन्तं शरणं भक्तः प्राप्तोऽहं श्रितवत्सल । आज्ञादानेन मे तस्मात्प्रसादं कर्तुमर्हसि ॥ ५० ॥

प्रदेशान्तरमेतस्मिन् प्रतीहारेण भाषिते । सन्मंत्रो मंत्रिभिः सार्द्धं पद्मस्यैवमजायत ॥ ५१ ॥
मतिकान्तोऽब्रवीत्पद्मं कदाचिच्छद्मनैषकः । प्रेषितः स्याद्दशास्येन विचित्रं हि नृपेहितम् ॥५२॥
परस्पराभिघाताद्वा कलुषत्वमुपागतम् । प्रसादं पुनरप्येति कुलं जलमिव ध्रुवम् ॥ ५३ ॥
ततो मतिसमुद्रेण जगदे मतिशालिना । विरोधो हि तयोर्जातः श्रूयते जनवक्रतः ॥ ५४ ॥
धर्मकक्षो महानीतिः शास्त्रांबुक्षालिताशयः । अनुग्रहपरो नित्यं श्रूयते हि विभीषणः ॥ ५५ ॥
सोदर्यं कारणं नात्र कर्महेतुः पृथक् पृथक् । सततं तत्प्रभावेन स्थिता जगति चित्रता ॥ ५६ ॥
प्रकृतेऽस्मिन् त्वमाख्यानं श्रुतौ कुरुत नैमिषे । गिरिगोभूतिनामानावभूतां वटुकौ किल ॥५७॥
तास्मिंश्च सूर्यदेवस्य राज्ञी नाम्ना मतिप्रिया । अददाद् व्रतकं ताभ्यामिदं सुकृतवांच्छया ॥५८॥
ओदनच्छादिते हेमपूर्णे पृथुकपालिके । गिरिः सुवर्णमालोक्य लोभादितरमक्षणोत् ॥ ५९ ॥
अन्यच्च खलु कौशाम्ब्यां वणिग्नाम्ना वृहद्घनः । तद्भार्या कुरुविंदाख्या तस्य पुत्रौ बभूवतुः ६०
अहिदेवमहीदेवौ तौ मृते जनके गतौ । समुद्रे ( सुधनौ ) यानपात्रेण विभवच्छेदभीरुकौ ॥६१॥
सर्वभाण्डेन तौ रत्नमेकमानयतां परम् । यस्य तज्जायते हस्ते स जिघांसति हीतरम् ॥ ६२ ॥
परस्परं च दुश्चिन्तां तौ विवेद्य समं गतौ । मात्रे चानीय तद्रत्नं विरागाभ्यां समर्प्पितम् ॥६३॥

माता विषेण तौ हन्तुमैच्छद्बोधमिता पुनः । कालिंद्यां तैर्विरक्तैस्तद्रत्नं क्षिप्तं झषोऽगिलत् ॥६४॥
आनायिकगृहीतोऽसौ विक्रीतस्तद्गृहे पुनः । ततस्तयोः स्वसा मत्स्यं छिंदाना रत्नमैक्षत ॥६५॥
मातरं भ्रातरौ चैषा विष्यान्कर्तुं ततोऽलषत् । लोभमोहप्रभावेन स्नेहाच्च शममागतः ॥ ६६ ॥
ग्रावा (ग्राव्णा) निश्चूर्ण्य तद्रत्नं ज्ञाताहूताः परस्परम् । संसारभावनिर्विण्णाः समस्तास्ते प्रवव्रजुः ॥
तस्माद्द्रव्यादिलोभेन भ्रात्रादीनामपि स्फुटम् । संसारे जायते वैरं यौनबंधो न कारणम् ॥६८॥
दृश्यते वैरमेतस्मिन् दैवयोगात्पुनः समः । गोभूतिः सोदरो लोभाद्गिरिणा हत एव सः ॥६९॥
तस्मात्प्रेषितदूतोऽयं महाबुद्धिर्विभीषणः । आनीयतां न योनीयदृष्टान्तोऽत्र परिस्फुटः ॥ ७० ॥
ततो दंडिनमाहूय जगुरेत्वति तेन च । गत्वा निवेदिते प्राप्तो पद्मं रत्नश्रवःसुतः ॥ ७१ ॥
ऊचे विभीषणो नत्वा प्रभुः त्वमिह जन्मनि । परत्र जिननाथश्च ममायं निश्चयः प्रभो ॥ ७२ ॥
समये हि कृते तेन प्रोचे रामो विसंशयम् । योजयामि त्वकं लंकां भव संदेहवर्जितः ॥ ७३ ॥
विभीषणसमायोगे वर्त्तते यावदुत्सवः । तावत्सिद्धमहाविद्यः प्राप्तः पुष्पवतीसुतः ॥ ७४ ॥
प्रभामंडलमायातं विजयार्द्धखगाधिपम् । पद्मादयः परं दृष्ट्वा समानर्चुः प्रभाविणम् ॥ ७५ ॥
निर्वाह्य दिवसानष्टौ नगरे हंसनामनि । सम्यग्निश्चितकर्तव्या लंकाभिमुखमव्रजन् ॥ ७६ ॥

स्यंदनैर्विविधैर्यानैः स्थूरीपृष्टैर्मरुज्जवैः । प्रावृषेण्यघनच्छायैरनेकपकदम्बकैः ॥ ७७ ॥
अनुरागोत्कटैर्भृत्यैः वीरैः सन्नाहभूषणैः । ययुः खेचरसामंताः समंताच्छन्नपुष्कराः ॥ ७८ ॥
अग्रप्रयाणकन्यस्ताः प्रवीराः कपिकेतवः । संग्राममधरणीं प्रापुस्तद्योग्यत्वमुदाहृतम् ॥ ७९ ॥
विंशतिर्योजनान्यस्या विस्तारः(रुन्द्रता)परिकीर्तितः । आयामस्य तु नैवास्ति परिच्छेदो रणाक्षितेः ॥
नानायुधविचिह्नानां सहस्रैरुपलक्षिता । मृत्युचक्रमणिक्ष्मेव समवर्त्तत युद्धभूः ॥ ८१ ॥
ततो नागाश्वसिंहानां दुंदुभीनां च निःस्वनम् । श्रुत्वा हर्षं दशास्योगाद्विरागतरणोत्सवः ॥८२॥
आज्ञादानेन चाशेषान्सामंतान्समवाभवन् । नहि ते वंचितास्तेन युद्धानंदेन जातुचित् ॥ ८३ ॥
भास्कराभाः पयोदाह्वाः कांचना व्योमवल्लभाः । गंधर्वगीतनगराः कंपनाः शिवमंदिराः ॥८४॥
सूर्योदयामृताभिख्याः शोभासिंहपुराभिधाः । नृत्यगीतपुरालक्ष्मीकिन्नरस्वनसंज्ञकाः ॥ ८५ ॥
बहुनादा महाशैलाश्चक्राह्वा सुरनूपुराः । श्रीमन्तो मलयानन्दाः श्रीगुहा श्रीमनोहराः ॥ ८६ ॥
रिपुंजयाः शशिस्थानाः मार्तंडाभविशालकाः । ज्योतिर्दंडाः परिक्षोदा अश्वरत्नपराजयाः ॥८७॥
एवमाद्याः पुराभिख्याः महाखेचरपार्थिवाः । सचिवैरन्विताः प्रीता दशाननमुपागताः ॥ ८८ ॥
अस्त्रवाहनसन्नाहप्रभृतिप्रतिपत्तिभिः । रावणोऽपूजयद्भूयः सुत्रामा त्रिदशानिव ॥ ८९ ॥

अक्षौहिणीसहस्राणि चत्वारि त्रिककुप्प्रभोः । स्वशक्तिजनितं प्रोक्तं बलस्य प्रमितं बुधैः ॥९०॥
एकमक्षौहिणीनां तु किष्किन्धनगरप्रभोः । सहस्रं साग्रमेकं तु भामण्डलविभोरपि ॥ ९१ ॥
सुग्रीवः सचिवैः साकं तथा पुष्पवतीसुतः । आवृत्य परमोद्युक्तैस्तस्थतुः पद्मलक्ष्मणौ ॥ ९२ ॥
अनेकगोत्रचरणा नानाजात्युपलक्षणाः । नानागुणक्रियाख्याता नानाशब्दा नभश्चराः ॥ ९३ ॥

पुण्यानुभावेन महानराणां भवन्ति शत्रोरपि पार्थिवाः स्वाः ।
कुपुण्यभाजां तु चिरं स्वशक्ता विनाशकाले परतां भजन्ते ॥ ९४ ॥
भ्राता ममायं सुहृदेष वश्यो ममैष बंधुः सुखदः सदेति ।
संसारवैचित्र्यविदा नरेण नैतन्मनीषारविणा विचिन्त्या ॥ ९५ ॥

इत्यार्षे रविषेणाचार्यप्रोक्ते पद्मपुराणे विभीषणसमागमाभिधानं नाम पंचपंचाशत्तमं पर्व ॥ ५५ ॥

# अथ षट् पञ्चाशत्तमं पर्व ।

मगधेन्द्रस्ततोऽपृच्छत्पुनरेवं गणेश्वरम् । अक्षोहिण्याः प्रमाणं मे वक्तुमर्हसि सन्मुने ॥ १ ॥
शक्रभूतिरथागादीच्छृणु श्रेणिक पार्थिव । अक्षोहिण्याः प्रमाणं ते संक्षेपेण वदाम्यहम् ॥ २ ॥

अष्टाविमे गताः ख्यातिं प्रकारा गणनाकृताः । चतुर्णां भेदमंगानां कीर्त्यमानं विबोध्यताम् ३
पत्तिः प्रथमभेदोऽत्र तथा सेना प्रकीर्तिता । सेनामुखं ततो गुल्म वाहिनी पृतना चमूः ॥ ४ ॥
अष्टमोऽनीकनीसंज्ञस्तत्र भेदो बुधैः स्मृतः । यथा भवन्त्यमी भेदास्तथेदानीं वदामि ते ॥ ५ ॥
एको रथो गजश्चैकस्तथा पंच पदातयः । त्रयस्तुरंगमाः सैषा पत्तिरित्यभिधीयते ॥ ६ ॥
पत्तिस्त्रिगुणिता सेना तिस्रः सेनामुखं च ताः । सेनामुखानि च त्रीणि गुल्ममित्यनुकीर्त्यते ॥७॥
वाहिनी त्रीणि गुल्मानि पृतना वाहिनीत्रयं । चमूस्त्रिपृतना ज्ञेया चमूत्रयमनीकिनी ॥ ८ ॥
अनीकिन्यो दश प्रोक्ता प्राज्ञैरक्षोहिणीति सा । तत्रांगानां पृथक् संख्यां चतुर्णां कथयामि ते ९
अक्षोहिण्यां प्रकीर्त्यानि रथानां सूर्यवर्चसाम् । एकविंशतिसंख्यानि सहस्राणि विचक्षणैः १०
अष्टौ शतानि सप्तत्या सहितान्यपराणि च । गजानां कथितं ज्ञेयं संख्यानं रथसंख्यया ॥११॥
एकलक्षं सहस्राणि नव, पंचाशदन्वितम् । शतत्रयं च विज्ञेयमक्षोहिण्याः पदातयः ॥ १२ ॥
पंचषष्टिसहस्राणि षट्शती च दशोत्तरा । अक्षोहिण्यामियं संख्या वाजिनां परिकीर्तिता ॥१३॥
एवं संख्यबलोपेतं विज्ञायापि दशाननम् । बलं कैष्किंधमभ्यार तं भयेन विवर्जितम् ॥ १४ ॥
तस्मिन्नासन्नतां प्राप्ते पद्मनाभप्रभोर्बले । जनानामित्यभूद्वाणी नानापक्षागतात्मनाम् ॥ १५ ॥

पश्यतां वरयानोडुगणेशः शास्त्रधीकरः । दशास्यचन्द्रमाश्छन्नः परस्त्रीच्छाबलाहकैः ॥ १६ ॥
अष्टादश सहस्राणि पत्नीनां यस्य सुत्विषाम् । सीतायाः पश्यतैकस्याः कृते तं शोकसंचितम् ॥
रक्षसां वानराणां च कस्य नाम क्षयो भवेत् । एवं बभूव संदेहः सैन्यद्वितयवर्तिनां ॥ १८ ॥
बलेस्मिन्मारदेशीयो मारुतिर्नाम भीषणः । विस्फुरच्छौर्यतिग्मांशुः सूर्यतुल्योत्र शक्रजित् ॥१९॥
सागरोदारमत्युग्रं साक्षादितिबलोपमम् । साधनं रावणस्येति नराः केचिद्बभाषिरे ॥ २० ॥
अंतरं विच्छशूरस्याशूरस्य च न जातुचित् । न तज्ज्ञातमतिक्रान्तं किन्नबोधीरबोधनम् (?) ॥२१॥
यद्वृत्तं दण्डकाख्यस्य वनस्य महतान्तरे । अत्यन्तदारुणं युद्धं लक्ष्मणस्य महात्मनः ॥ २२ ॥
चन्द्रोदरसुतं प्राप्य तुल्यं स्वांगेन केवलम् । मृत्योरातिथ्यमानीतो येनासौ खरदूषणः ॥ २३ ॥
अतिप्रकाटवीर्यस्य लक्ष्मीनिलयवक्षसः । भवतां तस्य न ज्ञातं किं वा बलमनुत्तमम् ॥ २४ ॥
एकेन वायुपुत्रेण निर्भर्त्स्य मयसंभवाम् । रामपत्नीं समाश्वस्य परार्थाशक्तवृत्तिना ॥ २५ ॥
रावणस्य महासैन्यं विजित्यात्यन्तदारुणम् । लंकापुरी परिध्वस्ता भग्नप्राकारतोरणा ॥ २६ ॥
एवं विदिततत्वानां स्फुटं वचसि निर्गतेः । जगाद प्रहसन् वाक्यं सुवक्त्रो गर्वनिर्भरः ॥ २७ ॥
गोष्पदप्रमितं क्वैतद्बलं वानरलक्ष्मणम् । क्व चैतत्सागरोदारं सैन्यं त्रैकूटमुद्धतम् ॥ २८ ॥

इंद्रेण साधितो यो न पतिर्विद्याभृतामयम् । एकस्य चापिनः साध्यो रावणः संजायते ॥ २९ ॥
सर्वतेजस्विमूर्धानं विभोरस्याधितिष्ठतः । श्रोतुं नामापि कः शक्तश्चेतनश्चक्रवर्तिनः ॥ ३० ॥
सुपीवरभुजो वीरो दुर्द्धरस्त्रिदशैरपि । भुवने कस्य न ज्ञातः कुंभकर्णो महाबलः ॥ ३१ ॥
यस्त्रिशूलधरः संख्ये कालाग्निरिव दीप्यते । सोऽयं विजीयते केन जगदुत्कटविक्रमः ॥ ३२ ॥
यस्यातपत्रमालोक्य शरदिन्दुमिवोद्गतम् । शत्रुसैन्यतमोध्वंसमुपयाति समंततः ॥ ३३ ॥
उदात्ततेजसस्तस्य स्थातुं यस्याग्रतोऽपि कः । समर्थपुरुषो लोके निजजीवितनिस्पृहः ॥ ३४ ॥
इति बहुविधवाचां द्वेषरागाश्रितानाम् । प्रकटितनिजचित्तप्रार्थनासंकटानाम् ॥
द्वितयबलजनानां दृष्टनानाक्रियाणाम् । अजनि जनितशंको भावमार्गो विचित्रः ॥ ३५ ॥
चरितजननकालाऽभ्यस्तरागेतराणाम् । भवमपरिमितानामप्ययं चित्तमार्गः ॥
भवति खलु तथैव व्यक्तमेतं हि लोकम् । स्वचरितरविरेव प्रेरयत्यात्मकार्ये ॥ ३६ ॥

इत्यार्षे रविषेणाचार्यप्रोक्ते पद्मपुराणे–उभयबलप्रमाणविधानं नाम षट्पंचाशत्तमं पर्व ॥ ५६ ॥

# अथ सप्तपञ्चाशत्तमं पर्व ।

परसैन्यसमाश्लेषममृष्यंतोऽथ मानवाः । उद्गच्छद्दर्पसंक्षोभ्या हृष्टाः संनद्धुमुद्यताः ॥ १ ॥
उद्वेज्य दयिताबाहुपाशं कृच्छ्रेण केचन । संक्षुभ्य सिंहसंकाशा लंकातो निर्ययुर्भटाः ॥ २ ॥
वीरपत्नी प्रियं काचिदालिंग्यैवमभाषत । श्रुतानेकमहायोधं परमाहवविभ्रमं ॥ ३ ॥
संग्रामे संगते पृष्टे यदि नाथागमिष्यसि । दुर्यशस्तदहं प्राणान्मोक्ष्यामि श्रुतिमात्रतः ॥ ४ ॥
किंकराणामतः पत्न्यो वीराणामपि गर्विताः । धिक्शब्दं मे प्रदास्यन्ति किं नु कष्टमतः परम् ॥५॥
रणप्रत्यागतं धीरमुरोव्रणविभूषणम् । विशीर्णकवचं प्राप्तं जयलब्धभटस्तवम् ॥ ६ ॥
द्रक्ष्यामि यदि धन्याहं भवन्तमविकत्थनम् । जिनेन्द्रानर्चयिष्यामि ततो जाम्बूनदाम्बुजैः ॥७॥
आभिमुख्यगतं मृत्युं वरं प्राप्ता महाभटाः । पराङ्मुखा न जीवन्तो धिक्शब्दमालिनीकृताः ॥८॥
स्तनद्वयसमुत्पीडं काचिदालिंग्य मानवम् । जगाद पुनरेवं सा ग्रहीष्यामि जयान्वितम् ॥ ९ ॥
भवद्वक्षस्थलस्त्यानरक्तचन्दनचर्चया । परां स्तनद्वयं शोभां मम यास्यति सर्वथा ॥ १० ॥
प्रातिवेश्मिकयोध्यानामपि पत्नीं जितप्रियाम् । न सहे कुत एवेश साहिष्ये त्वां विनिर्जितम् ॥११॥

काचिज्जगाद ते नाथ हृतसंव्रणभूषणम् । पुराणं रूडकं जातं ततो नैवाति शोभसे ॥ १२ ॥
अतो नवव्रणन्यस्तस्तनमंडलसौख्यदम् । द्रक्ष्येऽहं वीरपत्नीभिर्विकाशिमुखपंकजैः ॥ १३ ॥
काचिदूचे यथैतत्ते वदनं चुंबितं मया । यथा वक्षसि संजातं चुंबिष्यामि व्रणाननम् ॥ १४ ॥
अनतिप्रौढिका काचिद्वधूरभिनवोढिका । संग्रामे प्रोद्यते नाथे प्रौढत्वं समुपागता ॥ १५ ॥
चिराय रक्षितं मानं काचिन्नाथे रणोन्मुखे । तत्याजैकपदे कान्ता कांतसंश्लेषतत्परा ॥ १६ ॥
अवितृप्तभटी काचिद्भर्तृवक्त्रासवं पपौ । तथापि मदनं प्राप्ता रणयोग्यमासिक्षयत् ॥ १७ ॥
काचिदुत्तानितुं भर्तुश्चदनं वनजेक्षणा । नैमिषोज्झितमद्राक्षीत्सुचिरं कृतचुंबना ॥ १८ ॥
काचिद्वक्षस्तटे भर्तुः करजव्रणमुज्वलम् । भविष्यच्छस्त्रपातस्य सत्यंकारमिवार्पयत् ॥ १९ ॥
इति संजातचेष्टासु दयितासु यथायथम् । भटानामित्यभूद्वाणी महासंग्रामशालिनाम् ॥ २० ॥
नरास्ते दयिते श्लाघ्या ये गता रणमस्तकम् । त्यजन्त्यभिमुखा जीवं शत्रूणां लब्धकीर्तयः ॥२१॥
उद्भिन्नदन्तिदन्ताग्रदोलादुर्लडितं भटाः । कुर्वन्ति न विना पुण्यैः शत्रुभिर्घोषितस्तवाः ॥ २२ ॥
गजदंताग्रभिन्नस्य कुंभदारुणकारिणः । यत्सुखं नरसिंहस्य तत्कः कथयितुं क्षमः ॥ २३ ॥
त्रस्तं शरणमायातं दत्तपृष्ठं च्युतायुधम् । परित्यज्य पतिष्यामो दयिते शत्रुमस्तके ॥ २४ ॥

भवत्या वांछितं कृत्वा प्रत्यागत्य रणाजिरात् । प्रापयिष्ये समाश्लेषं भवन्तीं तोषधारिणीम् २५
एवमादिभिरालापैः परिसान्त्व्य निजप्रियाः । वीरा निर्गन्तुमुद्युक्ताः संख्यसौख्यसमुत्सुकाः २६
यियासोः शस्त्रहस्तस्य कंठार्पितभुजद्वया । काचिद्दोलायनं चक्रे गजेन्द्रस्येव पद्मिनी ॥ २७ ॥
काचित्सन्नाहरुद्धस्य पत्युर्देहस्य संगमम् । अप्राप्य परमं प्राप्ता पीडामंकमपि श्रिता ॥ २८ ॥
अर्द्धबाहुलिकां दृष्ट्वा काचित्कांतस्य वक्षसि । ईर्षारसेन संस्पृष्टा किंचित्कुंचितलोचना ॥ २९ ॥
अर्द्धसन्नाहनामायं मया परिहितः प्रिये । इति पुंशब्दयोगेन पुनस्तोषमुपागता ॥ ३० ॥
ताम्बूलप्रार्थनव्यंगात्क्वचित्प्राप्यप्रियाधरम् । अमुंचत्सुखिनी कृत्वा कृत्वा व्रणविभूषितम् ॥३१॥
काचिन्निवर्त्यमानापि प्रियेण रणकांक्षिणा । सन्नाहकंठसूत्रस्य बन्धव्याजेन गच्छति ॥ ३२ ॥
एकतो दयितादृष्टिरन्यतः तूर्यनिस्वनः । इति हेतुद्वयादोलामारूढं भटमानसम् ॥ ३३ ॥
स्त्रीणां परिहरन्तीनां वाष्पपातममंगलम् । सत्यामपि दिदृक्षायां निमेषो नाभवत् दृशाम् ॥३४॥
अगृहीत्वैव सन्नाहं केचित्त्वरितमानसाः । यथालब्धायुधं योधा निर्ययुर्दर्पशालिनः ॥ ३५ ॥
रणसंजाततोषेण शरीरे पुष्टिमागते । कस्यचिद्रणसौंडस्य वर्म मातिस्म नो निजम् ॥ ३६ ॥
श्रुत्वा परचमूतूर्यस्वनं कश्चिद्भटोत्तमः । चिररूढैर्व्रणैः रक्तं मुमोचोच्छ्वासविग्रहः ॥ ३७ ॥

पिनद्धं कस्यचिद्वर्म सुदृढं तोषहारिणः । वर्द्धमानं ततःशीघ्रं पुराणं कंटकायितम् ॥ ३८ ॥
विश्रब्धं कस्यचिज्जाया समाधानपरायणा । सारयन्ती मुहुस्तस्थौ शिरस्त्राणं सुभाषिता ॥३९॥
प्रियापरिमलं कश्चिद्दीयमानः स्ववक्षसः । कंटकं प्रति नो चक्रे मनः संग्रामलालसः ॥ ४० ॥
एवं विनिर्गता योधाः कृच्छ्रतः सांत्वितप्रियाः । आकुलीभूतचित्ताश्च शयनीयेषु ताः स्थिताः ॥४१॥
अथाग्रकीर्तिमाध्वीकरसास्वादनलालसौ । द्विरदस्यंदनारूढावसोढौ विरलस्वनौ ॥ ४२ ॥
प्रथमं निर्गतोदात्तप्रयाणे शौर्यशालिनौ । हस्तप्रहस्तनामानौ लंकातो निर्गतौ नृपौ ॥ ४३ ॥
अनापृच्छाऽपि तत्काले स्वामिनो राजते तयोः । दोषोऽपि हि गुणीभावं प्रस्तावे प्रतिपद्यते ४४
मारीचः सिंहजघ्राणः स्वयंभूः शंभुरुत्तमः । पृथुः पृथुबलोपेतश्चन्द्रार्कौ शुकसारणौ ॥ ४५ ॥
गजवीभत्सनामानौ वज्राक्ष्यो वज्रभृद्द्युतिः । गंभीरो निनदो नक्रो मकरः कुलिशस्वनः ॥४६॥
उग्रनादस्तथा सुंदः निकुंभकुंभशब्दितः । संध्याक्षो विभ्रमः क्रूरो माल्यवान्खरनिस्वनः ॥४७॥
जंबूमाली शिखावीरो दुर्द्धर्षश्च महाबलः । एते केसरिभिर्युक्तैः सामन्ता निर्ययू रथैः ॥ ४८ ॥
वज्रोदरोऽथ शक्राभः कृतान्तो विघटोदरः । महाशनिरवश्चन्द्रनखो मृत्युः सुभीषणः ॥ ४९ ॥
कुलिशोदरनामाच धूम्राक्षो मुदितस्तथा । विद्युज्जिह्वो महामाली कनकः क्रोधनध्वनिः ॥५०॥

क्षोभणो धुंधुरुद्धामा डिंडिडिंडिमडंबराः । प्रचंडो डमरश्चंडकुंडहालाहलादयः ॥ ५१ ॥
व्याघ्रयुक्तैरिमैस्तुंगै रथैरुद्धासिताम्बरैः । अहंयवो विनिर्याताः शत्रुविध्वंसबुद्धयः ॥ ५२ ॥
विद्याकौशिकविख्यातिः सर्पबाहुर्महाद्युतिः । शंखप्रशंखनामानौ रागो भिन्नांजनप्रभौ ॥ ५३ ॥
पुष्पचूडो महारक्तो घटास्त्रः पुष्पखेचरः । अनंगकुसुमः कामः कामावर्त्तस्मरायणौ ॥ ५४ ॥
कामाग्निः कामराशिश्च कनकाभः शिलीमुखः । सौम्यवक्त्रो महाकामो हेमगौरादयस्तथा ॥५५॥
एतेऽपि वातरंहोभी रथैर्युक्ततुरंगमैः । यथायथं विनिर्जग्मुरालयेभ्योरसद्धलाः ॥ ५६ ॥
कदंबविटपौ भीमो भीमनादो भयानकः । शार्दूलक्रीडितः सिंहश्चलांगो विद्युदंबुकः ॥ ५७ ॥
ह्लदनश्चपलश्चोलश्चलश्चंचलकादयः । गजादिभिरिमैर्युक्तैर्निर्ययुर्भास्वरै रथैः ॥ ५८ ॥
कियन्तः कथयिष्यन्ते नाम्ना प्राग्रहराः नराः । अध्यर्द्धपंचमीकोट्यः कुमाराणां स्मृता बुधैः ५९
विशुद्धराक्षसानूकाः कुमारास्तुल्यविक्रमाः । प्रख्यातयशसः सर्वे विज्ञेया गुणमंडनाः ॥ ६० ॥
आवृतास्ते समुद्युक्तैः कुमारैर्मारविभ्रमाः । बलिनो मेघवाहाद्याः कुमारेन्द्रा विनिर्ययुः ॥ ६१ ॥
अर्ककीर्तिसमो भूत्या दशाननमहाप्रियः । इंद्रजिन्निर्ययौ कान्तो जयंत इव धीरधीः ॥ ६२ ॥
त्रिमानमर्कसंकाशं नाम्ना ज्योतिःप्रभं महत् । कुंभकर्णः समारूढस्त्रिशूलास्त्रो विनिर्गतः ॥ ६३ ॥

मेरुशृंगप्रतीकाशं लोकत्रितयशब्दितम् । विमानं पुष्पकाभिख्यमारूढः शक्रविक्रमः ॥ ६४ ॥
संछाद्य रोदसी सैन्यैर्भास्वरायुधपाणिभिः । निष्क्रान्तो रावणस्तिग्मकिरणप्रतिमद्युतिः ॥ ६५ ॥
स्यंदनैर्वारणैः सिंहैर्वराहैः रुरुभिर्मृगैः । सृमरैर्विहगैश्चित्रैः सौरभेयैः क्रमेलकैः ॥ ६६ ॥
ययुभिर्महिषैरन्यैर्जलस्थलसमुद्भवैः । सामंता निर्ययुः शीघ्रं वाहनैर्बहुरूपकैः ॥ ६७ ॥
भामंडलं प्रतिक्रुद्धाः किष्किन्धाधिपतिं तथा । हिता राक्षसनाशाय निर्ययुः खेचराधिपाः ॥६८॥
अथ दक्षिणतो दृष्टा भयानकमहास्वनाः । प्रयाणवारणोद्युक्ता भल्लूकबद्धमंडलाः ॥ ६९ ॥
बद्धांधतमसा पक्षैर्गृद्धा विकृतनिश्वनाः । भ्राम्यन्ति गगने भीमाः कथयन्तो महाक्षयम् ॥७०॥
अन्येऽपि शकुनाः क्रूरं क्रन्दन्तो भयशंसिनः । बभूवुराकुलीभूता भौमा वैहायसास्तथा ॥ ७१ ॥
शौर्यातिगर्वसंमूढा विदन्तोऽप्यशुभानिमान् । महासैन्योद्धता योद्धुं रक्षोवर्गा विनिर्ययुः ॥७२॥

प्राप्ते काले कर्म्मणामानुरूप्याद्दातुं योग्यं तत्फलं निश्चयाप्यम् ।
शक्तो रोद्धुं नैव शक्रोऽपि लोके वार्तान्येषां केव वाङ्मात्रभाजाम् ॥ ७३ ॥
वीरा योद्धुं दत्तचित्ता महान्तो वाहारूढाः शस्त्रभाराजिहस्ताः ।
कृत्वावज्ञां वारकाणां समेषां यान्त्यप्युद्ग्राही रविं प्रत्यभीताः ॥ ७४ ॥

इत्यार्षे रविषेणाचार्यप्रोक्ते पद्मपुराणे रावणबलनिर्गमनं नाम सप्तपंचाशत्तमं पर्व ॥ ५७ ॥

# अथाष्टपंचाशत्तमं पर्व ।

आस्तृणद्वीक्ष्य तत्सैन्यमुद्वेलमिव सागरम् । नलनीलमरुत्पुत्रजांबवाद्याः सुखेचराः ॥ १ ॥
रामकार्यसमुद्युक्ताः परमोदारचेष्टिताः । महाद्विपयुतैर्दीप्तैः स्यंदनैर्निर्ययुर्वरैः ॥ २ ॥
सम्मानो जयमित्रश्च चन्द्राभो रतिवर्द्धनः । कुमुदावर्तसंज्ञश्च महेन्द्रो भानुमण्डलः ॥ ३ ॥
अनुद्धरो दृढरथः प्रीतिकंठो महाबलः । समुन्नतबलः सूर्यः ज्योतिः सर्वप्रियो बलः ॥ ४ ॥
सर्वसारश्च दुर्बुद्धिः सर्वदः सरभो भरः । अभृष्टो निर्विनष्टश्च संत्रासो विघ्नसूदनः ॥ ५ ॥
नादो वर्वरकः पापो लोलपाटनमंडलौ । संग्रामचपलाद्याश्च परमा खेचराधिपाः ॥ ६ ॥
शार्दूलसंगतैस्तुंगै रथैः परमसुन्दरैः । नानायुधधृताटोपा निर्जग्मुः पृथुतेजसः ॥ ७ ॥
प्रस्तरो हिमवान् भंगः प्रियरूपादयस्तथा । एते द्विपयुतैर्योद्धुं निर्ययुः सुमहारथाः ॥ ८ ॥
दुःप्रेक्षः पूर्णचन्द्रश्च विधिः सागरनिःस्वनः । प्रियविग्रहनामा च स्कन्दचन्दनपादपाः ॥ ९ ॥
चन्द्रांशुरप्रतीघातो महाभैरवकीर्तनः । दुष्टसिंहकटिः क्रुष्टः समाधिबहुलो हलः ॥ १० ॥
इन्द्रायुधो गतत्रासः संकटप्राहरादयः । एते हरियुतैस्तूर्णं सामन्ता निर्ययू रथैः ॥ ११ ॥

विद्युत्कर्णो बलः सीलः स्वपक्षरचनो घनः । सम्मेदो विचलः सालः कालः क्षितिवरोऽगदः १२
विकालो लोलकः कालिर्भंगश्चंडोर्मिरूर्जितः । तरंगास्तिलकः कीलः सुषेणस्तरलो बलिः ॥ १३ ॥
भीमो भीमरथो धर्मो मनोहरमुखः सुखः । प्रमत्तो मर्दको मत्तः सारो रत्नजटी शिवः ॥ १४ ॥
दूषणो भीषणः कोणः विघटाख्यो विराधितः । मेरू रणखनिःक्षेमः बेलाक्षेपी महाधरः ॥१५॥
नक्षत्रलुब्धसंज्ञश्च संग्रामो विजयो जयः । नक्षत्रमालकः क्षोदः तथातिविजयादयः ॥ १६ ॥
एते वाजियुतैः कान्तैर्मनोरथजवै रथैः । महासैनिकमध्यस्थैरध्यासत रणाजिरम् ॥ १७ ॥
विद्युद्वाहो मरुद्वाहुः सानुर्जलदवाहनः । रवियानः प्रचंडालिरिमेऽपि घनसन्निभैः ॥ १८ ॥
महारथवरैर्नानावाहनोद्भासितांबरैः । युद्धश्रद्धासमायुक्ता दधावुर्मारुतैः समाः ॥ १९ ॥
विमानमुत्तमाकारं नाम्ना रत्नप्रभं महत् । आरूढो यत्नवानस्थात्पद्मपक्षो विभीषणः ॥ २० ॥
युद्धावर्त्तो वसन्तश्च कांतः कौमुदनन्दनः । भूरिः कोलाहलो हेडो भावितः साधुवत्सलः ॥२१॥
अर्द्धचन्द्रो जिनप्रेमा सागरः सागरोपमः । मनोज्ञो जिनसंज्ञश्च तथा जिनमतादयः ॥ २२ ॥
नानावर्णविमानाग्रभूमिकास्थितमूर्त्तयः । दुर्द्धरा निर्ययुर्योद्धुं बद्धसन्नाहविग्रहाः ॥ २३ ॥
पद्मनाभः सुमित्राजः सुग्रीवो जनकात्मजः । एते हंसविमानस्था विरेजुर्गगनान्तरे ॥ २४ ॥

महाम्बुदप्रतीकाशा नानायानसमाश्रिताः । लंकाभिमुखमुद्युक्ता गंतुं खेचरपार्थिवाः ॥ २५ ॥
प्रलयलंबितांभोदवृंदनिर्घोषभैरवाः । शंखकोटिस्वनोन्मिश्रास्तूर्याणामुद्ययुः स्वनाः ॥ २६ ॥
भंभाभेर्यो मृदंगाश्च लंपाका धुंधुमंडुकाः । झम्लाम्लातकहक्काश्च हुंकारा दुंदुकाणकाः ॥ २७ ॥
झर्झरा हेकगुंजाश्च काहला दर्दुरादयः । समाहता महानादं मुमुचुः कर्णघूर्णकम् ॥ २८ ॥
वेणुनादाट्टहासाश्च ताराहलहलारवाः । ययुः सिंहद्विपस्वाना महिषस्यन्दनस्वनाः ॥ २९ ॥
क्रमेलकमहारावा निनादा मृगपक्षिणाम् । उत्तस्थुः पिहिताशेषाः शेषविष्टपनिःस्वनाः ॥ ३० ॥
तयोरन्योन्यमासंगे जाते परमसैन्ययोः । लोकः संशयमारूढः समस्तो जीवितं प्रति ॥ ३१ ॥
क्षोणी क्षोभं परं प्राप्ता विकंपितमहीधरा । प्रशोषं गंतुमारब्धः प्रक्षुब्धः क्षारसागरः ॥ ३२ ॥
सदर्पैर्निर्गतैर्योधैरसहैर्निजवर्गतः । दंतुरीभूतमत्युग्रं बलद्वयमलक्ष्यत ॥ ३३ ॥
चक्रक्रकचकुंतासिगदाशक्तिशिलीमुखैः । भिंडिमालादिभिश्चोग्रं प्रवृत्तं युद्धमेतयोः ॥ ३४ ॥
आह्वयन्तः सुसन्नद्धाः शस्त्रज्वलितबाहवः । समुत्पेतुर्भटाः शूराः परसैन्यं विवक्षवः ॥ ३५ ॥
अतिवेगसमुत्पाताः प्रविष्टाः शात्रवं बलम् । शस्त्रसंचारमार्गार्थमपसस्रुः पुनर्मनाक् ॥ ३६ ॥
लंकानिवासिभिर्योधैरुद्धतैरतिभूरिभिः । सिंहैरिव गजा भंगं नीता वानरपक्षिणः ॥ ३७ ॥

पुनरन्यैर्भटैः शीघ्रमसीदन्तः समुज्ज्वलाः । रक्षोयोधान्विनिर्जघ्नुर्भासुरा वानरध्वजाः ॥ ३८ ॥
भेद्यमानं बलं दृष्ट्वा राक्षसेन्द्रस्य सर्वतः । स्वामिरागसमाकृष्टौ महाबलसमावृतौ ॥ ३९ ॥
गजध्वजसमालक्ष्यौ गजस्यंदनवर्तिनौ । माभैष्टेति कृतस्वानौ परमोत्कटविग्रहौ ॥ ४० ॥
हस्तप्रहस्तसामंतावुत्थाय सुमहाजवौ । निन्यतुः परमं भंगं बलं वानरलक्ष्मणम् ॥ ४१ ॥
शाखामृगध्वजौ तावत्प्रतापं बिभ्रतौ परम् । क्रोडवारणसंवृत्तवाहव्यूढमहारथौ ॥ ४२ ॥
शौर्यगर्वाविवायुक्तशरीरौ परमद्युती । नलनीलौ परिक्रुद्धौ भीषणौ योद्धुमुद्यतौ ॥ ४३ ॥
ततो बहुविधैः शस्त्रैश्चिरं जाते महाहवे । क्रमाप्तसाधुनिस्वाने निपतद्भटसंकटे ॥ ४४ ॥
नलेनोत्पत्य हस्तो वा विह्वलो विरथीकृतः । प्रहस्त इव नीलेन कृतश्च गतजीवितः ॥ ४५ ॥
तावालोक्य ततो राजन् विपर्यस्तौ महीतले । विनायका बभूवैतद्वाहिनीयं परान्मुखा ॥ ४६ ॥

बिभर्ति तावद्दृढनिश्चयं जनः प्रभोर्मुखं पश्यति यावदुन्नतम् ।
गतैर्विनाशं स्वपतौ विशीर्यते यथारचक्रं परिशीर्णतुम्बकम् ॥ ४७ ॥
सुनिश्चितानामपि सन्नराणां विना प्रधानेन न कार्ययोगः ।
शिरस्यपेते हि शरीरबन्धः प्रपद्यते सर्वत एव नाशम् ॥ ४८ ॥

प्रधानसंबन्धमिदं हि सर्वं जगद्यथेष्टं फलमभ्युपैति ।
राहूपसृष्टस्य रवेर्विनाशं प्रयाति मन्दो निकरः कराणाम् ॥ ४९ ॥

इत्यार्षे श्री रविषेणाचार्यप्रोक्ते पद्मपुराणे हस्तप्रहस्तवधाभिधानं नामाष्टपंचाशत्तमं पर्व ॥ ५८ ॥

---

# अथैकोनषष्टितमं पर्व ।

उवाच श्रेणिकोऽथैवं विद्याविधिविशारदौ । हस्तप्रहस्तसामन्तौ जितपूर्वौ न केनचित् ॥ १ ॥
महदाश्चर्यमेतन्मे ताभ्यां तौ निहतौ कथम् । अत्र मे कारणं नाथ गणधृग्वक्तुमर्हसि ॥ २ ॥
ततो गणधरोऽवोचच्छृणु तत्वविशारदः । राजन् कर्माभिनुन्नानां जन्तूनां गतिरीदृशी ॥ ३ ॥
पूर्वकर्मानुभावेन स्थितिर्दुःकृतिनामियम् । असौ मारयिता तस्य यो येन निहितः पुरा ॥ ४ ॥
असौ मोचयिता तस्य बंधनव्यसनादिषु । यो येन मोचिता पूर्वमनर्थे पतितो नरः ॥ ५ ॥
आसँल्लौकिकमर्यादाः प्रातिवेश्मिकवासिनः । निस्वाः कुंटुबिनः स्थाने कुशस्थलकनामनि ॥ ६ ॥

ईंधकः पल्लवश्चैव तत्रैकोदरसंभवौ । पुत्रादरपरिक्लिष्टौ विद्धौ लांगलकर्मकौ ॥ ७ ॥
सानुकंपौ स्वभावेन साधुनिन्दापराङ्मुखौ । जैनमित्रपरिष्वंगाद्भिक्षादानादिसेविनौ ॥ ८ ॥
द्वितीयं निस्वयुगलं प्रतिवेश्मोषितं तयोः । स्वभावनिर्दयं क्रूरं लौकिकोन्मार्गमोहितम् ॥ ९ ॥
बंधने राजदानस्य संजाते कलहे सति । ताभ्यामत्यन्तरौद्राभ्यां हतावींधकपल्लवौ ॥ १० ॥
साधुदानाद्धरिक्षेत्रे जातौ सद्भोगभोजिनौ । पल्यद्वयक्षये जातौ देवलोकनिवेशिनौ ॥ ११ ॥
अधर्मपरिणामेण क्रूरौ तु प्राप्तपंचतौ । शशौ काले जरारण्ये जातौ दुःखातिसंकटे ॥ १२ ॥
मिथ्यादर्शनयुक्तानां साधुनिन्दनकारिणाम् । प्राणिनां पापकूटानां भवत्येवेदृशी गतिः ॥ १३ ॥
ततास्तिर्यक्षु सुचिरं भ्रांत्वा विविधयोनिषु । कृच्छ्रान्मनुष्यतां प्राप्तौ तापसत्वमुपागतौ ॥ १४ ॥
बृहज्जटौ बृहत्कायौ फलपर्णादिभोजिनौ । तपोभिः कर्शितौ तीव्रैः कुज्ञाने द्वौ मृतौ च तौ ॥१५॥
क्रमादरिंजये जातावश्विन्याः कुक्षिसंभवौ । पुत्रौ बह्निकुमारस्य विजयार्द्धस्य दाक्षिणे ॥ १६ ॥
आशुकाराखुराकाराविमौ जगति विश्रुतौ । हस्तप्रहस्तनामानौ सचिवौ रक्षसां विभोः ॥ १७ ॥
पूर्वौ तु प्रच्युतौ नाकात्सुमनुष्यत्वमागतौ । गृहाश्रमे तपः कृत्वा पुनर्जातौ सुरोत्तमौ ॥ १८ ॥
पुण्यक्षयात्परिभ्रष्टौ स्वर्गादिंधकपल्लवौ । किष्कुसंज्ञे पुरे जातौ नलनीलौ महाबलौ ॥ १९ ॥

यत्तद्धस्तप्रहस्ताभ्यां नलनीलौ भवांतरे । निहतौ फलमेतस्य परावृत्य तदागतम् ॥ २० ॥
हतवान् हन्यते पूर्वं पालकः पाल्यतेऽधुना । उदासीनमुदासीने जायते प्राणधारिणाम् ॥ २१ ॥
यं वीक्ष्य जायते कोपो दृष्टकारणवर्जितः । निःसंदिग्धं परिज्ञेयः स रिपुः पारलौकिकः ॥ २२ ॥
यं वीक्ष्य जायते चित्तं प्रह्लादि सह चक्षुषाम् । असंदिग्धं सुविज्ञेयो मित्रमन्यत्र जन्मनि ॥२३॥
क्षुब्धोर्मिणि जले सिन्धोः शीर्णे पोतं झषादयः । स्थले म्लेच्छाश्च वाधन्ते यत्तद्दुःकृतजं फलम् २४
मत्तैर्गिरिनिभैर्नागैर्योधैर्बहुविधायुधैः । सुवेगैर्वाजिभिर्दृप्तैर्भृत्यैश्च कवचावृतैः ॥ २५ ॥
विग्रहेऽविग्रहे वापि निःप्रमादस्य संततम् । जन्तोः स्वपुण्यहीनस्य रक्षा नैवोपजायते ॥ २६ ॥
निरस्तमपि नियतं यत्र यत्र स्थिरं परम् । तपोदानानि रक्ष्यन्ति न देवा न च बान्धवाः ॥२७॥
दृश्यते बन्धुमध्यस्थः पित्राप्यालिंगितो धनी । म्रियमाणोऽतिशूरश्च कोऽन्यः शक्तोऽभिरक्षितुम् ॥
पात्रदानैः व्रतैः शीलैः सम्यक्त्वपरितोषितैः । विग्रहेऽविग्रहे वापि रक्ष्यते रक्षितैर्नरः ॥ २९ ॥
दयादानादिना येन धर्मो नोपार्जितः पुरः । जीवितं चेष्यते दीर्घं वांच्छा तस्यातिनिःफला ३०

न विनश्यन्ति कर्माणि जनानां तपसा विना ।
इति ज्ञात्वा क्षमा कार्या विपश्चिद्भिररिष्वपि ॥ ३१ ॥

एष ममोपकरोति सुचेताः दुष्टतरोऽपकरोति ममायं ।
बुद्धिरियं निपुणा न जनानां कारणमत्र निजार्जितकर्म ॥ ३२ ॥
इत्यधिगम्य विचक्षणमुख्यैर्बाह्यसुखासुखगौणनिमित्तैः ।
रागतरं कलुषं च निमित्तं कृत्यमपोज्झितकुत्सितचेष्टैः ॥ ३३ ॥
भूविवरेषु निपातमुपैति ग्रावणि सज्जति गच्छति सर्पम् ।
संतमसा पिहिते पथि नेत्री नो रविणा जनितप्रकटत्वे ॥ ३४ ॥

इत्यार्षे रविषेणाचार्यप्रोक्ते पद्मपुराणे हस्तप्रहस्तनलनीलपूर्वभवानुकीर्त्तनं नामैकोनषष्टितमं पर्व ॥ ५९ ॥

---

# षष्टितमं पर्व ।

हस्तप्रहस्तसद्वीरौ विज्ञाय निहतौ ततः । अन्येद्युरुद्धरक्रोधा बहवो योद्धुमुद्यताः ॥ १ ॥
मारीचः सिंहजघनः स्वयंभुः शंभुरूर्जितः । शुकसारणचन्द्रार्कजगवीभत्सनिःस्वनाः ॥ २ ॥
ज्वरोग्रनक्रमकरा वज्राक्षो घातिनिष्ठुराः । गंभीरनिनदाद्याश्च सन्नद्धरभसान्विताः ॥ ३ ॥

सिंहसंबद्धवाहोढस्यंदनार्पितमूर्तयः । क्षोभयन्तः परिप्राप्ताः कपिकेतुवरूथिनीम् ॥ ४ ॥
तान्समापततो दृष्ट्वा राक्षसान्पार्थिवान्परान् । इमे वानरवंशाग्राः पार्थिवा योद्धुमुद्यताः ॥ ५ ॥
मदनांकुरसंतापप्रस्थिताक्रोशनंदनाः । दुरितानघपुष्पास्त्रविघ्नप्रीतिंकरादयः ॥ ६ ॥
अन्योन्याहूतमेतेषामभवत्परमं रणम् । कुर्वद्भिर्जटिलं व्योम शस्त्रैर्बहुविधैर्घनम् ॥ ७ ॥
अभिलष्यति संतापो मारीचं समरे तदा । प्रथितः सिंहजघनमुद्यानं विघ्नसंज्ञकः ॥ ८ ॥
आक्रोशः सारणं पापः शुकाक्षं नन्दनो ज्वरम् । तेषां स्पर्द्धवतामेवं युद्धं जातं नियंत्रितम् ॥९॥
ततः क्लिष्टेन संतापो मारीचेन निपातितः । नन्दनेन हतः कृच्छ्राज्ज्वरः कुन्तेन वक्षसि ॥१०॥
प्रथितःसिंहकटिना विघ्नश्चोद्दामकीर्त्तिना । हतोऽथ युद्धसंहारः सवितास्तं समागमत् ॥ ११ ॥
श्रुत्वा स्वं स्वं हतं नाथं निमग्ना शोकसागरे । स्त्रियो विभावरीमेतामनन्तामिव मेनिरे ॥ १२ ॥
अन्येद्युः संततक्रोधाः सामन्ता योद्धुमुद्यताः । वज्राक्षः क्षपितारिश्च मृगेन्द्रदमनो विधिः ॥१३॥
शंभुः स्वयंभुश्चन्द्रार्कस्तथा वज्रोदरादयः । राक्षसाधिपवर्गीयास्तेभ्योऽन्ये वानरध्वजाः ॥१४॥
जन्मान्तरार्जितक्रोधकर्मबन्धोदयेन ते । योद्धुं परममासक्ता निजजीवितनिस्पृहाः ॥ १५ ॥
क्षपितारिः समाहूतः संक्रोधेन महारुषा । मृगारिदमनो बलिना संहूतो बाहुशालिना ॥ १६ ॥

विधिर्वितापिनाऽन्योन्यमेवं जाते महाहवे । भटेष्वज्ञातसंज्ञेषु निपतत्सूपलेष्विव ॥ १७ ॥
शार्दूलस्ताडितः पूर्वं वज्रोदरमताडयत् । सक्रोधं सुचिरं युद्धं क्षपितारिरमारयत् ॥ १८ ॥
विशालद्युतिनामा च शंभुना विनिपातितः । मृत्युं स्वयंभुवा नीतो विजयो यष्टिताडितः ॥१९॥
वितापिर्विधिना ध्वस्तो गदाघातेन कृच्छ्रतः । सामन्तैरिति हन्यन्ते सामन्ताः शतशस्तदा ॥२०॥
अवसीदत्ततो दृष्ट्वा स्वं किष्किन्धपतिर्बलम् । परमक्रोधसंभारो यावत्संनद्धुमुद्यतः ॥ २१ ॥
अंजनातनयस्तावत्तत्स्वसैन्येन युग्महीम् । वारणोढं रथं हेममारूढो योद्धुमुद्ययौ ॥ २२ ॥
रक्षःसामंतसंघातो दृष्ट्वैव पवनात्मजम् । गवामिव गणो भ्रान्तस्त्रस्तः केशरिदर्शनात् ॥ २३ ॥
ऊचुश्च राक्षसाः सोयं हनूमान् वानरध्वजः । अद्यैव विधवा योषाः परं वह्वीः करिष्यति ॥ २४ ॥
माली तस्याग्रतो भूतो युद्धार्थी राक्षसोत्तमः । समुद्धृतत्य शरं तस्य पुरो वातिरजायत ॥ २५ ॥
तयोरभून्महद्युद्धं शरैराकर्णसंहितैः । उपात्तसाधुनिस्वानं क्रमेण परमोद्धतम् ॥ २६ ॥
सचिवाः सचिवैः सार्कं रथिनो रथिभिस्तथा । सादिनो सादिभिः सत्रा लग्ना युक्तरणोद्धताः ॥२७॥
मालिनं नष्टमालोक्य शक्त्या पवनजन्मनः । वज्रोदरोऽभवत्तस्य पुरः परमविक्रमः ॥ २८ ॥
चिरं कृतरणोऽथायं वातिना विरथीकृतः । रथमन्यं समारुह्य मारुतिं समधावत ॥ २९ ॥

कृत्वा तं विरथं भूयो मारुतिः परमोदयः । उपर्यवाहयत्तस्य रथं मारुतरंहसम् ॥ ३० ॥
स्यन्दनोद्वाहिनागांह्रिचूर्णितः स रणाजिरे । अमुंचत द्रुतं प्राणान् हुंकारेणापि वर्जितः ॥ ३१ ॥
ततोऽस्याभिमुखं तस्थौ स्वपक्षवधकोपितः । जंबूमालीति विख्यातो रावणस्य सुतो वली ॥३२॥
असावुत्थितमात्रश्च ध्वजं वानरलांच्छनम् । चिच्छेद वायुपुत्रस्य चन्द्रार्द्धसदृशेषुणा ॥ ३३ ॥
केतुकल्पनहृष्टेन तस्य मारुतिना धनुः । कवचं च ततो नीतं पुराणतृणशीर्णताम् ॥ ३४ ॥
ततस्तनूदरीसूनुर्वध्वान्यं कवचं दृढम् । अताडयन्मरुत्सूनुं तीक्ष्णं वक्षसि सायकैः ॥ ३५ ॥
बालनीलोत्पलम्लाननालस्पर्शसमुद्भवैः । असेवत शतैः सौख्यं धरणीधरधीरधीः ॥ ३६ ॥
अथास्य वायुपुत्रेण रथयुक्तं महोद्धतम् । मुक्तं सिंहशतं षष्टीचन्द्रवक्त्रेण पत्रिणा ॥ ३७ ॥
दंष्ट्राकरालवदनैः स्फुरल्लोहितलोचनैः । तैरुत्पत्य निजं सैन्यं सकलं विह्वलीकृतम् ॥ ३८ ॥
महाकल्लोलसंकाशास्तस्य सैन्यार्णवस्य ते । क्रूरनक्रसमाना वा जाताः प्रबलमूर्तयः ॥ ३९ ॥
चण्डसौदामिनीदंडमण्डलाकारहारिणः । सैन्यमेघसमूहं ते परमं क्षोभमानयन् ॥ ४० ॥
रणसंसारचक्रेऽसौ सैन्यलोकः समंततः । सिंहकर्मभिरत्यर्थमहादुखवशीकृतः ॥ ४१ ॥
बाजिनो वारणा मत्ता रथारोहाश्च विह्वलाः । रणव्यापारनिर्मुक्तार्नेशुर्दश दिशस्ततः ॥ ४२ ॥

ततो नष्टेषु सर्वेषु सामन्तेषु यथायथम् । अपश्यद्रावणं वातिर्दूरेव स्थितमग्रतः ॥ ४३ ॥
आरुह्य च रथं सिंहैर्युक्तं परमभासुरैः । अधावद्बाणमुद्धृत्य त्रिंशत्यर्द्धमुखं प्रति ॥ ४४ ॥
दशास्यस्त्रासितं वीक्ष्य निजं केसरिभिर्बलम् । समीपं चांजनासूनुं कृतान्तमिव दुर्द्धरम् ॥ ४५ ॥
चक्रे योद्धुमभिप्रायं यावत्सन्नाहतत्परः । तावन्महोदरोऽस्यान्ते सक्रोधेन समुद्ययौ ॥ ४६ ॥
महोदरस्य च वातेश्च वर्त्तते यावदाहवः । तावत्ते हरयः प्राज्ञैर्गृहीताः स्वामिभिः शनैः ॥ ४७ ॥
वशीभूतेषु सिंहेषु जाता सन्तो महारुषः । वायुपुत्रं समुत्पेतुः समस्ता राक्षसध्वजाः ॥ ४८ ॥
तथाप्यनिलसूनोश्च मुंचतः शरसंहतीः । दधार मंडलीभूतान् पतत्रिसाचिवैः कृती ॥ ४९ ॥
ते शिलीमुखसंघाताः प्रहितास्तस्य राक्षसैः । संयतस्य यथाऽऽक्रोशा नाभवन्कंपकारिणः ॥ ५० ॥
रक्षोभिर्वेष्टितं दृष्ट्वा तैस्तमतिभूरिभिः । इमे वानरवर्गीणाः समराय समुद्ययुः ॥ ५१ ॥
सुषेणो नलनीलौ च प्रीतिंकरो विराधितः । संत्राहको हरिकोटिः सूर्यज्योतिर्महाबलः ॥ ५२ ॥
जांबूनदसुताद्याश्च सिंहेभाश्वयुतैः रथैः । कृच्छ्राद्रावणसैन्यस्य निवारयितुमुद्यताः ॥ ५३ ॥
तैः समापतितैः सैन्यं दशग्रीवस्य सर्वतः । परीषहैरिव ध्वस्तं महातुच्छधृतं व्रतम् ॥ ५४ ॥
आत्मीयानाकुलान् दृष्ट्वा युयुत्सुं च दशाननम् । आदित्यश्रवणो योद्धुमुद्यतो सुमहाबलः ॥ ५५ ॥

दृष्ट्वा तमुद्गतं वीरं ज्वलंतं रणतेजसा । सुषेणादीनिमे प्रापुः साधारयितुमाकुलाः ॥ ५६ ॥
इंद्ररश्मिर्जयस्कन्दश्चन्द्राभो रतिवर्द्धनः । अंगोऽगदोऽथ संमेदः कुमुदःशशिमण्डलः ॥ ५७ ॥
बलिश्चंडतरंगश्च सारो रत्नजटी जयः । वेलाक्षेपी वसन्तश्च तथा कोलाहलादयः ॥ ५८ ॥
ततस्ते बहुबलत्वेन प्रवीराः पद्मपक्षिणः । लग्ना महाहवं कर्तुं शत्रूणामतिदुःसहम् ॥ ५९ ॥
क्रुद्धेन कुंभकर्णेन ततस्ते रणकारिणः । विद्यया स्वापिताः सर्वे दर्शनावरणी यथा ॥ ६० ॥
निद्राघूर्णितनेत्राणां तेषां शस्त्रावसंगिनाम् । करेभ्यः सायकाः पेतुः शिथिलेभ्यः समंततः ॥६१॥
निद्राविद्राणसंग्रामानेतानव्यक्तचेतनान् । दृष्ट्वाऽमुंचत सुग्रीवो विद्यां द्राक्प्रतिबोधिनीम् ॥ ६२ ॥
प्रतिबुद्धास्तया तेऽथ सुतरां जाततेजसा । हनूमदादयो योद्धुं प्रवृत्ताः संकुलं परम् ॥ ६३ ॥
शाखाकेसरिचिह्नानां बलमत्यर्थपुष्कलं । छत्रासिपत्रसंकीर्णमच्छिन्नरणलालसं ॥ ६४ ॥
स्पर्द्धमानं समालोक्य क्षुब्धसागरसन्निभम् । अवस्थां च स वाहिन्याः परिप्राप्तामसुन्दरीम् ६५
उत्सहे रावणो योद्धुं प्रणम्य च तमिन्द्राजित् । कृतांजलिरिदं वाक्यमभाषत महाद्युतिः ॥ ६६ ॥
तात तात न ते युक्तं संप्राप्तं मयि तिष्ठति । निष्फलत्वं हि मे जन्म सत्येवं प्रतिपद्यते ॥ ६७ ॥
नखच्छेद्ये तृणे किं वा परशो रुचिता गतिः । ततो भव सुविश्रब्धः करोम्येष तवेप्सितम् ॥६८॥

इत्युक्त्वा मुदितोऽत्यन्तमारुह्य गिरिसन्निभम् । त्रैलोक्यकंटकाभिख्यं गजेन्द्रं परमं प्रियः ॥६९॥
गृहीतादरसर्वस्वो महासचिवसंगतः । ऋद्ध्याखंडलसंकाशः प्रवीरो योद्धुमुद्यतः ॥ ७० ॥
कपिध्वजबलं तेन विविधायुधसंकटम् । ग्रस्तमस्थितमात्रेण महावीर्येण मानिना ॥ ७१ ॥
किष्किन्धाधिपतेः सैन्ये न सोऽस्ति कपिकेतनः । यो न शक्रजिता विद्धः शरैराकर्णसंहितैः ७२
किमयं शक्रजिन्नायं शक्रो वह्निरियं नु किम् । उताग्रमपरो भानुरिति वाचः समुद्ययुः ॥ ७३ ॥
ग्रस्यमानं निजं सैन्यं वीक्ष्य शक्रजिता ततः । सुग्रीवः स्वयमुद्यातः प्रभामण्डल एव च ॥७४॥
तद्भटानामभूद्युद्धमन्योन्याह्वानसंकुलम् । शस्त्रांधकारिताकाशमनपेक्षितजीवितम् ॥ ७५ ॥
अश्वैरश्वैः समं लग्नाः नागा नागै रथा रथैः । निजनाथानुरागेण महोत्साहभटा भटैः ॥ ७६ ॥
जगादेन्द्रजितः क्रुद्धः किष्किंधेशं पुरः स्थितं । अपूर्वशस्त्रभूतेन स्वरेण गगनस्पृशा ॥ ७७ ॥
दशास्यशासनं त्यक्त्वा शाखामृगपशो त्वया । क्वाधुना गम्यते पाप मयि कोपमुपागते ॥७८॥
इंदीवरनिभेनाद्य सायकेन तवामुना । शिरश्छिनद्मि संरक्षां कुरुतां क्षितिगोचरौ ॥ ७९ ॥
किष्किधेशस्ततोऽवोचत्किमेभिर्गर्जितैर्मुधा । मानशृङ्गमिदम्भग्नं तत्तु पश्य मयाधुना ॥ ८० ॥
इत्युक्ते कोपसंभारं वहन्निंद्रजितोद्धुतं । चापमास्फायन्नस्य समीपत्वमुपागतः ॥ ८१ ॥

शशिमंडलसंकाशछत्रछायानुसेवितः । मुमोच शरसंघातं किष्किंधाधिपतिं प्रति ॥ ८२ ॥
सोऽप्याकर्णसमाकृष्यन्बाणान्नादोपलक्षितान् । निजरक्षमहारक्षश्चिक्षेपेन्द्रजितं प्रति ॥ ८३ ॥
तेन बाणसमूहेन संततेन निरंतरम् । जातं नभस्तलं सर्वं मूर्तियुक्तमिवापरम् ॥ ८४ ॥
मेघवाहनवीरेण प्रभामंडलसुन्दरः । आहूतो वज्रनक्रश्च विराधितमहीभृता ॥ ८५ ॥
विराधितनरेन्द्रेण वज्रनक्रनरोत्तमः । राजवक्षसि चक्रेण भासुरेणाभिपातितः ॥ ८६ ॥
ताडितो वज्रनक्रेण सोऽपि चक्रेण वक्षसि । विना हि प्रतिदानेन महती जायते त्रपा ॥ ८७ ॥
चक्रसन्नाहं निष्पेष्य जन्मवह्निकणोत्करैः । चंचदुल्कास्फुलिंगौघापिंगतां गगनं गतं ॥ ८८ ॥
लंकानाथस्य पुत्रेण निरस्त्रः सूर्यनन्दनः । कृतः संग्रामसौंडेन संग्रामादनिवर्तकः ॥ ८९ ॥
तेनापि तस्य वज्रेण सर्वशस्त्रं निराकृतम् । पुण्यानुकूलितानां हि नैरंतर्यं न जायते ॥ ९० ॥
अवतीर्य ततः क्रुद्धो नागादिन्द्रजितो द्रुतम् । सिंहस्यन्दनमारुह्य पिंजरीकृतपुष्करम् ॥ ९१ ॥
समाहितमतिर्नानाविद्यास्त्रगतिपंडितः । योद्धुमभ्युद्यतो विभ्रद्सन्नत्रमिवाहवे ॥ ९२ ॥
अस्त्रं घनौघनिर्घोषं संप्रयुज्य सवारुणम् । दिशा किष्किंधराजस्य चकारालोकवर्जिता ॥ ९३ ॥
तेनापि पवनास्त्रेण कृतछत्रध्वजादिना । तदस्त्रं वारुणं क्वापि नीतं तूलोत्करोपमम् ॥ ९४ ॥

घनवाहनवीरोऽपि प्रभामंडलभूभृतः । आग्नेयास्त्रनियोगेन चकार धनुरिंधनम् ॥ ९५ ॥
तस्य स्फुलिंगसंसर्गादन्येषामपि चापिनाम् । धूमोद्गारानमुंचंत धनूंषि भयवीक्षितं ॥ ९६ ॥
नितान्तबहुयोद्धानां जीवितग्रसनादिव । ग्रासानां परमाजीर्णं धनुषां ते तदाभवन् ॥ ९७ ॥
वारुणेन ततोऽस्त्रेण त्वरितं जनकात्मजः । आग्नेयास्त्रं निराचक्रे स्वचक्रे कृतपालनः ॥ ९८ ॥
ततो मन्दोदरीसूनुश्चक्रे तं रथवर्जितम् । तथाविधमहासत्वमाकुलत्वविवर्जितम् ॥ ९९ ॥
प्रयोगकुशलश्चारुमस्त्रं तामसमाक्षिपत् । तेनान्धकारितं सैन्यं सर्वं जनकजन्मनः ॥ १०० ॥
स नो जनो द्विषो न क्ष्मा नात्मीयं न च शात्रवं । अंधध्वान्तपरिच्छन्नो मूर्च्छामिव समागतः १०१
अन्धीभूतो दशास्यस्य सुतेन जनकात्मजः । विमुक्तविषधूमौघैः वेष्टितो नागसायकैः ॥ १०२ ॥
सर्वांगे विस्फुरद्भोगभासुरैश्चन्दद्रुमः । यथा तथायं तैर्युक्तः पपात वसुधातले ॥ १०३ ॥
एवमिन्द्रजितेनापि कृता किष्किन्धभूभृतः । अवस्थाध्वांतनागास्त्रद्वयव्यापारकारिणा ॥ १०४ ॥
ततो विभीषणो विद्वान् विद्यास्त्ररणवस्तुनि । कृत्वा करपुटं मूर्ध्नि बभाषे पद्मलक्ष्मणौ ॥ १०५ ॥
पद्म पद्म महाबाहो वीर लक्ष्मण लक्ष्मण । एताः पश्य दिशश्छन्नाः शरैरिन्द्रजितेरितैः ॥१०६॥
वियत्तलं धरित्री च तस्य बाणैर्निरन्तरैः । उत्पातभूतनागाभैरातेनेऽत्यन्तदुःखदैः ॥ १०७ ॥

कृतौ सुग्रीववैदेहौ निरस्तौ नागसायकैः । बद्धौ निपातितौ भूमौ मयजासुतनिःसृतैः ॥ १०८ ॥
उदारे विजिते देवे श्रीभामंडलपण्डिते । वीरे सुग्रीवराजे च बहुविद्याधराधिपे ॥ १०९ ॥
संघातमृत्युमस्माकमासन्नं विद्धि राघव । एतौ हि नायकावुग्रावस्मत्पक्षस्य केवलौ ॥ ११० ॥
एतामनायकीभूतां विद्याधरवरूथिनीम् । पलायनोद्यतां पश्य समाश्रित्य दिशो दश ॥ १११ ॥
आदित्यश्रवणेनासौ पश्य मारुतनन्दनः । विजित्य समुहायुद्धे कराभ्यां बद्धविग्रहः ॥ ११२ ॥
शरजर्जरितच्छत्रकेतुकार्मुककंकटः । गृहीतः प्रसमं वीरः प्लवंगध्वजपुंगवः ॥ ११३ ॥
यावत्सुग्रीवभाचक्रौ पतितौ धरणीतले । न संभावयते क्षिप्रं रावणी रणकोविदः ॥ ११४ ॥
तावदेतौ स्वयं गत्वा निश्चेटावानयाम्यहम् । त्वं साधारय निर्नाथामिमां खेचरवाहिनीम् ॥११५॥
यावदेवमसौ पद्मं लक्ष्मणं चाभिभाषते । सुतारातनयस्तावद्गत्वा स्वैरमलक्षितः ॥ ११६ ॥
अंबरं भानुकर्णस्य परिधानममुंचत । ह्रीभाराकुलितो जातः क्षरद्धरणविह्वलः ॥ ११७ ॥
यावद्वासःसमाधानपरोऽसौ राक्षसोऽभवत् । भुजपाशोदरादस्य निःसृतस्तावदानिलिः ॥ ११८ ॥
नवो बद्धो यथा पक्षी निर्गतः पंजरोदरात् । आसीत्सुचकितो वातिः प्रत्युग्रद्युतिसंगतः ॥११९॥
ततो मुदितसंप्रीतौ विमानशिखरस्थितौ । हनूमदंगदौ वीरौ रेजतुः सुरसन्निभौ ॥ १२० ॥

ताभ्यामंगकुमारेण चन्द्रोदरसुतेन च । समं लक्ष्मीधरः सेनां समाश्वासयितुं स्थितः ॥ १२१ ॥
मन्दोदरीसुतं तावदभियाय विभीषणः । स पितृव्यं समालोक्य चिंतामेतामुपागतः ॥ १२२ ॥
तातस्यास्य च को भेदो न्यायो यदि निरीक्ष्यते । ततोऽभिमुखमेतस्य नावस्थातुं प्रशस्यते १२३
नागपाशैरिमौ बद्धौ मृत्युं जातौ विशंसयम् । एतान्नचेह कर्तव्यं युक्तं तदवसर्प्पणम् ॥ १२४ ॥
इति संचिंत्य निर्यातावन्द्रजिन्मेघवाहनौ । गहनाहवमेदिन्याः कृतार्थत्वाभिमानिनौ ॥ १२५ ॥
अन्तर्द्धौ सेविते ताभ्यां संभ्रान्तात्मा विभीषणः । त्रिशूलहेतिरामुक्तकंकटस्तरलेक्षणः ॥ १२६ ॥
उत्तीर्य स्वारथाद्वीरस्तयोर्निकंपदेहयोः । अवस्थान्तरमद्राक्षीन्नागसायकनिर्मितम् ॥ १२७ ॥
ततो लक्ष्मीधरोऽवोचत्पद्मनाभं विचक्षणः । श्रूयतां नाथ यत्रेमौ महाविद्याधराधिपौ ॥ १२८ ॥
अत्यूर्जितौ महासैन्यौ महाशक्तिसमन्वितौ । श्रीभामंडलसुग्रीवौ नीतावस्त्रविमुक्तताम् ॥ १२९ ॥
रावणस्य कुमाराभ्यां स्फूतावुरुमार्गणैः । तत्र त्वया मया वापि साध्यते किं दशाननः ॥१३०॥
ततः पुण्योदयात्पद्मः स्मृत्वा लक्ष्मणमब्रवीत् । तदा स्मर वरं लब्धं योग्युपद्रवनाशने ॥ १३१ ॥
महालोचनदेवस्य तदभिध्यानमात्रतः । सुखावस्थस्य सहसा सिंहासनमकंपत ॥ १३२ ॥
आलोक्यावधिनेत्रेण ततो विज्ञाय संभ्रमी । विद्याभ्यां प्राहिणोद्युक्तं चिन्तावेगं निजं सुरम् १३३

गत्वा कथितःक्षेमः संदेशः सादरं सुरः । ताभ्यामुद्धे ददौ विद्ये परिवारसमन्विते ॥ १३४ ॥
तयोः पद्मावदातस्य यानमर्पयदद्भुतम् । समुद्योतितदिक्चक्रं सौमित्राय च गारुडम् ॥ १३५ ॥
विद्येशं प्राप्य संमान्य धीरौ चित्तगतिं मुदा । पृष्टवार्तौ जिनेन्द्राणां पूजां तौ चक्रतुः परम् १३६
परं साधुप्रसादं च प्रस्तावे संगतोदयम् । सशंसतुर्मुदोदारगुणग्रहणतत्परौ ॥ १३७ ॥
आदत्तां च सुरास्त्राणि भासुराणि सहस्रशः । वारुणाग्निमरुत्सृष्टिप्रभृतीनि सुविभ्रमौ ॥ १३८ ॥
चंद्रादित्यसमे छत्रे चारुचामरमंडिते । रत्नानि च प्रदत्तानि पिहितानि निजौजसा ॥ १३९ ॥
गदाप्रहरणं विद्युद्वक्त्रा लक्ष्मीधरं श्रिता । हलं समुसलं पद्मं दैत्यानां भयकारणम् ॥ १४० ॥
माहिमानं परं प्राप्य ताभ्यां संमदसंगतः । आशीःशतानि दत्वासौ गतो देवस्त्रिविष्टपम् ॥१४१॥
धर्मस्यैतद्विधियुतकृतस्यानवद्यस्य धीरै—र्ज्ञेयं स्तुत्यं फलमनुपमं युक्तकालोपजातम् ॥
यत्सम्प्राप्य प्रमदकलिताः दूरमुक्तोपसर्गाः । संजायन्ते स्वपरकुशलं कर्तुमुद्भूतवीर्याः ॥ १४२ ॥
आस्तां तावन्मनुजजनितं संपदः कांक्षितानां । यच्छन्तीष्टादधिकमतुलं वस्तु नाकाश्रितोऽपि ॥
तस्मात्पुण्यं कुरुत सततं हे जनाः सौख्यकांक्षाः । येनानेकं रविसमरुचः प्राप्नुताश्चर्ययोगम् १४३

इत्यार्षे रविषेणाचार्यप्रोक्ते पद्मपुराणे विद्यालाभो नाम षष्टितमं पर्वः ॥ ६० ॥

# अथैकषष्टितमं पर्व ।

एतस्मिन्नन्तरे दिव्यकवचच्छन्नविग्रहौ । लक्ष्मीश्रीवत्सलक्ष्माणौ तेजोमंडलमध्यगौ ॥ १ ॥
नागारिवाहनारूढौ सुकेतौ पद्मलक्ष्मणौ । सैन्यसागरमध्यस्थौ सैंहगारुडकेतनौ ॥ २ ॥
परपक्षक्षयं कर्तुमुद्यतौ परमेश्वरौ । संग्रामधरणीमध्यं तेन संश्रतुरुत्कटौ ॥ ३ ॥
अग्रतस्त्वरितो जातः सौमित्रिर्मित्रवत्सलः । दिव्यातपत्रविक्षिप्तदुरुभास्करदीधितिः ॥ ४ ॥
श्रीशैलप्रमुखैर्वीरैर्वृतः प्लवगकेतनैः । दधानस्त्वैदृशं रूपमशक्यपरिवर्णनं ॥ ५ ॥
अग्रतः प्रस्थिते तस्मिन् द्वादशादित्यभास्वरं । दृष्टं विभीषणेनेदं जगद्विस्मिततेजसा ॥ ६ ॥
गरुत्मकेतने तस्मिन्संप्राप्ते तत्तथाघनम् । अस्त्रं सांतमसं क्वापि गतं गरुडतेजसा ॥ ७ ॥
गरुत्मपक्षवातेन क्षोभितक्षारसिंधुना । नीता विषधरा नाशं कुभाव इव साधुना ॥ ८ ॥
तार्क्ष्यपक्षविनिर्मुक्तमयूखालोकसंगतम् । जांबूनदरसेनेव जगदासीद्विनिर्मितम् ॥ ९ ॥
ततो नभश्चराधीशौ गतपन्नगबन्धनौ । प्रभामण्डलसुग्रीवौ समाश्वासनमापतुः ॥ १० ॥
सुखेन प्राप्य निद्रां च रत्नांशुकसमावृतौ । अलगर्दलतारेखासमलंकृतविग्रहौ ॥ ११ ॥

अधिकं भासमानांगौ व्यक्तोच्छ्वासविनिर्गमौ । निद्राक्षये परं कान्तौ स्वच्छसुप्ताविवोत्थितौ १२
ततो विस्मयमापन्नाः श्रीवृक्षप्रथितादयः । विद्याधरगणाधीशाः पप्रच्छुः कृतपूजनाः ॥ १३ ॥
नाथावापत्सु वामेषा दृष्टपूर्वा न जातुचित् । विभूतिरद्भुता जाता कुतश्चिदिति कथ्यताम् ॥१४॥
वाहनावस्त्रसंपत्तिरातपत्रे परा द्युतिः । ध्वजौ रत्नानि चित्राणि श्रूयते दिव्यमीदृशम् ॥ १५ ॥
पद्मनाभस्ततोऽगादीत्तेभ्यो हिंडणमात्मनः । उपसर्गे च शैलाग्रे देशगोत्रविभूषयोः ॥ १६ ॥
चतुराननयोगेन स्थितयोर्देवनिर्मितम् । प्रातिहार्यं समुद्भूतं केवलं च सुरागमम् ॥ १७ ॥
गरुडेन्द्रस्य तोषं च परिप्राप्तिं वरस्य च । अनुध्यानप्रयोगेन महाविद्यासमागमम् ॥ १८ ॥
ततस्तेऽवहिताः श्रुत्वा परमां योगिसंकथाम् । इदमूचुः परिप्राप्ताः प्रमोदं विकचाननाः ॥१९॥

इहैव लोके विकटं परं यशो मतिप्रगल्भत्वमुदारचेष्टितम् ।
अवाप्यते पुण्यविधिश्च निर्मलो नरेण भक्त्यार्पितसाधुसेवया ॥ २० ॥
तथा न माता न पिता न वा सुहृत्सहोदरो वा कुरुते नृणां प्रियम् ।
प्रदाय धर्मे मतिमुत्तमां यथा हितं परं साधुजनः शुभोदयाम् ॥ २१ ॥
इतिप्रशंसार्पितभाविताश्चिरं जिनेन्द्रमार्गोन्नतिविस्मिताः परम् ।

बलं सनारायणमाश्रिता बभुर्महाविभूत्या समुपाश्रिता नृपाः ॥ २२ ॥
भव्यांभोजमहान्तमुत्सवकरीं श्रुत्वा पवित्रां कथाम् ।
सर्वे हर्षमहारसोद्धिगताः प्रीतिं दधानाः पराम् ॥
तौ निद्रोज्झितपुंडरीकनयनौ संप्राप्तदेवार्चनौ ।
ते विद्याधरपुंगवाः सुरसमाः सर्वात्मनापूजयन् ॥ २३ ॥
उपात्तपुण्यो जननान्तरे जनः करोति योगं परमैरिहोत्सवैः ।
न केवलं स्वस्य परेण भूयसा रविर्यथा सर्वपदार्थदर्शनात् ॥ २४ ॥

इत्यार्षे रविषेणाचार्यप्रोक्ते पद्मपुराणे सुग्रीवभामंडलसमाश्वासनं नामैकषष्टितमं पर्व ॥ ६१ ॥

---

# अथ द्वाषष्टितमं पर्व ।

अपरेद्युर्महोद्भूतविक्रमक्रमकोविदाः । युद्धार्थोपात्तसंभारा रणशौंडाः समुद्ययुः ॥ १ ॥
वानरीयैः समस्तं खं सैन्यैर्व्याप्तं निरन्तरम् । शंखदुंदुभिसन्मिश्रं श्रुत्वेभाश्वध्वनिं तथा ॥ २ ॥

अभ्यूर्जितमतिर्मानी सादरोऽमरविभ्रमः । सत्वप्रतापसंयुक्तः सैन्यार्णवसमावृतः ॥ ३ ॥
तेजसा शस्त्रजातेन ज्वलयन्निव विष्टपम् । कैलासोद्धारवीरोऽपि निरैद्धात्रादिभिः समम् ॥ ४ ॥
उद्धताः बद्धकवचाः संग्रामात्यर्थलालसाः । नानायानसमारूढा नानाविधमहायुधाः ॥ ५ ॥
पूर्वानुवंधसंक्रोधमहारौरवसन्निभाः । परस्परं भटा धीराः लग्नास्ताडनकर्माणि ॥ ६ ॥
चक्रक्रकचपाशासियष्ट्यादिघनमुद्गरैः । कनकैः परिघाद्यैश्च गगनं गहनीकृतम् ॥ ७ ॥
लग्नमश्वीयमश्वीयैर्गजता गजतामगात् । रथिनश्च महाधीरा उद्यता रथिभिः समम् ॥ ८ ॥
सैंहं सैंहेन सोद्योगं पादातेन च चंचलम् । समं महाहवं कर्तुमुद्यतं समविक्रमम् ॥ ९ ॥
ततः कपिध्वजसैन्यं रक्षोयोधैः पराजितम् । नीलादिभिः पुनर्नीतं शस्त्रसंपातयोग्यताम् ॥ १० ॥
भूयोजलधिकल्लोललोललंकेन्द्रपार्थिवाः । इमे समुद्ययुर्दृष्ट्वा निजसैन्यपराभवं ॥ ११ ॥
विद्युद्वचनमारीचचन्द्रार्कशुकसारणाः । कृतान्तमृत्युजीमूतनादसंक्रोधनादयः ॥ १२ ॥
भज्यमानं निजं सैन्यं वीक्ष्य तैः राक्षसोत्तमैः । कपिध्वजमहायोधाः परिप्रापुः सहस्रशः ॥१३॥
ग्रस्ता राक्षससैन्यास्तैरुच्छ्रितैर्विविधायुधैः । महाप्रतिभयैर्वीरैरत्युदात्तविचेष्टितैः ॥ १४ ॥
निजसैन्यार्णवं दृष्ट्वा पीयमानं समं ततः । शस्त्रज्वालाविलासेन कपिप्रलयवह्निना ॥ १५ ॥
लंकेशः कोपनो योद्धुं बलवान् स्वयमुत्थितः । शुष्कपत्रोपमं दूरं विक्षिपन् शत्रुसैनिकम् ॥ १६ ॥

ततः पलायनोद्युत्कान् परिपाल्य तदा द्रुतम् । स्थितो विभीषणो योद्धुं महायोधविभीषणः १७
आहवेऽभिमुखीभूतं भ्रातारं वीक्ष्य रावणः । बभाण प्रथुकक्रोधो वाक्यमादरवर्जितः ॥ १८ ॥
कनीयानसि स त्वं मे भ्राता हंतुं न युज्यते । अपसर्पाग्रतो मास्थाः न त्वां शक्तोस्मि वीक्षितुम् ॥
विभीषणकुमारेण जगदे पूर्वजस्ततः । कालेन गोचरत्वं मे नीतः किमवसर्पते ॥ २० ॥
ततः कुमारकोपस्तं पुनरप्याह रावणः । क्लीव क्लिष्ट धिगस्तु त्वां नरकाङ्क कुचेष्टितं ॥ २१ ॥
त्वया व्यापादितेनापि नैव मे जन्यते धृतिः । भवाद्विधा हि नो योग्याः कर्तुं हर्षं न दीनतां २२
यद्विद्याधरसंतानं त्यक्त्वा मूढोऽन्यमाश्रितः । कर्म्मणामतिदौरात्म्याज्जैनं त्यक्त्वेव शासनम् २३
ततो विभीषणोऽवोचत्किमत्र बहुभाषितैः । शृणु रावण कल्याणं भण्यमानमनुत्तमम् ॥ २४ ॥
एवं गतोऽपि चेत्कर्तुं स्वस्य श्रेयः समेच्छसि । राघवेण समं प्रीतिं कुरु सीतां समर्पय ॥ २५ ॥
अभिमानोन्नतिं त्यक्त्वा प्रसादय रघूत्तमम् । मा कलंकं स्ववंशस्य कार्षीर्योषिन्निमित्तकम् ॥२६॥
अथवा मर्तुमिष्टं ते कुरुषे यन्न मद्वचः । मोहस्य दुस्तरं किं वा बलिनो बलिनामपि ॥ २७ ॥
विनिशम्य वचस्तस्य तरुणक्रोधसंगतः । निशातं वाणमुद्धृत्य समधावत रावणः ॥ २८ ॥
रथाश्ववारणारूढाः स्वामितोषे हि तत्पराः । अन्येऽपि पार्थिवा लग्ना रणे सुभटदारुणे ॥ २९ ॥

आयातोऽभिमुखं तस्य राक्षसेन्द्रस्य रंहसा । अष्टमीचन्द्रवक्रेण ध्वजं भ्रान्तेषुणाऽच्छिनत् ॥३०॥
तेनापि तस्य संरंभं संभाराक्रान्तसाधनम् । धनुर्द्विधाकृतं क्षिप्त्वा सायकं निशिताननम् ॥ ३१ ॥
ततो परमुपादाय चापमाशु विभीषणः । द्विधाकरोद्धनुस्तस्य प्रतिकारविचक्षणः ॥ ३२ ॥
एवं तयोर्महायुद्धे प्रवृत्ते वीरसंक्षये । जनकस्य परं भक्तः शक्रजिद्योद्धुमुद्ययौ ॥ ३३ ॥
लक्ष्मीधरेण रुद्धोऽसौ पर्वतेनेव सागरः । पद्मनेत्रेण पद्मेन भानुकर्णोऽग्रतः कृतः ॥ ३४ ॥
ययौ सिंहकटिं नीलो युद्धशंभुं तथा नलः । स्वयंभुं दुर्मतिः क्रुद्धो दुर्मर्षोऽपि घटोदरम् ॥ ३५ ॥
दुष्टः शक्राशनिं कालिस्तथा चन्द्रनखं नृपम् । स्कन्दो भिन्नांजनं विघ्नं विराधितनराधिपः ॥३६॥
ख्यातं मयमहादैत्यमंगदो भासुरांगदः । कुंभकर्णसुतं कुंभं समीरणसमुद्भवः ॥ ३७ ॥
किष्किंधेशम् समाल्याख्यं केतुं जनकनन्दनः । कामं दृढरथः क्षुब्धः क्षोभणाभिख्यमूर्जितम् ३८
अन्येऽप्येवं महायोधा यथायोग्यं परस्परम् । आरेभिरे रणं कर्तुमाह्वानमुखराननाः ॥ ३९ ॥
गृहाण प्रहरागच्छ जहि व्यापादयोद्गिरः । छिंधि भिन्धि क्षिपोत्तिष्ठ तिष्ठ दारय धारय ॥४०॥
बधान स्फोटयाकर्ष मुंच चूर्णय नाशय । सहस्व दत्स्व निःसर्प संधत्स्वोच्छ्रय कल्पय ॥ ४१ ॥
किं भीतोऽसि न हन्मि त्वां धिकृत्वां कातरको भवान् । कस्त्वं विभेसि नष्टोऽसि मा कंपिष्ठा क गम्यते

अयं स वर्तते कालः शूराशूरविचारकः । भुंजतेऽन्नं यथा मृष्टं न तथा युध्यते रणे ॥ ४३ ॥
गर्जितैरिति धीराणां तूर्यनादैस्तदुन्नतैः । नर्दतीव दिशो मत्ताः क्षतजातान्धकरिताः ॥ ४४ ॥
चक्रशक्तिगदायष्टिकनकार्ष्टिघनादिभिः । दंष्ट्रालमिव संजातं गगनं भीषणं परम् ॥ ४५ ॥
रक्ताशोकवनं किं तत् किं वा किंशुककाननम् । परिभद्रकुमाराणामुत जातं क्षतम् बलम् ॥४६॥
कश्चिद्विघटितं दृष्ट्वा कंकटं छिन्नबन्धनम् । संधत्ते त्वरितं भूयः स्नेहं साधुजनो यथा ॥ ४७ ॥
कश्चित्संधार्य दंताग्रैः खड्गं परिकरं दृढम् । बध्वा दीप्रः पुनर्योद्धुं श्रममुक्तः प्रवर्तते ॥ ४८ ॥
मत्तवारणदंताग्रक्षतवक्षस्थलोऽपरः । चलत्कर्णसमुद्भूतैर्वीजितः कर्णचामरैः ॥ ४९ ॥
उत्तीर्णस्वामिकर्तव्यो निराकुलमतिः परम् । दंतोत्संगे ततः शिश्ये संप्रसार्य भुजद्वयम् ॥ ५० ॥
धातुपर्वतसंकाशाः केचित् क्षतजनिर्ज्झरा । मुमुचः शीकरासारसेकबोधितमूर्च्छिताम् ॥ ५१ ॥
पर्यास्ता भूतले केचिद्दष्टौष्ठाः शास्त्रपाणयः । कुंचितभ्रुदुरीक्षास्या वीरा मुंचंति जीवितम् ॥ ५२ ॥
उपसंहृत्य संरंभं त्यक्तशस्त्रास्तथापरे । मुंचंति जीवितं धीरा ध्यायन्तः परमाक्षरम् ॥ ५३ ॥
विषाणकोटिसंसक्तपाणयः केचिदुत्कटाः । आंदोलनं गजेन्द्राणामग्रतः समुपासिरे ॥ ५४ ॥
रक्तच्छटां विमुंचन्ति चंचलाः शस्त्रपाणयः । कबन्धा नर्त्तनं चक्रुः शतशोऽतिभयानकम् ॥५५॥

केचिदस्त्रविनिर्मुक्ता जर्जरीभूतकंकटाः । प्रविष्टाः सलिलं क्लिष्टा जीविताशापराङ्मुखाः ॥५६॥
ईदृशे समरे जाते लोकसंत्रासकारिणि । परस्परसमुद्भूतमहाभटपरिक्षये ॥ ५७ ॥
महेन्द्रजिदसौ वाणैर्लक्ष्मीमन्तं सिताननैः । लग्नश्छादयितुं वीरस्तथा तमपि लक्ष्मणः ॥ ५८ ॥
महातामसशस्त्रं च भीमं शक्रजिदक्षिपत् । विनाशं भानवीयेन तदस्त्रेणानयद्रिपुम् ॥ ५९ ॥
तमुग्रैः शक्रजिद्भूयः शरैराशीविषात्मकैः । आरब्धो वेष्टितुं क्रुद्धः सरथं शस्त्रवाहनम् ॥ ६० ॥
वैनतेयास्त्रयोगेन नागास्त्रं स निराकरोत् । पूर्वोपात्तं यथा पापजालं योगी महातपाः ॥ ६१ ॥
ततोऽमात्यगणान्तस्थं हस्तिवृन्दस्थलावृतम् । विरथं लक्ष्मणश्चक्रे दशवक्त्रसमुद्भवम् ॥ ६२ ॥
पालयन् स निजं सैन्यं वचसा कर्मणा तथा । प्रायुंक्तास्त्रं महाध्वान्तपिहितारिदशास्यकम् ॥६३॥
विद्यया तपनास्त्रं च हृत्वा तस्य विचिंतितम् । चिक्षेपेच्छाधृताकारानाशीमुखशिलीमुखान् ॥६४॥
संग्रामाभिमुखो नागैः कुटिलं व्याप्तविग्रहः । इन्द्रजित्पतितो भूमौ पुरा भामंडलो यथा ॥६५॥
पद्मेनाऽऽदित्यकर्णोऽपि सुमुद्धो विरथीकृतः । आदित्यास्त्रं शनैर्हत्वा नागास्त्रं संप्रयुज्य च ॥६६॥
संवेष्ट्य सर्वतो नागैः पतितो धरणीतले । पुरेव बाहुबलिना श्रीकंठो नमिनन्दनः ॥ ६७ ॥
चित्रं श्रेणिक ते वाणाः भवन्ति धनुराश्रिताः । उल्कामुखास्तु गच्छन्तः शरीरे नागमूर्त्तयः ६८

निजसैन्यार्णवं दृष्ट्वा पीयमानं समंततः । शस्त्रज्वालाविलासेन कपिप्रलयवह्निना ॥ १५ ॥
क्षणं बाणाः क्षणं दंडाः क्षणं पाशत्वमागताः । आमरा ह्यस्त्रभेदास्ते यथा चिंतितरूपगाः ॥६९॥
कर्मपाशैर्यथा जीवो नागपाशैः स वेष्टितः । भामंडलेन पद्माज्ञां प्राप्याऽऽत्मीये रथे कृतः ॥७०॥
मंदोदरीसुतोऽप्येष बद्धो नारायणाज्ञया । विराधितेन याने स्वे स्थापितः क्लान्तविग्रहः ॥७१॥
तावद्रणमुखेऽभाणीद्दशवक्त्रो विभीषणम् । संक्रुद्धोऽभिमुखीभूतं चिरं सोढा रणक्रियम् ॥ ७२ ॥
प्रहारमिममेकं मे प्रतीच्छ यदि मन्यसे । सत्यं पुरुषमात्मानं रणकंडूप्रचंडकम् ॥ ७३ ॥
इत्युक्त्वा विस्फुरत्पिंगस्फुलिंगालिंगिताम्बरम् । शूलं चिक्षेप लुप्तोऽसौ लक्ष्मणेनांतरे शरैः ॥७४॥
तं भस्मीकृतमालोक्य शूलमत्युग्रमायुधम् । अधिकं रावणः क्रुद्धः शक्तिं जग्राह दारुणाम् ॥७५॥
यावत्पश्यति संजातमग्रतो गरुडध्वजम् । प्रौढेन्दीवरसंकाशं भासुरं पुरुषोत्तमम् ॥ ७६ ॥
प्रलंपांभोदसंभारगंभीरोदारनिस्वनः । विंशत्यर्द्धमुखोऽवोचत्तमेवं ताडयन्निव ॥ ७७ ॥
अन्यस्यैव मया शस्त्रमुद्यतं बंधकारणम् । यदि तत्कोऽधिकारस्ते स्थातुमासन्नतो मम ॥ ७८ ॥
अभिवांछसि मर्त्तुं वा यदि दुर्मत लक्ष्मण । प्रतीच्छेमं प्रहारं मे तिष्ठ प्रगुणविग्रहः ॥ ७९ ॥
विभीषणं समुत्सार्य सोऽपि कृच्छ्रेण मानवान् । दशास्यमभिदुद्राव चिरं संग्रामखेदितम् ॥८०॥

निःसर्पत्तारकाकारस्फुलिंगनिकरां ततः । चिक्षेप रावणः शक्तिं कोपसंभारसंगतः ॥ ८१ ॥
वक्षस्तस्य तया भिन्नं महाशैलतटोपमम् । अमोघक्षेपया शक्त्या दिव्ययात्यन्तदीप्तया ॥ ८२ ॥
लक्ष्मणोरसि सा सक्ता भासुरांगमनोहरा । परमप्रेमसंबद्धा शोभते स्म वधूरिव ॥ ८३ ॥
गाढं प्रहारदुःखार्त्तः स परायत्तविग्रहः । महीतलं परिप्राप्तो गिरिर्वज्राहतो यथा ॥ ८४ ॥
दृष्ट्वा तं पतितं भूमौ पद्मः पद्माभलोचनः । विनियम्य परं शोकं शत्रुघातार्थमुद्यतः ॥ ८५ ॥
सिंहयुक्तं समारूढं स्यन्दनं क्रोधपूरितः । शत्रुमायातमात्रेण चकार विरथं बली ॥ ८६ ॥
रथान्तरसमारूढश्छिन्नपूर्वशरासनः । यावच्चापं समादत्ते भूयोऽथ विरथीकृतः ॥ ८७ ॥
पद्माभस्य शरैर्ग्रस्तो दशास्यो विह्वलीकृतः । न समर्थो बभूवेषुं ग्रहीतुं न च कार्मुकम् ॥ ८८ ॥
लोठितोऽपि शरैस्तीव्रैस्तथापि धरणीतले । रथे विलोक्यते भूयो रावणः खेदसंगतः ॥ ८९ ॥
विच्छिन्नचापकवचः षड्वारं विरथीकृतः । तथापि शक्यते नैव स साधयितुमद्भुतः ॥ ९० ॥
प्रोक्तश्च पद्मनाभेन परं प्राप्तेन विस्मयम् । नाल्पायुष्को भवानेव यो न प्राप्तोऽसि पंचताम् ॥९१॥
मद्बाहुप्रेरितैर्बाणैर्वेगवद्भिः सिताननैः । महीभृतोऽपि शीर्यन्ते मन्येऽन्यत्र किमुच्यताम् ॥ ९२ ॥
तथापि रक्षितः पुण्यैर्जन्मान्तरसमर्जितैः । शृणु जल्पामि किंचित्ते वचनं खेचराधिप ॥ ९३ ॥

संग्रामेऽभिमुखो भ्राता यो मे शक्त्या त्वया यतः । प्रेतस्याभिमुखं तस्य वीक्ष्ये यद्यनुगम्यते ९४
एवमस्त्विति संभाष्य प्रार्थनाभंगदुर्विधः । ययौ दशाननो लंकामृद्ध्याऽऽखंडलसन्निभः ॥९५॥
एकस्तावदयं ध्वस्तो मया शत्रुर्महोत्कटः । इति किंचिद्धृतिं प्राप्तो विवेश भवनं निजम् ॥ ९६ ॥
अन्विष्य विक्षतांस्तत्र योधान्विक्रांतवत्सलः । विवेशांतःपुरं धीरो दर्शनश्रमनोदनः ॥ ९७ ॥
निरुद्धं भ्रातरं श्रुत्वा पुत्रौ चरणकारिणौ । शोचन् प्रियजनं पश्यन्नाशां चक्रे दशाननः ॥९८॥

इति निजचरितस्यानेकरूपस्य हेतोर्व्यतिगतभवजस्यावश्यलभ्योदयस्य ।
इह जनुषि विचित्रं कर्मणो भावयन्ते फलमविरतयोगाज्जंतवो भूतिभावाः ॥ ९९ ॥
व्रजति विधिनियोगात्कश्चिदेवेह नाशं हतरिपुरपरश्च स्वं पदं याति धीरः ।
विफलितपृथुशक्तिर्बंधनं सेवतेऽन्यो रविरुचितपदार्थोद्भासने हि प्रवीणः ॥ १०० ॥

इत्यार्षे श्री रविषेणाचार्यप्रोक्ते पद्मपुराणे शक्तिसंतापाभिधानं नाम द्वाषष्टितमं पर्व ॥ ६२ ॥

# त्रिषष्टितमं पर्व ।

ततः समाकुलस्वान्तः पद्मः शोकेन ताडितः । परिप्राप्तस्तमुद्देशं यत्र तिष्ठति लक्ष्मणः ॥ १ ॥
निर्विचेष्टं तमालोक्य क्षितिमंडलमंडनम् । शक्त्याऽऽलिंगितवक्षस्कं पद्मो मूर्च्छामुपागतः ॥२॥
संप्राप्य च चिरात्संज्ञां महाशोकसमन्वितः । दुःखाग्निदीपितोऽत्यन्तं विप्रलापमसेवत ॥ ३ ॥
हा वत्स विधियोगेन महादुर्लङ्घ्यमर्णवम् । उत्तीर्य संगतोऽस्येतामवस्थामतिदारुणाम् ॥ ४ ॥
अयि मद्भक्तिसच्चेष्टो मदर्थं सततोद्यत । क्षिप्रं प्रयच्छ मे वाचं किं मौनेनावतिष्ठसे ॥ ५ ॥
जानास्येव वियोगं ते मुहूर्त्तमपि नो सहे । कुर्वालिंगनमुत्तिष्ठ क्व गतोऽसौ तवादरः ॥ ६ ॥
अद्य केयूरदष्टौ मे भुजावेतौ महायतौ । भावमात्रकरौ जातौ निष्क्रियौ निष्प्रयोजनौ ॥ ७ ॥
निक्षेपो गुरुभिस्त्वं मे प्रयत्नेन समर्पितः । गत्वा किमुत्तरं तेभ्यो दास्यामि त्रपयोज्झितः ॥८॥
क्व सौमित्रिः क्व सौमित्रिरिति गाढं समुत्सुकः । लोकोऽपि सहि समस्तो मे प्रेक्ष्यति प्रेमानिर्भरः ॥
रत्नं पुरुषवीराणां हारयित्वा त्वकामहम् । मन्ये जीवितमात्मीयं हतं निहतपौरुषः ॥ १० ॥
दुष्कृतस्योदयस्थस्य रचितस्य भवान्तरे । फलमेतन्मया प्राप्तं सीतया मे किमन्यथा ॥ ११ ॥

यस्याः कृते क्षितौ रक्तं शक्त्या निर्दयनुन्नया । भवंतं भूतले सुप्तं पश्यामि दृढमानसः ॥ १२ ॥
कामार्थाः सुलभाः सर्वे पुरुषस्यागमास्तथा । द्विविधाश्चैव संबंधा विष्टपेऽस्मिन् यथा तथा १३
पर्यट्य पृथिवीं सर्वां स्थानं पश्यामि तन्ननु । यस्मिन्नवाप्यते भ्राता जननी जनकोऽपि वा १४
हे सुग्रीव सुहृत्त्वं ते दर्शितं खेचराधिप । व्रजाऽधुना निजं देशं भामंडल भवानपि ॥ १५ ॥
जीविताशां परित्यज्य दयितां जानकीमिव । ज्वलनं श्वः प्रवेष्टास्मि समं भ्रात्रा विसंशयम् १६
विभीषण न मे शोकस्तथा सीताऽनुजोद्भवः । यथा निरुपकारित्वं मम संबाधते त्वयि ॥ १७ ॥
उत्तमा उपकुर्वन्ति पूर्वं पश्चात्तु मध्यमाः । पश्चादपि न ये तेषामधमत्त्वं हतात्मनाम् ॥ १८ ॥
कृतपूर्वोपकारस्य साधोर्बन्धुविरोधिनः । यत्ते नोपकृतं किंचित्तेन दह्यतरामहम् ॥ १९ ॥
भो भामंडलसुग्रीवौ चितां रचयतां द्रुतम् । परलोकं गमिष्यामि कुरुतं युक्तमात्मनः ॥ २० ॥
ततो लक्ष्मीधरं स्प्रष्टुमिच्छन्तं रघुनंदनम् । अवारयन्महाबुद्धिर्जांबूनदमहत्तरः ॥ २१ ॥
मा स्प्राक्षीर्लक्ष्मणं देव दिव्यास्त्रपरिमूर्च्छितम् । प्रमादो जायते ह्येवं प्रायो हि स्थितिरीदृशी २२
प्रपद्यस्व च धीरत्वं कातरत्वं परित्यज । भवन्तीह प्रतीकाराः प्रायो विपदमीयुषाम् ॥ २३ ॥
प्रतीकारो विलापोऽत्र नानुदात्तजनोचितः । परमार्थानुसारेण क्रियतां धीरमानसम् ॥ २४ ॥

उपायः सर्वथा कश्चिदिह देव भविष्यति । जीविष्यति तव भ्राता ननु नारायणो ह्ययम् ॥२५॥
ततो विषादिनः सर्वे परं विद्याधराधिपाः । उपायचिंतनासक्ताश्चक्रुरित्यंतरात्मनि ॥ २६ ॥
दिव्या शक्तिरियं शक्या न निराकर्तुमौषधैः । उद्गते ज्योतिषामीशे दुःखं जीवति लक्ष्मणः॥२७॥
अथोत्सार्य कबंधादीन्निमिषार्द्धेन सा मही । किंकरैर्विहितोत्तुंगदूष्यप्राकारमडपा ॥ २८ ॥
सप्तकक्ष्माद्रिसंपन्ना कृतदिक्क्रयनिर्गमा । बहिः कवचितैर्योधैर्गुप्ता कार्मुकधारिभिः ॥ २९ ॥
प्रथमे गोपुरे नीलश्चापपाणिः प्रतिष्ठितः । द्वितीये तु नलस्तस्थौ गदाहस्तो घनोपमः ॥ ३० ॥
विभीषणस्तृतीये तु शूलपाणिर्महामनाः । स्रङ्माल्यचित्ररत्नांशुरीशानवदशोभत ॥ ३१ ॥
संनद्धबद्धतूणीरस्तुरीये कुमुदः स्थितः । सुषेणः पंचमे ज्ञेयः कुंतहस्तः प्रतापवान् ॥ ३२ ॥
सुपीवरभुजो वीरः सुग्रीवः स्वयमेव च । रराज भिंडिमालेन षष्ठे वज्रधरोपमः ॥ ३३ ॥
प्रदेशे सप्तमे राजमहारिपुबलांतकः । मंडलाग्रं समाकृष्य स्वयं भामंडलः स्थितः ॥ ३४ ॥
पूर्वद्वारेण संचारे शरभः शरभध्वजः । रराज पश्चिमे द्वारे कुमारो जांबवो यथा ॥ ३५ ॥
प्रदेशमौत्तरद्वारं व्याप्यामात्यौघसंकुलम् । स्थितश्चन्द्रमरीचिश्च बालिपुत्रो महाबलः ॥ ३६ ॥
एवं विरचिता क्षोणी खेचरेशैः प्रयत्निभिः । रराज द्यौरिवात्यर्थं निर्मलैरुडुमंडलैः ॥ ३७ ॥

यावन्तः केचिदन्ये तु समरादनिवर्त्तिनः । ते स्थिता दक्षिणामाशां व्याप्य वानरकेतवः ॥३८॥

एवं प्रयत्नाः कृतयोग्यरक्षाः संदेहिनो लक्ष्मणजीवयोगे ।
सविस्मयाः सोरुशुचः समानाः स्थिताः समस्ता गगनायनेशाः ॥ ३९ ॥
न तन्नरा नो ययवो न नागा न चापि देवा विनिवारयन्ति ।
यदात्मना संजनितस्य लभ्य—फलं नृणां कर्मरवेः प्रकाशम् ॥ ४० ॥

इत्यार्षे श्रीरविषेणाचार्यप्रोक्ते पद्मपुराणे शक्तिभेदरामविलापाभिधानं नाम त्रिषष्टितमं पर्व ॥ ६३ ॥

---

# अथ चतुःषष्टितमं पर्व ।

नियतं मरणं ज्ञात्वा लक्ष्मणस्य दशाननः । पुत्रभ्रातृवधं बुद्धौ चकारात्यन्तदुःखितः ॥ १ ॥
हा भ्रातः परमोदार ममात्यन्तहितोद्यतः । कथमेतामवाप्नोसि बंधावस्थामसंगताम् ॥ २ ॥
हा पुत्रौ सुमहावीर्यौ भुजाविव दृढौ मम । विधेर्नियोगतः प्राप्तौ भवतौ बंधनं नवम् ॥ ३ ॥
किं करिष्यति वः शत्रुरित्याकुलितमानसः । न वेद्मि दुरितात्माहं विरसं वा करिष्यति ॥ ४ ॥

भवद्भिरुत्तमैः प्रीतैर्बन्धदुःखं समागतैः । बाध्येऽहं नितरां कष्टं यदिदं मम वर्त्तते ॥ ५ ॥
एवं गजेन्द्रवद्बद्धनिजयूथमहागजः । अप्रकाशं परं शोकमसेवत स संततम् ॥ ६ ॥
शक्त्या हतं गतं भूमिं श्रुत्वा लक्ष्मीधरं परम् । संप्राप्ता जानकी शोकमकरोत्परिदेवनम् ॥ ७ ॥
हा भद्र लक्ष्मण प्राप्तस्त्वमवस्थामिमां हताम् । कृते मे मंदभाग्याया विनीत गुणभूषण ॥ ८ ॥
ईदृक्षमपि वांछामि भवन्तमहमीक्षितुम् । विमुक्ता हतदैवेन न लेभे पापकारिणी ॥ ९ ॥
भवन्तं तादृशं वीरं घ्नता पापेन शत्रुणा । क मे कृतो न संदेहः प्रवीरे मरणं प्रति ॥ १० ॥
वियुक्तो बंधुभिः भ्रातुरिष्टे संसक्तमानसः । अवस्थामागतोऽस्येतां कृच्छ्रादुत्तीर्य सागरम् ॥११॥
अपि नाम पुनः क्रीडाकोविदं विनयान्वितम् । पश्येयं चारुवाक्यं त्वां परमाद्भुतकारिणम् ॥१२॥
कुर्वन्तु सर्वथा देवास्तव जीवितपालनम् । विशल्यतां द्रुतं गच्छ सर्वलोकमनोहरः ॥ १३ ॥
एवं विलापिनी कृच्छ्राच्छोकिनी जनकात्मजा । भावप्रीतिभिरानीता खेचरीभिः प्रसांत्वनम् १४
ज्ञायते देवि नाद्यापि निश्चयो देवरस्य ते । अतो न वर्त्तते कर्त्तुमेतस्मिन्परिदेवनम् ॥ १५ ॥
भव धीरा प्रवीराणां भवत्येवेदृशी गतिः । भवंति च प्रतीकाराश्चिरं हि जगतीहितम् ॥ १६ ॥
इति विद्याधरीवाक्यात्किंचित्साऽभूदनाकुला । शृण्विदानीं यदेतस्मिञ्जातं लक्ष्मणपर्वणि ॥१७॥

प्राप्तो दुःखग्रहद्वारं पुरुषश्चारुदर्शनः । प्रभामंडलवीरेण प्रविशन्निति नोदिता ॥ १८ ॥
कस्त्वं कस्य कुतो वाऽसि किमर्थं वा विवक्षसि । तिष्ठ तिष्ठ समन्वक्ष्व नात्राविदितसंगमः १९
सोऽवोचदद्य मे मासः साग्रः प्राप्तस्य वर्त्तते । पद्मं समाश्रयामीति प्रस्तावो ननु लभ्यते ॥२०॥
अधुना दर्शये शीघ्रं जीवंतं यदि लक्ष्मणम् । द्रष्टुं भवति वांछा वस्तत्रोपायं वदाम्यहम् ॥२१॥
इत्युक्ते परितुष्टेन भामंडलमहीभृता । दत्त्वा प्रतिविधिं द्वारे नीतोऽसौ पद्मगोचरम् ॥ २२ ॥
संप्रयुज्य प्रणामं च स जगाद महादरः । मा खित्स्थास्त्वं महाराज कुमारो जीवति ध्रुवम् ॥२३॥
सुप्रभा नाम मे माता जनकः शशिमंडलः । देवगीते पुरेऽहं च चंद्रप्रतिमसंज्ञकः ॥ २४ ॥
जातुचिद्विचरन् व्योम्मि वेलाध्यक्षस्यसूनुना । सहस्रविजयाख्येन वैरिणाऽहं निरीक्षितः ॥ २५ ॥
ततो मैथुनको वैरं स्मृत्वा क्रोधं समीयुषा । तस्य जातं मया सार्द्धं रणे सुभटदारुणम् ॥ २६ ॥
ततोऽहं चंडरवया शक्त्या तेन समाहतः । खान्महेन्द्रोदयोद्याने नक्तं निपतितो घने ॥ २७ ॥
पतंतं मां समालोक्य तारकाबिंबसन्निभम् । साकेताधिपतिस्तार्क्षी भरतः समढौकत ॥ २८ ॥
शक्तिशल्यितवक्षश्च सिक्तश्चंदनवारिणा । तेनाहं करुणार्त्तेन साधुना जीवदायिना ॥ २९ ॥
शक्तिः पलायिता काऽपि जातं रूपं च पूर्वकम् । अधिकं च सुखं जातं तेन मे गंधवारिणा ३०

तेन मे पुरुषेन्द्रेण भरतेन महात्मना । जन्मान्तरमिदं दत्तं फलं यस्य त्वदीक्षणे ॥ ३१ ॥
अत्रान्तरे स संभ्रान्तः सुरूपो रघुनंदनः । प्रयच्छ भद्र जानासि तद्गंधोदकसंभवम् ॥ ३२ ॥
सोऽवोचद्देव जानामि श्रूयतां वेदयामि ते । पृष्टो हि स मया राजा तेन चेति निवेदितम् ॥३३॥
यथा किल समस्तोऽयं देशः पुरसमन्वितः । अभिभूतो महारोगैरासीदप्रतिकारकैः ॥ ३४ ॥
उरोघातमहादाहज्वरलालापरिस्रवाः । सर्वशूलारुचिच्छर्दिश्वयथुस्फोटकादयः ॥ ३५ ॥
क्रुद्धा इव परं तीव्राः सर्वे रोगास्तदाऽभवन् । यैरत्र विषये प्राणी नैकोऽप्यस्ति न पातितः ३६
केवलो द्रोणमेघाह्वः सामात्यपशुबांधवः । नृपो देव इवारोगः श्रुतो निजपुरे मया ॥ ३७ ॥
आह्वाय स मयाऽवाचि माम त्वं नीरुजो यथा । कालक्षेपविनिर्मुक्तं तथा मां कर्त्तुमर्हसि ॥३८॥
ततः सौरभसंरुद्धदूरदिग्वलयं जलम् । तेन सिक्तोऽहमानाद्य प्राप्तश्चोल्लाघतां पराम् ॥ ३९ ॥
न केवलमहं तेन वारिणाऽन्तःपुरं मम । पुरं देशश्च संजातं सर्वरोगविवर्जितम् ॥ ४० ॥
कर्ता रोगसहस्राणां वायुरत्यन्तदुःसहः । प्रणष्टो वारिणा तेन मर्मसंभेदकोविदः ॥ ४१ ॥
मयैवं सततं पृष्टो मामेतदुदकं कुतः । येनाऽऽश्चर्यमिदं शीघ्रं कृतं रोगविनाशनम् ॥ ४२ ॥
सोऽवोचच्छ्रूयतां राजन्नस्ति मे गुणशालिनी । विशल्या नाम दुहिता सर्वविज्ञानकोविदा ॥४३॥

यस्यां गर्भप्रपन्नायामनेकव्याधिपीडिता । देवी ममोपकाराऽभूत्सर्वरोगविवर्जिता ॥ ४४ ॥
जिनेन्द्रशासनासक्ता नित्यं पूजासमुद्यता । शेषेव सर्वबंधूनां पूजनीया मनोहरा ॥ ४५ ॥
स्नानोदकमिदं तस्या महासौरम्यसंगतम् । कुरुते सर्वरोगाणां यत्क्षणेन विनाशनम् ॥ ४६ ॥
ततस्तदहमाकर्ण्य द्रोणमेघस्य भाषितम् । परं विस्मयमापन्नाः संपदा तामयूजयम् ॥ ४७ ॥
नगरीतश्च निष्क्रम्य नाम्ना सत्त्वहितं मुनिम् । गणेश्वरं समप्राक्षं प्रणम्य विनयान्वितः ॥ ४८ ॥
ततः खेचरपृष्टोऽसौ समाख्यासीन्महायतिः । वैशल्यं चरितं दिव्यं चतुर्ज्ञानी सुवत्सलः ॥४९॥
विदेहे पौंडरीकाख्ये विजये स्वर्गसन्निभे । चक्री त्रिभुवनानंदः पुरे चक्रधरोऽभवत् ॥ ५० ॥
नाम्नाऽनंगशरा तस्य तनया गुणमंडला । अपूर्वा कर्मणां सृष्टिर्लावण्यप्लवकारिणी ॥ ५१ ॥
तां प्रतिष्ठपुराधीशः सामंतोऽस्य पुनर्वसुः । दुर्धीराहरदारोप्य विमानं स्मरचोदितः ॥ ५२ ॥
क्रुद्धाच्चक्रधरादाज्ञां संप्राप्यामुष्य किंकरैः । चिरं कृतवतो युद्धं विमानं चूर्णितं भृशम् ॥ ५३ ॥
चूर्ण्यमानविमानेन मुक्ता तेनाकुलात्मना । पपात नभसः कान्तिरिव चन्द्रस्य शारदी ॥ ५४ ॥
विद्यया पर्णलघ्व्याऽसौ पुनर्वसुनियुक्तया । अटवीमागता स्वैरं नाम्ना श्वापदरौरवाम् ॥ ५५ ॥
महाप्रतिभयाकारां महाविद्याभृतामपि । दुःप्रवेशां कृतध्वान्तां महाविटपसंकटैः ॥ ५६ ॥

नानावलीसमाश्लिष्टविविधोत्तुंगपादपाम् । पल्लवोद्भासितैर्मुक्तां भीतैरिव रवेः करैः ॥ ५७ ॥
तरक्षशरभद्वीपिव्याघ्रसिंहादिसेविताम् । उच्चावचखरक्षोणीं महाविवरसंगताम् ॥ ५८ ॥
अरण्यानीं गता सेयं महाभयसमागता । कान्ता शिखेव दीपस्य सीदति स्म वराकिका ॥५९॥
नदीतीरं समागम्य कृत्या दिगवलोकनम् । महाखेदसमायुक्ता स्मृतबंधुः स्म रोदिति ॥ ६० ॥
तेनाहं लोकपालेन देवेन्द्रप्रतिभासिना । सुचक्रवर्त्तिना जाता महादुर्ललितात्मिका ॥ ६१ ॥
विधिना वारयेनेमामवस्थामनुसारिता । किं करोमि परिप्राप्ता वनं दुःखनिरीक्षणम् ॥ ६२ ॥
हा तात सकलं लोकं त्वं पालयसि विक्रमी । कथं मामपरित्राणां विपिने नानुकंपसे ॥ ६३ ॥
हा मातस्तादृशं दुःखं कुक्षिधारणपूर्वकम् । विषह्य सांप्रतं कस्मात्कुरुषे नानुकंपनम् ॥ ६४ ॥
हा मातः करणच्छायापरिवर्गगुणोत्तमाम् । अमुक्तां क्षणमप्येकं कथं त्यजसि सांप्रतम् ॥ ६५ ॥
जातमात्रा मृता नाऽहं कस्माद्दुःखस्य भूमिका । अथवा न विना पुण्यैरभिवांछितमाप्यते ॥६६॥
किं करोमि क्व गच्छामि दुःखिनी संश्रयामि कम् । कं पश्यामि महाऽरण्ये कथं तिष्ठामि पापिनी ॥
स्वप्नः किमेष संप्राप्तं जन्मेदं नरके मया । सैव किं स्यादहं कोऽयं प्रकारः सहसोद्गतः ॥ ६८ ॥
एवमादि चिरं कृत्वा विप्रलापं सुविह्वला । पशूनामपि तीव्राणां मनोद्रवणकारणम् ॥ ६९ ॥

क्षुत्तृष्णापरिदग्धांगा शोकसागरवर्त्तिनी । फलपर्णादिभिर्वृत्तिमकरोद्दीनमानसा ॥ ७० ॥
अरण्यांबुजखंडानां शोभासर्वस्वमर्दनः । हिमकालस्तया निन्ये ध्रुवं कर्मानुभावतः ॥ ७१ ॥
श्वसन्पशुगणस्तीव्रः शोषितानेकपादपः । सोढस्तथैव रूक्षांगो ग्रीष्मसूर्यातपस्तया ॥ ७२ ॥
स्फुरच्चंडाचिरंज्योतिः शीतधारांधकारितः । घनकालोऽपि निस्तीर्णः प्रवृत्तौघो यथा तथा ॥७३॥
निश्छायं स्फुटितं क्षामं शीर्णकेशं मलावृतम् । वर्षोपहतचित्राभं स्थितं तस्याः शरीरकम् ॥७४॥
सूर्यालोकहतच्छाया क्षीणेव शशिनः कला । जाता तन्वी तनुस्तस्या लावण्यपरिवर्जिता ॥ ७५ ॥
कपित्थवनमानम्रं फलैः पाकाभिधूसरैः । श्रित्वा तातमनुध्याय करुणं सा स्म रोदिति ॥७६॥
जाता चक्रधरेणाऽहं प्राप्तावस्थामिमां वने । ध्रुवं कर्मानुभावेन सुपापेनान्यजन्मना ॥ ७७ ॥
इत्यश्रुदुर्दिनीभूतवदना वीक्षिताक्षितिः । फलान्यादाय सा शांता पतितानि स्वपाकतः ॥ ७८ ॥
शयनीयगतैः पुष्पैर्या स्वकेशच्युतैरपि । अग्रहीत्खेदमेवासौ स्थंडिले श्वेतकेवले ॥ ८० ॥
पितुः संगीतकं श्रुत्वा या प्रबोधमसेवत । सेयं शिवादिनिर्मुक्तैरधुना भीषणैः स्वनैः ॥ ८१ ॥
एवं वर्षसहस्राणि त्रीणि दुःखमहासहा । अकरोत्सा तपो बाह्यं प्रासुकाहारपारणा ॥ ८२ ॥
ततो निर्वेदमापन्ना त्यक्ताहारं चतुर्विधम् । निराशतां गता धीरा श्रिता सल्लेखनामसौ ॥ ८३ ॥

बाह्यं हस्तशताद्भूमिं न गंतव्यं मयेति च । जग्राह नियमं पूर्वं श्रुतं जैनेन्द्रशासने ॥ ८४ ॥
नियमावधितोऽतीते षड्रात्रेऽथ नभश्चरः । लब्धिदास इति ख्यातो वंदित्वा मेरुमाव्रजत् ॥८५॥
तामपश्यत्ततो नेतुमारेभे तां समुद्यतः । पितुः स्थानं निषिद्धश्च तया सल्लेखनोक्तितः ॥ ८६ ॥
लब्धिदासो लघु प्राप्तः सकाशं चक्रवर्त्तिनः । समं तेन समायातस्तमुद्देशमसौ गतः ॥ ८७ ॥
अथ तामतिरौद्रेण शयुनाऽतिस्थवीयसा । भक्ष्यमाणामसौ दृष्ट्वा समाधानप्रदोऽभवत् ॥ ८८ ॥
प्राप्तसल्लेखनां क्षीणां संवृत्तामपरामिव । तादृशीं तां सुतां दृष्ट्वा चक्री निर्वेदमागतः ॥ ८९ ॥
समं पुत्रसहस्राणां द्वाविंशत्या गतस्पृहः । महावैराग्यसंपन्नः श्रमणत्वमुपागतः ॥ ९० ॥
कन्या चाऽथ क्षुधार्त्तेन प्राप्तेनातिस्थवीयसा । भक्षिताऽजगरेणागात्सती सानत्कुमारताम् ॥ ९१ ॥
जानत्याऽपि तया मृत्युं न समुत्सारितः शयुः । माभूत्स्वल्पापि पीडाऽस्य काचिदितित्यनुकंपया ॥
उत्सार्य खेचरान् संख्ये समस्तांश्च पुनर्वसुः । तदानंगशरामिष्टामपश्यद्विरहावनौ ॥ ९३ ॥
द्रुमसेनमुनेः पार्श्वे गृहीतं श्रमणव्रतम् । अत्यंतदुःखितस्तप्त्वा तपः परमदुश्चरम् ॥ ९४ ॥
कृत्वा निदानमेतस्याः कृतेऽयं प्राप्तपंचताम् (तः) । सुरो जातश्च्युतश्चायं जातो लक्ष्मणसुंदरः ९५
प्रभ्रष्टा सुरलोकाच्च जाताऽनंगशरा चरी । सुतेयं द्रोणमेघस्य विशल्येति प्रकीर्त्तिता ॥ ९६ ॥

सैतस्मिन्नगरे देशे भरते वा महागुणा । पूर्वकर्मानुभावेन संजाताऽत्यन्तमुत्तमा ॥ ९७ ॥
परमं स्नानवादीदं तेन तस्या महागुणम् । सोपसर्गं कृतं पूर्वं तया येन महातपः ॥ ९८ ॥
अनेन वारिणाऽमुस्मिन्देशेऽयं विषमोऽनिलः । महारोगकरो जातः क्षयं शासितविष्टपः ॥ ९९ ॥
कुतोऽयमीदृशो वायुरिति पृष्टेन भाषितम् । मुनिना भरतायैवं तदा कौतुकयोगिने ॥ १०० ॥
गजाह्वान्नगरादेत्य विंध्यो नामा महाधनः । अयोध्यां सार्थवाहेशः खरोष्ट्रमहिषादिभिः ॥ १०१ ॥
मासानेकादशामुष्यां सन्नगर्यामसौ स्थितः । तस्यैकमहिषस्तीव्ररोगभारेण पीडितः ॥ १०२ ॥
पुरमध्ये महादुःखं कृत्वा कालं व्रणान्वितः । अकामनिर्जरायोगाद्देवभूयमशिश्रियत् ॥ १०३ ॥
जातो वायुकुमारोऽसावश्वकेतुर्महाबलः । बाह्यावर्त्त इति ख्यातो वायुदेवमहेश्वरः ॥ १०४ ॥
श्रेयस्करपुरः स्वामी रसातलगतो महान् । असुरो भासुरः क्रूरो मनोयातक्रियासहः ॥ १०५ ॥
अज्ञासीत्सावधिज्ञानः प्राप्तपूर्वपराभवम् । सोऽहं महिषकोऽभूवं प्राप्तोऽयोध्यां तदा व्रणी ॥१०६॥
क्षुत्तृष्णापरिदिग्धांगो महारोगनिपीड़ितः । रथ्याकर्दमनिर्मग्नस्ताडितो जनसंपदा ॥ १०७ ॥
कृत्वा मे मस्तके पादं तदाऽयासीज्जनोऽखिलः । पतितस्य विचेष्टस्य निर्दयो विड्मलांचितम् ॥
अचिरान्निग्रहं घोरं तस्य चेन्न करोम्यहम् । अनर्थकं सुरत्वं मे तदेवं जायते महत् ॥ १०९ ॥

इति ध्यात्वा पुरेऽमुस्मिन् सदेशे क्रोधपूरितः । प्रावर्त्तयदसौ वायुं नानारोगसमावहम् ॥ ११० ॥
सोऽयं भीतो विशल्याया वारिणा प्रलयं क्षणात् । भवंति हि बलीयांसो बलिनामपि विष्टपे १११
यथा सत्त्वहितेनेदं भरताय निवेदितम् । भरतेनापि मे तद्वन्मया ते पद्म वेदितम् ॥ ११२ ॥
अभिषेकजलं तस्या तदा नेतुमतित्वरम् । यत्नं कुरुत नास्त्यन्या गतिर्लक्ष्मणजीविते ॥ ११३ ॥

इति स्थितानामपि मृत्युमार्गे जनैरशेषैरपि निश्चितानाम् ।
महात्मनां पुण्यफलोदयेन भवंत्युपायो विहितोऽसुदायी ॥ ११४ ॥
अहो महान्तः परमा जनास्ते येषां महापत्तिसमागतानाम् ।
जनो वदत्युद्भवनाभ्युपायं रवेः समस्तत्वनिवेदनेन ॥ ११५ ॥

इत्यार्षे श्रीरविषेणाचार्यप्रोक्ते पद्मपुराणे विशल्यापूर्वभवाभिधानं नाम चतुःषष्टितमं पर्व ॥ ६४ ॥

---

# अथ पंचषष्टितमं पर्व ।

प्रतीन्दोर्वचनं श्रुत्वा राघवोऽत्यन्तसंमदः । समं विद्याधराधीशैर्विस्मितस्तमपूजयत् ॥ १ ॥
अंजनाजविदेहाजसुताराजास्ततः कृताः । अयोध्यां गमिनः कृत्वा सन्मंत्रं निश्चितं द्रुतम् ॥ २ ॥

ततश्चितितमात्रेण ते ययुर्यत्र पार्थिवः । भरतः प्रवरः कीर्त्या प्रतापी गुणसंगतः ॥ ३ ॥
सुप्तस्योत्थाप्यमानस्य सहसास्यासुखासिका । मा भूदिति सुखं गीतं वैदेहादिभिराश्रितम् ॥४॥
ततः संगीतमाकर्ण्य दिव्यं श्रुतिमनोहरम् । शनैर्भावसमारूढमुत्तस्थौ कोशलेश्वरः ॥ ५ ॥
ज्ञापिताः सेवितद्वारास्ततस्तस्मै समागताः । वैदेह्या हरणं प्रोचुर्निपातं लक्ष्मणस्य च ॥ ६ ॥
अथ शोकरसादुग्रात्क्षणमात्रभुवः परम् । राजा क्रोधरसं भेजे परमं भरतश्रुतिः ॥ ७ ॥
महाभेरीध्वनिं चाशु रणप्रीतिमकारयत् । सकला येन साकेता संप्राप्ताऽऽकुलतां परम् ॥ ८ ॥
लोको जगाद किं त्वेतद्वर्त्तते राजसद्मनि । महान् कलकलः शब्दः श्रूयतेऽत्यन्तभीषणः ॥ ९ ॥
किन्तु रात्रौ निशीथेऽस्मिन् काले दुष्टमतिः परः । अतिवीर्यसुतः प्राप्तो भवेदापातपंडितः ॥१०॥
कश्चिदंकगतां कान्तां त्यक्त्वा सन्नद्धुमुद्यतः । सन्नाहानिरपेक्षोऽन्यः सायके करमर्पयत् ॥ ११ ॥
मुग्धबालकमादाय काचिदंके मृगेक्षणा । हस्तं स्तनतटे न्यस्य चक्रे दिगवलोकनम् ॥ १२ ॥
काचिदीर्ष्याकृतं त्यक्त्वा निद्रारहितलोचना । सुप्तमाश्रयते कान्तं शयनीयैकपार्श्वगम् ॥ १३ ॥
पार्थिवं प्रथमः कश्चिद्ध्वनी कान्तामुदाहरन् । कान्ते बुद्ध्यस्व किं शेषे किमपीदमशोभनम् ॥१४॥
राजालये समुद्योतो लक्ष्यते जात्वलक्षितः । सन्नद्धा रथिनो मत्ता करिणोऽमी च संहिताः १५

नीतिज्ञैः सततं भाव्यमप्रमत्तैः सुपंडितैः । उत्तिष्ठोत्तिष्ठ गोपाय स्वापतेयं प्रयत्नतः ॥ १६ ॥
शातकौंभानिमान्कुंभान् कलधौतमयांस्तथा । मणिरत्नकरंडांश्च कुरु भूमिगृहान्तरे ॥ १७ ॥
पट्टवस्त्रादिसंपूर्णानिमान् गर्भालयान् द्रुतम् । तालयान्यदपि द्रव्यं दुःस्थितं सुस्थितं कुरु ॥१८॥
शत्रुघ्नोपि सुसंभ्रान्तो निद्रारुणितलोचनः । आरुह्य द्विरदं शीघ्रं घंटाटंकारनादिनम् ॥ १९ ॥
सचिवैः परमैर्युक्तः शस्त्राधिष्ठितपाणिभिः । विमुंचन् बकुलामोदं चलदम्बरपल्लवः ॥ २० ॥
भरतस्यालयं प्राप्तस्तथाऽन्ये नरपुंगवाः । शस्त्रहस्ताः सुसंनद्धा नरेन्द्रहिततत्पराः ॥ २१ ॥
यच्छन्नाज्ञां नरेशानां युद्धाय स्वयमुद्यतः । विनीताधिपतिः प्रोक्तो नत्वा भामंडलादिभिः २२
दूरे लंकापुरी देव गन्तुं नार्हति तां विभुः । क्षुब्धोर्मिजलजो घोरो वर्त्तते सागरोत्तरे ॥ २३ ॥
मया किं तर्हि कर्त्तव्यमिति राज्ञि कृतस्वने । उच्चारितं विशल्यायाश्चरितं तैर्मनोहरम् ॥ २४ ॥
अघप्रमथनं नाथ पुण्यं जीवितपालनम् । द्रोणमेघसुतास्नानवारिदानं द्रुतं भज ॥ २५ ॥
प्रसादं कुरु यास्यामो यावन्नोदेति भास्करः । हतोऽरिमथनः शक्त्या दुःखं तिष्ठति लक्ष्मणः २६
भरतेन ततोऽवाचि किं वा ग्रहणमंभसा । स्वयं सा सुभगा तत्र यातु द्रोणघनात्मजा ॥ २७ ॥
मुनीशेन समादिष्टा तस्यैवासौ सुभामिनी । स्त्रीरत्नमुत्तमं सा हि कस्य वाऽन्यस्य युज्यते २८

ततो द्रोणघनाह्वस्य सकाशं प्रेषितो निजः । स चाऽपि कुपितो योद्धुं मानस्तंभसमुद्यतः ॥ २९ ॥
संक्षुब्धास्तनयास्तस्य सन्नद्धाः सचिवैः सह । परमाकुलतां प्राप्ता महादुर्ललितक्रियाः ॥ ३० ॥
भरतस्य ततो मात्रा स्वयं गत्वा महादरम् । प्रतिबोधमुपानीतः सा तेन तनयामदात् ॥ ३१ ॥
सा भामंडलचन्द्रेण विमानशिखरं निजम् । आरोपिता महारथ्यं कान्तिपूरितदिङ्मुखा ॥ ३२ ॥
सहस्रमधिकं चान्यत्कन्यानां सुमनोहरम् । राजगोत्रप्रसूतानां कृतं गामि समं तथा ॥ ३३ ॥
ततो निमेषमात्रेण प्राप्ता संग्राममेदिनीम् । अर्घ्यादिभिः कृताभ्यर्चाः सर्वैः खेचरपुंगवैः ॥ ३४ ॥
अवतीर्णा विमानाग्रात्ततः कन्याभिरावृता । चारुचामरसंघातैः वीज्यमाना शनैः सुखम् ॥ ३५ ॥
पश्यंती तुरगान् द्वारे मत्तांश्च वरवारणान् । महत्तरैः कृतानुज्ञा पुंडरीकनिभानना ॥ ३६ ॥
यथा यथा महाभाग्या विशल्या सोपसर्पति । तथा तथाऽभजत्सौम्यं सुमित्रातनयोऽद्भुतम् ३७
प्रभाकरकरा शक्तिस्ततो लक्ष्मणवक्षसः । चाकिता दुष्टयोषेव कामुकात्परिनिःसृता ॥ ३८ ॥
स्फुरत्स्फुलिंगज्वाला च लंघयन्ती द्रुतं नभः । उत्पत्य वायुपुत्रेण गृहीता वेगशालिना ॥ ३९ ॥
दिव्यस्त्रीरूपसंपन्ना ततः संगतपाणिका । सा जगाद हनूमंतं संभ्रान्ता बद्धवेपथुः ॥ ४० ॥
प्रसीद नाथ मुंचस्व न मे दोषोऽस्ति कश्चन । कुत्सितास्मद्विधानां हि प्रेष्याणां स्थितिरीदृशी ॥

अमोघविजया नाम प्रज्ञप्तेरहकं स्वसा । विद्या लोकत्रये ख्याता रावणेन प्रसाधिता ॥ ४२ ॥
कैलासपर्वते पूर्वं बालौ प्रतिमया स्थिते । सन्निधौ जिनबिंबानां गायता भावितात्मना ॥ ४३ ॥
निजे भुजे समुत्कृत्य शिरातंत्रीं मनोहराम् । उपवीणायिता दिव्यं जिनेन्द्रचरितं शुभम् ॥ ४४ ॥
लब्धाऽहं दशवक्त्रेण धरणान्नागराजतः । कंपितासनकं प्राप्तात्प्रमोदं बिभ्रता परम् ॥ ४५ ॥
अनिच्छन्नप्यसौ तेन रक्षसां परमेश्वरः । मां परिग्राहितः कृच्छ्रात्स हि ग्रहणदुर्विधः ॥ ४६ ॥
साऽहं न कस्यचिच्छक्या भुवनेऽत्र व्यपोहितुम् । विशल्यासुंदरीमेकां मुक्त्वा दुःसहतेजसाम् ४७
मन्ये पराजये देवान् बलिनो नितरामपि । अनया तु विकीर्णाहं महत्या दूरगोचरा ॥ ४८ ॥
अनुष्णं भास्करं कुर्यादशीतं शशलक्ष्मणम् । अनया हि तपोऽत्युग्रं चरितं पूर्वजन्मनि ॥ ४९ ॥
शिरीषकुसुमासारं शरीरमनया पुरा । नियुक्तं तपसि प्रायो मुनीनामपि दुःसहे ॥ ५० ॥
एतावतैव संसारः सुसारः प्रतिभाति मे । ईदृशानि प्रसाध्यन्ते यत्तपांसीह जंतुभिः ॥ ५१ ॥
वर्षाशीतातपैर्घोरैर्महावातसुदुःसहैः । एषा न कंपिता तन्वी मंदरस्येव चूलिका ॥ ५२ ॥
अहो रूपमहो सत्त्वमहो धर्मदृढं मनः । अशक्यं ध्यातुमप्यस्याः सुतपोऽन्यांगनाजनैः ॥ ५३ ॥
सर्वथा जिनचन्द्राणां मतेनोद्वहते तपः । लोकत्रये जयत्येकं यस्येदं फलमीदृशम् ॥ ५४ ॥

अथवा नैव विज्ञेयमाश्चर्यमिदमीदृशम् । प्राप्यते येन निर्वाणं किमन्यत्तस्य दुष्करम् ॥ ५५ ॥
पराधीनाक्रिया साऽहं तपसा निर्जिताऽनया । व्रजामि स्वं पदं साध्ये क्षम्यतां दुर्विचेष्टितम् ॥५६॥
एवं कृतसमालापां तत्त्वज्ञः शक्तिदेवताम् । विसृज्यावस्थितो वातिः स्वसैन्येऽद्भुतचेष्टितः ॥५७॥
सुता तु द्रोणमेघस्य ह्रियालंकृतदेहिका । पादपद्मद्वयं पद्मं प्रणम्य विहितांजलिः ॥ ५८ ॥
विद्याधरमहामंत्रिवचोभिः कृतशंसना । वंदिता खेचरैरन्यैराशीभिरभिनंदिता ॥ ५९ ॥
शक्रस्येव शची पार्श्वे लक्ष्मणस्य सुलक्ष्मणा । अवस्थिता महाभाग्या सखीवचनकारिणी ॥६०॥
मुग्धा मुग्धमृगीनेत्रा पूर्णचन्द्रनिभानना । महानुरागसंभारप्रेरितोदारमानसा ॥ ६१ ॥
परिष्वज्य रहो नाथं सुखसुप्तं महीतले । सुकुमारकरांभोजसंवाहनसुचारुणा ॥ ६२ ॥
गोशीर्षचन्दनेनैवमन्वलिंपत सर्वतः । तथा पद्ममपि व्रीडा किंचित्कंपितपाणिका ॥ ६३ ॥
शेषाः कन्या यथायोग्यं शेषाणां खेचरेशिनाम् । चंदनेनास्पृशद्गात्रं विशल्याहस्तसंगिना ॥ ६४ ॥
विशल्याहस्तसंस्पृष्टं चन्दनं पद्मवाक्यतः । कान्तामिन्द्रजितादीनामुपनीतं यथाक्रमम् ॥ ६५ ॥
शीतलं तं समाघ्राय कृत्वांगेषु च सादरम् । निर्वृतिं परमां प्राप्ताः शुद्धात्मानो गतज्वराः ॥६६॥
अन्ये च योधाः क्षतविक्षतांगा द्विपास्तुरंगाः पदकारिणश्च ।

अभ्युक्षितास्तत्सलिलेन जाता प्रणष्टशल्या नवभास्करांगाः ॥ ६७ ॥
जन्मान्तरं प्राप्त इवाथ कान्तः स्वभावनिद्रामिव सेवमानः ।
उत्थाप्यते स्म प्रवरैर्नितान्तं संगीतकैर्वेणुनिनादगीतैः ॥ ६८ ॥
ततः शनैरुच्छ्वसितोरुवक्षो नेत्रे समुन्मील्य तिगिंछताम्रे ।
विक्षिप्तबाहुः शनकैर्निकुंच्य लक्ष्मीधरोऽमुंचत मोहशय्याम् ॥ ६९ ॥
त्वत्कोपपादांगशिलामिवासौ रणक्षितिं देव इवोद्यकायः ।
उत्थाय रुष्टः ककुभो निरीक्ष्य क्वासौ गतो रावण इत्युवाच ॥ ७० ॥
ततः प्रफुल्लांबुजलोचनेन महाभिनंदं भजताऽग्रजेन ।
उदाररोमांचसुकर्कशेन प्रोक्तः परिस्वज्य लसद्भुजेन ॥ ७१ ॥
कृतार्थवत्तात दशाननोऽसौ हत्वा भवन्तं विजहार शक्त्या ।
त्वमप्यमुष्याश्चरितेन जीवं भूयो भुजः संस्तुतकन्यकायाः ॥ ७२ ॥
निःशेषतश्चास्य निवेदितं तच्छक्त्या हतिप्रेरणवस्तुवृत्तम् ।
अपूर्वमाश्चर्यमुदारभावं सुविस्मितैर्जांबवसुधराद्यैः ॥ ७३ ॥

तावत्त्रिवर्णाब्जविलासिनेत्रां शरत्समृद्धेन्दुसमानवक्त्राम् ।
शातोदरीं दिग्गजकुंभशोभिस्तनद्वयां नूतनयौवनस्थाम् ॥ ७४ ॥
शरीरबद्धामिव मन्मथस्य क्रीडां विशालालससन्नितंबाम् ।
संगृह्य शोभामिव सार्वलोकां विनिर्मितां कर्मभिरेकतानैः ॥ ७५ ॥
तां वीक्ष्य लक्ष्मीनिलयोऽतिकस्थामचिन्तयद्विस्मयरुद्धचित्तः ।
लक्ष्मीरियं किन्नु सुरेश्वरस्य कान्तिर्नु चन्द्रस्य नु भानुदीप्तिः ॥ ७६ ॥
ध्यायन्तमेवं परिगम्य योषा–स्तमेवमूचुः कुशलप्रधानाः ।
स्वामिन्विवाहोत्सवमेतया ते द्रष्टुं जनो वांछति संगतोऽयम् ॥ ७७ ॥
कृतस्मितोऽसावगदत्समीपे ससंशये युक्तमिदं कथं नु ।
ऊचुः पुनस्ते ननुवृत्त एव स्पर्शो न याते प्रकटस्तु नासीत् ॥ ७८ ॥
भवत्प्रभावक्षतसर्वविघ्नं पाणिग्रहं नाथ भज त्वमस्याः ।
इत्यर्थनाद्गौरवतश्च वाक्या–दियेष लक्ष्मीनिलयो विवाहम् ॥ ७९ ॥

क्षणविरचितसर्वश्लाघ्यकर्त्तव्ययोगः पवनपथविहारिस्फीतभूतिप्रपंचः ।
अभवदमरसंपत्कल्पितानंदतुल्यः प्रधनभुवि विशल्यालक्ष्मणोद्वाहकल्पः ॥८०॥
इति विहितसुचेष्टाः पूर्वजन्मन्युदाराः परमपि परिजित्य प्राप्तमायुर्विनाशम् ।
द्रुतमुपगतचारुद्रव्यसंबंधभाजो विधुरविगुणतुल्यां स्वामवस्थां भजन्ते ॥८१॥

इत्यार्षे श्रीरविषेणाचार्यप्रोक्ते श्रीपद्मचरिते विशल्यासमागमाभिधानं नाम पंचषष्टितमं पर्व ॥ ६५ ॥

